श्रीहरि शरणम् ।
नमो भगवते श्रीनियमानन्दाय ।

# श्रुत्यन्तसुरद्रुमस्य

## भूमिका ।

—:-०-:—

अयि ! विद्यासुधास्वादैकदीक्षा विपश्चिद्वराः ! अवधीयताम् ।

अयं श्रुत्यन्तसुरद्रुमाख्यो ग्रन्थः श्रीहरिप्रियसिद्धान्तानुयायिना निखिलशास्त्रपारावारपारीणेन पण्डितप्रकाण्डेन श्रीपुरुषोत्तमप्रसादाऽभिधेन विपश्चिद्वरेण सन्दर्भित इति ।

स च खवसुरसभूम्यात्मके (१६८०) वैक्रमेऽब्दे कुरुक्षेत्रान्तर्गत-जगाधर्याह्वये नगरे परम्परया लब्धार्कसिद्धान्ताऽनुयायित्वस्य गौडद्विजवंशावतंसस्य श्रीनारायणप्रसादशर्म्मणोऽलञ्चकार जनिना भवनम् । सर्वेषामपि पूर्वजानां श्रीश्रीभगवन्निम्बार्काचार्यसिद्धान्तनिर्वाहकाचार्य-श्रीमत्स्वभूदेवाचार्य-पीठाऽधिष्ठितैर्दीक्षितत्वात् स्वयमपि तदानीन्तनतत्पीठाधिष्ठितेभ्यः श्रीमद्धर्मदेवाचार्यपादेभ्यः परिश्रयामासात्मानं दीक्षयेति ।

अथश्चाभूदात्मजस्यैकस्यापि पित्रोः प्रेमास्पदमिति क्रीडालोलैक-चित्तस्य नवहायनात्मकवयस्कस्याप्यस्याध्ययनाय पराजितमनाः । तदालोक्य चास्य जनको व्यथितमनाः सदध्ययनाय श्रीगुरुचरणेभ्योऽर्पयामासैनमिति । तेऽप्युपादिशन्ननेकान् सदुपदेशानवगम्यैनं सुमतिम् । तमनुष्ठापयामास च सर्वविद्याधिदेवतायाः श्रीमतो भगवतो हयग्रीवस्य मन्त्रराजम् । सांवत्सरिकेण प्रसन्नस्तेन स्वप्ने सहृदय तमाज्ञापयामास—वरं वृणीष्वेति, भगवान् श्रीमद्धयग्रीवः । तदाञ्जलि-समानीतेन नतेन तेनोपस्थायोदित— महाराजाऽनुगृहीतोऽस्मिचेद्, दीयतां महाभाचार्यदेवस्य पितृदेवस्य चेच्छितो निगमतत्त्वदर्शि-भवनात्मक स्वाचार्यचरणानुरतिभवनात्मको वरः । सोऽप्यन्तरधाद् ॐमित्युक्त्वेति । प्रस्थापितं वाचिकमिदं स्वपितृचरणं प्रति स्वजनपदे । सोऽपि प्रातिष्ठिपत् क्रीडासक्तोऽप्याविदस्त सँस्तवैवाध्ययनाय

कथनमिति । ततोऽध्येतुमारब्धमेकान्तचित्तेन सता तेनाऽपि महात्मना भूत्वा, त्रिषु वर्षेषु पूर्णां विद्यामधिगम्य चाचार्याज्ञामागमत् स्वपितृभवनं प्रति । विजित्यानेकशास्त्रवेदीयान् पाषण्डिनः प्रासीसरच्चात्मगतं वैष्णवधर्ममिति । व्यरीरचच्चाचार्याज्ञया सविशेषनिर्विशेषप्रतिपादनपरं श्रुतिस्मृत्युदितसारगर्भितं श्रीकृष्णस्तवस्य व्याख्यारूपं "श्रुत्यन्तसुरद्रुमं" नाम ग्रन्थम् ।

भूयोऽप्यचीकरद्वयाख्यं विविच्य स । पुनरपि पूर्वमिवादिदेश भगवाञ्छ्रीमदाचार्यः । तदाऽयाचि स्वरचितग्रन्थे त्वदीया हस्तलिपिस्तेन । तत्रापि भगवताऽपि समुचितमस्तीति तां ग्रन्थद्वये श्रीगुरुचरणाभिवाद्य च तद्गृहीत्वा तेभ्यः स्वरचितग्रन्थमादायायासीत् स्वसदनमिति ।

संप्रति नश्चापरो विद्वज्जनाश्चर्यावहः "परतत्त्वनिर्णयो" नाम ग्रन्थरत्नम् । समग्रो नेदानीमुपलभ्यते सोऽप्यत्यन्तान्वेषणेऽपीति खिन्नमस्ति नश्चेतः ।

एतादृशान् उत्तमोत्तमान् पूर्वाचार्यप्रणीतान् ग्रन्थवरान् नष्टप्रायान् दृष्ट्वाऽत्यन्तायासेनान्विष्याय "श्रुत्यन्तसुरद्रुमाभिधो" ग्रन्थः स्वमनस्तद्ग्रन्थजीर्णोद्धरणदीक्षेण श्रीवृन्दावननिवासिना मया पण्डितकिशोरदासेन वङ्गानां वर्द्धमाननगरवास्तव्यानां, श्रीमत्प्रभुपादाचार्यपादसमाश्रित-श्रीश्रीमधुसूदनशरणदेवपादानामादेशानुसारेण मुद्रयितुं वाराणसीस्थश्रीयुतहरिदासगुप्तायादायि । बहुश्च प्राचीनग्रन्थोद्धरणाय बद्धकटिना तेनाऽप्यात्मीयपरमोदारतया लोकोपकाराय सु श्रुजनपरस्परस्य श्रुत्यन्तसुरद्रुमाभिधो ग्रन्थः सम्मुद्य प्राकाशि । अतोऽयमप्यनेकशो धन्यवादार्हः ।

निवेदकः विद्वद्वैष्णवपरिचर्योत्सुको वृन्दावननिवासी

पं० किशोरदासो वंशीवटस्थः ॥

श्रीहरये नमः ।

श्रुत्यर्थतत्सुरद्रुमे १३९ पत्रे, ११ पङ्क्तौ ॥ सोमस्येत्यादि ॥ यदि तावत् सोमयागयोरैकरूप्येण भावनायां करणत्वेनैवान्वयः । सोमेन यागेनेष्टं भावयेदिति । तत उभयविधाने वाक्यभेदः । सोमस्य यागवत् फलभावनाकरणत्वेन प्राधान्यापत्तेश्च । यागार्थत्वानुपपत्तिश्च । यागे द्रव्यत्वानुपपत्तिश्च । प्रत्ययवाच्यभावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षाया निवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात् । यदि च वैयधिकरण्येनान्वयः । तत्र न तावद् यागेन सोममित्यन्वयः । समानपदोपात्तत्वात् प्रत्ययवाच्यफलभावनाकरणत्वेनान्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्ते । यागस्य सोमार्थत्वापत्तिश्च । नचेष्टापत्ति । अदृष्टद्वयापत्तेः । न हि यागस्य सोमार्थत्वं दृष्टद्वारेण सम्भवति । व्रीहिषु अवघातेनेव यागेन सोमे कस्य चिददृष्टस्याजननात् । अतस्तेन तावत् सोमे किञ्चिददृष्टं जननीयं, प्रोक्षणेनेव व्रीहिषु । तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेनान्वयो वक्तव्य. । भावनाकरणत्वं च भावनाभाव्यनिर्वर्त्तकत्वेने युक्तम । नच सोमोऽदृष्टमन्तरेण फलं जनयितुं समर्थः । महैर्जुहोतीति वाक्यविहितहोमेन तस्य भस्मीभूतत्वात् । अतोऽदृष्टद्वयापातात् यागस्य सोमार्थत्वमिति न, यागेन सोमं भावयेदित्यन्वय सम्भवति । करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च । अथ सोमेन यागं भावयेदित्यन्वयः । तत्र यद्यपि सोमस्य यागार्थत्वाद् यागनिर्वृत्तिरेव प्रयोजनं लभ्यते इति नादृष्टद्वयापत्तिः । नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः । करणत्वेनैवान्वयात् । तथाप्यप्राप्तत्वाद् भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव । ननु यजेतेत्यत्र यागस्य न करणत्वेन, नापि साध्यत्वेनोपस्थितिः । तद्वाचकतृतीयाद्यभावात् । किन्तु भावनायां यागसम्बन्धमात्र प्रतीयते । यागस्य तु भावनासम्बन्धः करणत्वेन, साध्यत्वेन च सम्भवति । तत्र करणत्वांशमादाय फलसम्बन्ध, साध्यत्वांशमादाय गुणसम्बन्धश्च स्यादितिचेन्मैवम् । यद्यपि भावनायां यागस्य सम्बन्धमात्रं प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वेन उपस्थितिः सम्भवति । विरोधात् । तदवश्य यागेन स्वर्गं भावयेदिति करणत्वेनान्वये सति पश्चात्, सोमेन यागं भावयेदिति साध्यत्वेलाभ-

ये वक्तव्यः । ततश्च वाक्यमेव । नच प्रत्ययाभिहितभावनास्वरूपे
यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तम् । कारकाणामेव क्रियान्व-
यात् । तत् सिद्धं सोमस्य न सामानाधिकरण्येन वैयधिकरण्येन
वान्वयः संभवति । ननु यजेतेत्यत्र प्रत्ययाभिहितभावनाया. करणा-
काङ्क्षायां यथा यागं करणत्वेनान्वेति तथेतिकर्तव्यताकाङ्क्षायां सो-
मस्येतिकर्तव्यतात्वेन भावनायामन्वयोऽस्तु, किं मत्वर्थलक्षणयेति
चेन्न । सोमेनेति तृतीयया करणत्वस्यावाचिन्या सोमस्येतिकर्तव्यता-
त्वाऽनभिधानात् । तत्र यदीतिकर्तव्यतान्वं लक्षणयोच्यते ततो
वरं सोमपदे प्रकृतिभूते मत्वर्थलक्षणा । गुणे त्वन्याय्यकल्पनेति
न्यायात् । अर्थवादो वा प्रायदर्शनादित्यधिकरणोक्तासंजातविरो-
धित्वन्यायेनान्त्यप्रत्यय एव लक्षणेतिचेत् तथापि सोमस्येतिकर्त-
व्यतात्वेनान्वयानुपपत्तिः । सिद्धस्य वस्तुन इतिकर्तव्यतात्वाभावा-
त् क्रियाया एवेतिकर्तव्यतात्वात् । द्रव्यस्य केवलमङ्गत्वात् । अत
एवेतिकर्तव्यतात्वाभावाद् द्रव्यस्य प्रकरणाद्ग्रहणम् । यथाहुः ।
नाऽवान्तरक्रियायोगादृते वाक्योपकल्पितात् * गुणद्रव्ये कथम्भा-
वं गृह्णीत प्रकृतः क्रतु इति । तदेतदपि वक्तव्यम् । किञ्च । ज्योतिष्टोमेन
यजेतेति हि यागस्योत्पत्तिवाक्यं, नाधिकारवाक्यम् । ज्योतिष्टोमेन
स्वर्गकामो यजेतेत्यस्याधिकारवाक्यत्वात् । उत्पत्तिवाक्ये च नेतिक-
र्तव्यताकाङ्क्षा । इष्टविशेषाकाङ्क्षाकलुपितत्वेनेतिकर्तव्यताकाङ्क्षाया
विस्पष्टमनुत्थानात् । तत् सिद्धं सोमस्य नेतिकर्तव्यतात्वेन भावना-
यामन्वयः । तस्माद्विशिष्टविधावन्वयानुपपत्त्याऽवश्यं मत्वर्थलक्षणा
श्राश्रयेति ॥

श्रीगोपालाय नमः ॥
श्रीमते निम्बार्काय नमः ॥

# अथ श्रुतिसिद्धान्तमञ्जरी ।

## सविशेषनिर्विशेषश्रीकृष्णस्तवराजव्याख्या ।

---

श्रीमुकुन्दं जगद्योनिं ज्ञानानन्दमयं गुरुम् ॥
प्रणम्य क्रियते कृष्णं श्रुतिसिद्धान्तमञ्जरी ॥ १ ॥

अथ सविशेषनिर्विशेषाख्यः पूर्वाऽऽचार्य्यप्रणीतः श्रीकृष्णस्तवराजो मिताऽक्षरैर्यथामति व्याक्रियते । तत्र तावज्जगत्कारणत्वेन भगवन्तं स्तौति—

**शान्तिकान्तिगुणमन्दिरं हरिं**
**स्थेमसृष्टिलयमोक्षकारणम् ॥**
**व्यापिनं परमसत्यमंशिनं ।**
**नौमि नन्दगृहचन्दिरं प्रभुम् ॥ १ ॥**

शान्तिकान्तीत्यादिना॥अथ तस्य गुणज्ञापकं विशेषणमाह ॥ शान्तिकान्तिगुणमन्दिरमिति ॥ शान्तिश्च कान्तिश्च ते शान्तिकान्ती, ते एव गुणौ, तयोर्मन्दिरमिति विग्रहः । अयं भावः । गुणा द्विविधाः— स्वरूपगुणा, विग्रहगुणाश्च । तत्र शान्तिशब्दः स्वसमानाऽधिकरणवृत्तिज्ञानशक्तिबलैश्वर्य्यादीनां कारुण्यवात्सल्यक्षमादयादीनां स्वाभाविकानामुपलक्षणार्थः । तथैव कान्तिशब्दोऽपि स्वसमानाऽधिकरणवृत्तिसौन्दर्य्यसौकुमार्य्यलावण्यसौगन्ध्यसौरस्यादिविग्रहगुणानामुपलक्षणार्थः । तथाच शान्त्युपलक्षितस्वरूपगुणानां ज्ञानादीनां कारुण्यादीनां च, कान्त्युपलक्षितसौन्द-

र्य्यादीनां च मन्दिरमिति वाक्यार्थः । स्वाभाविकी ज्ञानबलक्रिया च, सर्वगन्धः सर्वरसः, हिरण्यकेशः हिरण्यश्मश्रुः, आप्रणखात् स सुपर्णः, यदा पश्यः पश्यते रुक्मवर्णमित्यादिश्रुतेः । अथ तस्य लक्षणमाह ॥ स्थेमसृष्टिलयमोक्षकारणमिति ॥ तत्र स्थेमा स्थितिः । स्पष्टाऽर्थकम् अवशिष्टम् । पदत्रयं स्थेमादीनां निमित्ताभिन्नोपादानकारणमित्यर्थः । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीति, संसारबन्धस्थितिमोक्षहेतुरिति श्रुतेः । अथ परमाणुकारणवादेऽतिप्रसङ्गं वारयन्नाह ॥ व्यापिनमिति ॥ ब्रह्मरुद्रादिकारणवादे प्रधानादिकारणवादे चाऽतिव्याप्तिं वारयति ॥ परमसत्यमिति ॥ परमशब्दोऽत्र स्वातन्त्र्यपरः । सत्यशब्दः सत्त्वाश्रयवाचकः । स्वतन्त्रसत्त्वाश्रयमित्यर्थः । सदेव सोम्येदमग्र आसीत्, आत्मा हि परमस्वतन्त्रोऽधिगुण इति श्रुतेः । ब्रह्मादीनां स्वतन्त्रसत्त्वाभावाद् व्यावृत्तिरित्यर्थः । यदासीत् तदधीनमासीदिति श्रुतेः ।

किञ्च, अंशिनमिति ॥ अंशो ह्येष परस्य, अंशो नानाव्यपदेशात्, ममैवांशो जीवलोके इति शास्त्रात् । अंशा आत्मानो नियम्या आत्मीया यस्य सोंऽशी, तमिति विग्रहः । किञ्च, नन्दगृहचन्द्रिकामिति ॥ नन्दगोपगृहस्य व्रजमण्डलस्याह्लादकारणम् । सर्वसामर्थ्यद्योतकं विशेषणमाह ॥ प्रभुमिति ॥ परास्य शक्तिर्विविधैव श्रूयते इति श्रुत्युक्तपराचिन्त्यानन्तस्वाभाविकशक्त्त्य श्रयमित्यर्थः । एवंभूतं हरिं नौमीत्यन्वयः । स्वाश्रितकर्म्महारित्वाद्ध रिस्तम् । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः * इति स्मृतेः ॥ १ ॥

अथ निर्गुणविषयकमाक्षेपं निराकरोति —

निर्गुणं तदिति वैदिकं वचो-
ऽचिपया त्वयि विशेषणासहे ॥

वस्तुतोऽखिलविशेषसागरे ।
नो विरुद्धमिति तावदस्तु मे ॥ २ ॥

निर्गुणमिति ॥ तद् ब्रह्म निर्गुणमिति वैदिकं वचः, केवलो निर्गुणश्चेत्यादि त्वयि न विरुद्धमित्यन्वयः । तत्र हेतुगर्भितविशेषणमाह ॥ अविद्याकारणकविशेषणासहत्वात् तव, तस्य वेदवचसो ह्याविद्यकहेयविशेषण निषेधपरत्वादित्यर्थः ।
तत्र निगमनं दर्शयन्नाह ॥ वस्तुतोऽखिलविशेषसागर इति ॥ वस्तुतः स्वभावत एवाऽखिलकल्याणरूपाणां विशेषाणां सागर इत्यर्थः । यः सर्वज्ञः सर्वविद्, यस्य ज्ञानमयं तपः, सत्यकामः सत्यसंकल्पः, स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः । स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् * इत्याऽऽद्याचार्यपादोक्तेश्च । किञ्च, इति तावदस्तु मे इति ॥ तावदेव उक्तलक्षण एव राद्धान्तः समस्तहेयधर्मसंबन्धानर्हं स्वाभाविकाचिन्त्यानन्तकल्याणरूपं सद्गुणार्णवं परं ब्रह्म श्रीपुरुषोत्तमाख्यमिति श्रौतनिर्णय औपनिषदस्य मे ममाप्यस्त्वित्यर्थः ॥ २ ॥

अथ, सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयमिति श्रुतिं व्याख्यास्यन् स्तौति अर्द्धेन—

त्वत्समो यदि ह नास्ति चेतनः
कस्तदाधिकगुणाकरः प्रभुः ॥
त्वां प्रयामि शरणं शरण्यकं
पुण्डरीकनयनं सुधानिधिम् ॥ ३ ॥

त्वत्सम इति ॥ ह इति स्फुटम् । शास्त्रे लोके च यदि चेतनो जीवात्मा त्वत्समो नास्ति, तदा तर्हि अधिकगुणाऽऽकरः क इति प्रभुः समर्थः, न कोऽपीत्यर्थः । श्रुत्यर्थस्तु— असदेव सोम्यदम-

ग्र आसीदिति श्रुत्या मामाऽसत्कार्यवादसंभवनाया व्यावृत्त्यर्थः सच्छब्दः। एकशब्दो मुख्यार्थः, संख्यार्थको वा कारणस्य ब्रह्मणः सर्वोत्कृष्टत्वमाह। एवकारोऽधिकव्यावृत्त्यर्थः। अद्वितीयशब्दश्च समानव्यावृत्त्यर्थः। तथाच सर्वोत्कृष्टमेकं स्वसमानाभ्यधिकशून्यं जगत्कारणं सद्वस्तु इत्यर्थः। अक्षरात् परतः परः, न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुत्यन्तरात्। विशेषार्थस्तु श्रुत्यन्तसुरद्रुमे द्रष्टव्यः। यस्मादेवं तस्मात् त्वां शरण्यकं प्रयामि शरणं व्रजामीत्यर्थः। कशब्दः सुखवाचकः। कं ब्रह्मेति श्रुतेः। शरण्यश्चासौ कश्चेति तमिति विग्रहः। यद्वा कस्य चतुर्मुखस्यापि शरण्यः शरण्यकस्तम्। यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च महिणोति तस्मा इति मन्त्रात्। किञ्च, शरणमिति रक्षितारमित्यर्थः। शरणं गृहरक्षित्रोरिति कोशात्। सर्वस्य शरणं सुहृदिति श्रुतेः। अथ तस्य विग्रहवैशिष्ट्यं गुणं विधत्ते॥ पुण्डरीकनयनमिति॥ पुण्डरीकवन्निरतिशयसौन्दर्यसौकुमार्यवती नयने यस्य तम्। सत्पुण्डरीकनयनं मेघाभं वैद्युताऽम्बरमिति मन्त्रवर्णात्। विग्रहगुणान् दर्शयन् स्तौति॥ सुधानिधिमिति॥ सौन्दर्यलावण्यमार्दवमाधुर्यसौरस्यसौगन्ध्यादिगुणा एव सुधेव सुधा तस्या निधिस्तम्। सर्वगन्धः सर्वरसः, आप्रणखात् सुपर्ण इत्यादिश्रुतेः॥ ३॥

अथ शरण्यमेव विशिनष्टि—

त्वां विशिष्टगुणमात्मसुप्रियं
दर्शनीयमुखपङ्कजश्रियम्॥
स्पर्शनीयतनुवल्लरीश्रियं
सेवनीयपदपङ्कजद्वयम्॥ ४॥
ब्रह्मरुद्रसुरराजसर्चितं
पर्चितं च रमयाङ्कमालया॥

चर्चितं च नवगोपयालया
प्रेमभक्तिरसशालिमालया ॥ ५ ॥

त्वामित्यादि, द्वाभ्याम् ॥ विशिष्टगुणं त्वां नमामीति पूर्वोक्तक्रियापदेनाऽन्वयः । विशिष्टाः सर्वोत्तमाः स्वाभाविकाः करुणारूपा मोक्षहेतवो गुणा यस्य स तथा तम्।आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति श्रुतेः । किञ्च, आत्मसुप्रियमिति ॥ आत्मानो ज्ञानिनस्तदेकनिष्ठास्त एव सुप्रिया यस्य स तथा तम्। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते, ज्ञानी त्वात्मैव मे मतमिति स्मृतेः। यद्वा आत्मनां सुप्रियस्तमिति विग्रहः। सर्वात्मत्वेन प्रेमास्पदत्वात्। आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः । किञ्च, दर्शनीयमुखपङ्कजाश्रयमिति ॥ दर्शनयोग्या मुखपङ्कजसंबन्धिनी श्रीर्यस्य तम् । यद्वा दर्शनीयं च तन्मुखपङ्कजं च तत्तथा तस्मिञ्छ्रीः शोभा यस्य तमिति। किञ्च, स्पर्शनीयतनुवल्लरीश्रियमिति ॥ स्प्रष्टुं योग्यायां तनुवल्लर्यां श्रीर्यस्य तम् । किञ्च, सेवनीयपदपङ्कजद्वयमिति ॥ सेवनीयं पदपङ्कजद्वयं यस्य तम् ॥ ४ ॥

सर्वसेव्यत्वमाह ॥ ब्रह्मरुद्रसुरराजसर्चितम् ॥ यं सर्वे देवा नमन्तीति श्रुतेः । अथ लक्ष्मीवैशिष्ट्यं गुणं विधत्ते ॥ पर्चितं च रमयाङ्कमालयेति ॥ अङ्के लम्बमाना माला यस्यास्तया रमया पर्चितं संस्पृष्टं चेति ॥ रमामानसहंसाय गोविन्दाय नमो नमः ॥ इति मन्त्रवर्णात् ॥ अथ गोप्याः श्रीराधाया वैशिष्ट्यं विधत्ते ॥ चर्चितं च नवगोपयालयेति ॥ राधया माधवो देवो माधवेन च राधिकेति श्रुतेः॥ तस्याः प्रेमाधिष्ठातृत्वं व्यञ्जयन् विशिनष्टि ॥ प्रेमभक्तिरसशालिमलयेति ॥ प्रेमभक्तिरसे तद्विषयतया शोभनशीलः श्रीकृष्णो मालेव माला यस्याः सा तथा तयेति विग्रहः । यद्वा, प्रेमभक्तिरसशोभनशीलस्य भगवतो मालेव माला, सा तथा तयेति विग्रहः ।

वल्लवीवदनाम्भोजमालिने नृत्यशालिने * इति मन्त्रात् ॥ ५ ॥

अथ, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्यादिश्रुतिं व्याकुर्वन् स्तौति—

किञ्च किञ्चिदिह विद्यते न हि
त्वां विनाण्वपि तथाऽखिलेश्वर ॥
नेति नेति च निषेधिताश्रय-
स्तद्विशेषविषयोऽपि संमतः ॥ ६ ॥

किञ्च किञ्चिदिति ॥ किञ्च, अन्यदप्युच्यते इत्यर्थः । हेऽखिलेश्वर अखिलस्य जगत ईश्वर नियन्तः ! एष सर्वेश्वर इति श्रुतेः । इह जगति त्वां विना अण्वपि किञ्चिन्न विद्यते इत्यन्वयः । हीति निश्चये यथा सांख्यानां तैर्किकादीनां च मते प्रकृतिपुरुषादयो द्रव्यगुणादयश्चेतरेतरान्योन्याभावप्रतियोगिनस्तैरुच्यन्ते तथा वेदान्ते त्वां विना परमाणुपरिमाणकमात्रमपि वस्तुजातं नास्ति, सर्वस्य त्वदुपादेयत्वेन त्वदात्मकत्वेन त्वद्व्याप्यत्वेन त्वत्प्रयोज्यत्वेन च त्वदविनाभावात् । उपादेयादीनामुपादानाद्यपृथक्सिद्धत्वनियमात् । न तदस्ति विना यत् स्यान्मया भूतं चराचरम् * इति श्रीमुखोक्तेः । किञ्च । अथात आदेशो नेति नेतीति श्रुत्यर्थमाह ॥ नेति नेति च निषेधिताश्रय इति ॥ नेति नेतीति निषेधितस्य स्वतन्त्रसत्तानिषेधविषयस्य चेतनाचेतनरूपप्रपञ्चस्य परतन्त्रसत्ताकस्याश्रयस्तदुपादानरूपो विश्वात्मा स्वतन्त्रसत्ताश्रयस्त्वमेवेत्यर्थः । किञ्च, तद्विशेषविषयोऽपि संमत इति ॥ तस्मान्निषेधिताद्विशेषो भूयस्त्वं तस्य विषयो भूयस्त्वप्रतिपादनविषय इत्यर्थः। न ह्येतस्मादिति नेति अन्यत् परमस्त्यथ नामधेयं, सत्यस्य सत्यमिति, प्राणा वै सत्यं, तेषामेष सत्यमित्युत्तरोत्तरभूयस्त्वविधानश्र-

वणात् । प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति न्यायात् ॥ ६ ॥

अथाऽणोरणीयान् महतो महीयानिति श्रुतिं व्याकुर्वन् भक्तिं प्रार्थयते—

त्वय्यणुत्वसुमहत्त्वभागिनि
सर्वशक्तिबलयोगशालिनि ॥
भक्तिरस्तु मम निश्चला हरे
कृष्ण केशव महत्तमाश्रये ॥ ७ ॥

त्वयीति ॥ हे हरे स्वाश्रयदोषापहारक, हे कृष्ण सच्चिदानन्दरूप, हे केशव केशयोर्ब्रह्मशिवयोर्जनक। क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ॥ आवां तवाङ्गसंभूतौ तस्मात् केशवनामवान् इति हरिवंशे श्रीशिवोक्तेः । त्वयि मम भक्तिरस्त्वित्यन्वयः । कथम्भूते, अणुत्वसुमहत्त्वभागिनीति॥ अणुत्वादिभाजनशीले।तत्राणुपरिमाणको जीवः। अणुर्ह्येष आत्मा चेतसा वेदितव्य इति श्रुतेः । महत्परिमाणक आकाशादिः । आकाशवत् सर्वगत इति श्रुतेः । तयोरन्तरात्मतयाऽवस्थानं तथात्वभागित्वमित्यर्थः । य आत्मनि तिष्ठन्, य आकाशे तिष्ठन्निति श्रुतेः । ननु तदन्तःस्थत्वे तद्गतदोषसंबन्धमसङ्ग इति चेन्न । सर्वशक्तियोगेन दोषाऽस्पृष्टमाहात्म्यादिरयाह ॥ सर्वशक्तिबलयोगशालिनीति ॥ सर्वशक्तिबलयोगैः शोभनशीले। पराऽस्य शक्तिरित्यादिश्रुतेः । शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ॥ यतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति स्मृतेः । सर्वोपेता चेति सूत्रात् । अत एव, महत्तमाश्रय इति ॥ महत्तमाना श्रीनारदादीनामाश्रये आश्रयणीय इत्यर्थः । यं सर्वे देवा नमन्ति मुमुक्षवो

ब्रह्मयादिनश्चेति श्रुतेः ॥ ७ ॥

अथ, तत्त्वमसि, अयमात्मा ब्रह्म, अहं ब्रह्मास्मीत्यादिश्रुत्यर्थं तथा प्रतिपादयन् प्रणमति—

तत्त्वमादिपदवाच्यविष्णवे
जिष्णवेऽखिलगुरो प्रविष्णवे ॥
आत्मनां यमयते प्रतेजसे
नौमि ते मधुरिपो महौजसे ॥ ८ ॥

तत्त्वमादीति ॥ हे मधुरिपो मधुनाम्नोऽसुरस्य घातक । यद्वा मधुरूपेण दृश्यमानाः शब्दादयो विषया इन्द्रियद्वारेण ज्ञानादिप्रतिबन्धकास्तेषां रिपुर्नाशकस्तस्य संबोधने मधुरिपो इति । त्वां नौमीति संबन्धः । त्वामिति कर्मपदमध्याहरणीयम् । कस्मै प्रयोजनायेत्यपेक्षायामाह ॥ ते इति ॥ तुभ्यमेव प्रयोजनरूपाय । प्रयोजनान्तराभावादनन्यप्रयोजनः सन्नित्यर्थः । तमेव विशिनष्टि ॥ तत्त्वमादिपदवाच्यविष्णवे इति ॥ तच्च त्वं च तत्त्वमी, ते एवादी येषां तानि तत्त्वमादिपदानि तेषां वाच्यः, स चाऽसौ विष्णुश्चेति तथा तस्मा इति विग्रहः । यद्वा, तत्त्वमादिपदवाच्येति संबोधनरूपं पृथक्पदम् । आदिशब्दोऽयमहमादिपदसंग्रहार्थः । एतानि चात्रानुकरणपदानि अनुकार्यशब्दवाचकान्यपि परम्परया शब्दसादृश्याद्वा स्वस्वानुकार्याभिन्नार्थकानि । तत्र तद्ब्रह्मादिपदानां सार्वज्ञादिधर्माश्रयपरमात्मवाचकत्वं तावन्निर्विवादम् । सर्वसम्मतत्वात् । त्वमयमहमादीनामपि ब्रह्मणः सर्वात्मत्वेन सर्वपदवाच्यत्वात् तत्परत्वमविरुद्धम् । यथा शाब्दिकानां मते, अग्नेर्ढगित्यत्राऽग्निशब्दस्य शब्दपरत्वम् । अग्नौ जुहोतीत्यत्र तदर्थपरत्वं च तच्छक्यत्वान्मुख्यमेव । यथा वा चतुर्मुखविनयनादिपदानां तत्तत्पिण्डपरत्वं तत्तदवच्छिन्नचेतनपर-

त्वं च मुख्यम् । तच्छक्यत्वादेव । यथा वा पृथिव्यादिपदानां महाभूतपरत्वं तदन्तरात्मपरत्वं च मुख्यमेव, तथा त्वमयमहमादीनामपि क्षेत्रक्षेत्रज्ञपरत्वं, तदन्तरात्मब्रह्मपरत्वं च मुख्यमेवेति सुपपन्नं, शक्यत्वादेवेति साम्प्रदायो राद्धान्तः । नामानि सर्वाणि यमाविशन्ति, सर्वे वेदा यत्र एकीभवन्तीत्यादिश्रुतेः । तथाच तेषां सामानाधिकरण्यमपि मुख्यमेवेति सिद्धम् । अथ विशेषणान्तरमाह ॥ जिष्णवे इति ॥ इति पदं मधुरिपुत्वे हेतुर्बोध्यम् । जयनशीलत्वादित्यर्थः । सर्वोत्कर्षोऽपि त्वमेवेत्याह ॥ अखिलगुरो इति ॥ यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै यो वा विद्यां तस्मै गोपायति स्म कृष्ण इति मन्त्रवर्णात् । किञ्च, भविष्णवे इति॥ बहुभवनशीलाय । बहु स्यां प्रजायेयेति श्रुतेः । सर्वनियन्तृत्वमाह ॥ आत्मनां यमयते इति ॥ जीवानां बुद्ध्यादीनां च नियन्त्रे । य आत्मानमन्तरो यमयतीति श्रुतेः । किञ्च, मतेजसे इति ॥ प्रकृष्टं तेजो यस्य तस्मै सर्वप्रकाशत्वात् । यस्य भासा सर्वमिदं विभातीति श्रुतेः । किञ्च, महौजसे इति ॥ महदोजो बलं यस्य तस्मै । बलं बलवतां चाहमिति श्रीमुखोक्तेः ॥ ८ ॥

एवं पदार्थं निरूप्य वाक्यार्थं व्याकुर्वन् स्तौति—

ब्रह्मणो भवत आदिपुरुषा-
ज्जायते यत इदं रमेश्वरात् ॥
तन्नियामकतया तदात्मकं
विश्वमेवमखिलं प्रचक्ष्यते ॥ ९ ॥

ब्रह्मण इति ॥ अखिलं विश्वं येन नाचेतनमनवस्तुजातं तदात्मकं प्रचक्ष्यते श्रुतिभिरित्यन्वयः। तद् ब्रह्म आत्मा यस्य तत्तदात्मकं ब्रह्मात्मकं ब्रह्मतादात्म्यसम्बन्धत्वात् तत्समानाधिकरणनिर्देशार्हं श्रुत्या प्र-

यदुच्यते इत्यर्थः । ऐतदात्म्यमिदं सर्वमिति श्रुतेः । कुतो, यतो भवत इति ॥ यस्मादिदं भवतो जायतेऽतस्तत्तानिर्देशार्हमित्यर्थः । सर्वं खल्विदं ब्रह्म तज्जलानिति श्रुतेः । कथम्भूतात् ॥ ब्रह्मण इति ॥ स्वरूपगुणशक्त्यादिभिर्निरतिशयबृहत्तमवस्तुनः । अथ कस्मादुच्यते परं ब्रह्मेति मश्ने, बृंहति बृंहयति तस्मादुच्यते परं ब्रह्मेति श्रुतेः । विशेषणान्तरमाह ॥ आदिपूरुषादिति ॥ क्षराक्षराभ्यां पुरुषाभ्याम् आदित्वाद् आदिपूरुषः पुरुषोत्तम इति यावत् । प्रधानक्षेत्रज्ञपतिः । अक्षरात् परतः पर इति श्रुतेः । आदिरुपादानकारणं पुरुषः पूर्णः । स चासौ स चेति विग्रहः । सहस्रशीर्षा पुरुष इति श्रुतेः । किञ्च, रमेश्वरादिति ॥ रमाया लक्ष्म्या ईश्वरो रमेश्वरस्तस्मादिति विग्रहः । श्रीपतेरित्यर्थः । श्रीकृष्णरुक्मिणीकान्त इति मन्त्रवर्णात् । परेश्वरादिति वा पाठः । तथाच पराणाम् ईश्वरकल्पानां परिच्छिन्नैश्वर्यवतां ब्रह्मशिवेन्द्रादीनामीश्वरस्तथा तस्मात् । तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतमिति श्रुतेः । किञ्च तन्नियम्यत्वादपि ततोऽभेदव्यपदेशार्हमित्याह ॥ तन्नियामकतयेति ॥ हेतौ तृतीया । भगवतस्तन्नियामकत्वादपि तदात्मकं तदपृथक्सिद्धमित्यर्थः । अन्तः प्रविष्टः शास्ता जनानामिति श्रुतेः । अखिलं ब्रह्मनिश्वासात्मकत्वात् तदुपादेयत्वात् तन्नियम्यत्वाच्च ब्रह्मत्वनिर्देशार्हमिति वाक्यार्थः । एवं परतन्त्रसत्त्वावच्छिन्नस्वरूपत्वेन भिन्नत्वं, तदात्मकत्वादिना तदपृथक्सिद्धत्वादभिन्नत्वमपीति भिन्नाऽभिन्नं ब्रह्मेति, तत्त्वमस्यादिवाक्यानां मुख्यमेवार्थः । शास्यत्वादेवेति सङ्क्षेपः । विस्तरस्तु श्रुत्यन्तसुरद्रुमे द्रष्टव्यः ॥ ९ ॥

अथ भगवतो जन्मकर्मादिनिर्णयमाह—

जन्मकर्मगुणरूपयौवनं
दिव्यमेव कवयो वदन्ति ते ॥

श्रौतवाद उपलभ्यते तथा
निर्विशेषचिति मङ्गलालये ॥ १० ॥

जन्मेत्यादिना ॥ कवयः श्रौतमन्त्रास्तदुपदेष्टारो वा ते तव श्रीपुरुषोत्तमस्य जन्मकर्मगुणरूपयौवनं दिव्यमेव वदन्तीत्यन्वयः। तव जन्मानि श्रीरामकृष्णनृसिंहाद्यवताररूपाणि कर्म्माणि, जगज्जननपालनादीनि रावणकंसादिहनन-गोवर्द्धनोद्धरणादीनि, गुणाः ज्ञानशक्तिबलैश्वर्यादयः, कारुण्यवात्सल्यक्षमादयादयश्च । रूपाणि चतुर्भुजद्विभुजाद्यवयवसंपन्नमाधुर्य्यलावण्यसौन्दर्य्यादिसंपन्नाऽऽकृतीनि । यौवनं कैशोराद्यवस्थादिविशेषः । एतेषां द्वन्द्वैक्यं बोध्यम् । तत्र प्रमाणमाह ॥ श्रौतवाद उपलभ्यते तथेति ॥
यथा वदन्ति तथा श्रौतवाद उपलभ्यते । त्वयीति शेषः। श्रुतीनामयं श्रौतः, स चासौ वादश्च स इति विग्रहः । अजायमानो बहुधा व्यजायत, यतो वा इमानि भूतानि जायन्ते, कंसवंशविनाशाय केशिचाणूरघातिने * नमः पापप्रणाशाय गोवर्द्धनधराय च, यः सर्वज्ञः सर्ववित्, सत्यकामः सत्यसंकल्पः, स्वाभाविकी ज्ञानबलक्रिया च, सत्पुण्डरीकनयनं - मेघाभं वैद्युताऽम्बरम् * द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् * दिव्यालंकरणोपेतं गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रयमित्यादिश्रुतयः क्रमशोऽनुसंधेयाः । कथंभूते ॥ निर्विशेषचिति ॥ निर्गता हेयविशेषा यस्मात् स एव चिद्रूपस्तस्मिन्, सत्यं ज्ञानमनन्तं ब्रह्म, य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोक इत्यादिश्रुतेः। अध्यासवादस्य भ्रान्तिमूलत्वं सूचयन्नाह ॥ मङ्गलालये इति ॥ मङ्गलस्य निरतिशयानन्दस्य मन्दिरे आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति श्रुतेः ॥ १० ॥

सर्वजीवनिकायसेव्योऽपि भवानेवेत्याह—

नित्यमुक्तजनतासुसेवितो
बद्धजीवदययाक्षगोचरः ॥
देशकालगुणवस्तुतो बृहन्
बल्लवीप्रिय भवानमयया ॥ ११ ॥

नित्यमुक्तजनतासुसेवित इति ॥ भवान् श्रीपुरुषोत्तमो नित्यमुक्तजनतासुसेवितो भवतीत्यन्वयः । नित्याश्च मुक्ताश्च तथा ते, तेषां जनता जनसमूहस्तया सुष्ठु सेवितः । तत्र नित्यत्वं च सदाऽननुभूतमायासंबन्धनिरूपितसंसारचक्रभ्रमणदुःखादिकत्वे सति, भगवद्दर्शनानन्दानुभूतिमत्त्वम् । सदा पश्यन्ति सूरय इति श्रुतेः । मुक्तत्वं च भगवदनुग्रहजन्यतत्साक्षात्कारेण मुक्तमायासंबन्धकत्वे सति भगवद्भावापत्तिमत्त्वम् । जहात्येनां भुक्तभोगामजोऽन्यः ।जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोक इति श्रुतेः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति स्मृतेश्च। किञ्च, बद्धजीवदययाक्षगोचर इति ॥ बद्धो नाम अनादिकर्म्मप्रयुक्तमायासंबन्धजन्यदेवतिर्यगादियोनिभिश्चक्रवद्भ्रमिसंपन्न इति।स द्विविधो- मुमुक्षुबुभुक्षुभेदात् । संसारान्मुक्तिमिच्छवो मुमुक्षवः । सांसारिकभुक्तिमिच्छवो बुभुक्षवः । तत्र मुमुक्षुमुद्दिश्याह ॥ हे बल्लवीप्रिय इति ॥ बल्लव्यो व्रजाङ्गनास्तासां प्रियः । गोपीजनमनोहर इति मन्त्रवर्णात् । भवान् अमायया जीवदयया तदक्षगोचरो भवतीति संबन्धः । अमाया नाम तत्तज्जीवं मोचयितुमिच्छा, असौ मया मोचनीय इति संकल्परूपा दया। मुमुक्षूणां ये चरमजन्मानस्तेषु दयेति भावः। यमेवैष वृणुते तेन लभ्यः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मन इति श्रुतेः । एतेन भगवदवतारसमये सर्वेषामपि तद्दर्शने मोक्षाभावोऽविरुद्धः । मुमुक्षाऽभावात् । भगवतश्च तथाभूतसंकल्पाभावात्। अथापरिच्छिन्नैश्वर्यं दर्शयन्नाह॥देश-

कालगुणवस्तुतो बृहन्निति ॥ देशकालादिपरिच्छेदशून्यः । अनन्तत्वात् । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । सर्वविलक्षणत्वाच्च । अस्थूलमनण्वित्यादिश्रुतेः ॥ ११ ॥

भगवद्भावाप्तिसाधनान्याह—

भाति चातिनिरुपाधिपद्धति-
र्भक्तकामपरिपूरको विभुः ॥
व्यापकोऽपि परिच्छिन्नसद्धृतो-
ऽचिन्त्यशक्तिरवबोधवारिधे ॥ १२ ॥

भातीत्यादिना ॥ अतिनिरुपाधिपद्धतिः शास्त्रे भातीत्यन्वयः । अतिशयेन निर्गत उपाधिर्यस्मात् सोऽतिनिरुपाधिस्तस्य स्वभावतोऽस्पृष्टदोषमाहात्म्यस्य तव श्रीपुरुषोत्तमस्य पद्धतिः प्राप्तिसाधनभक्तिपाककर्मज्ञानभक्त्यादिरूपा श्रुतिभिर्निरूप्यते इत्यन्वयः। तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः,आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । मुमुक्षुर्वै शरणमहं प्रपद्ये, स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुतिभिः। यद्वा, अतिनिरुपाधेर्मोक्षस्य पद्धतिर्गमनमार्गोऽर्चिरादिलक्षणः । अर्चिषमभिसंभवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त इत्यादिश्रुतेः । यस्य प्राप्तेः पद्धतिर्निर्दिष्टा स कथंभूत इत्यपेक्षायामाह ॥

भक्तकामपरिपूरक इति ॥ सकामानां निष्कामानां च भक्तानां कामस्य भुक्तिमुक्तिरूपस्य परिपूरकः। य आत्मदा बलदा इत्यादिश्रुतेः। तेषामहं समुद्धर्ता मृत्युसंसारसागरात् इत्यादिगानात् । फलमत उपपत्तेरितिन्यायात् । तत्र हेतुः- अचिन्त्याः शक्तयो यस्य स तथा परास्य शक्तिर्विविधैव श्रूयते इति श्रुतेराचिन्त्यत्वं व्यञ्जयन्नाह॥ व्यापकोऽपि परिच्छिन्नहृद्गत इति॥ परिच्छिन्नहृदि वर्त्तमानोऽपि व्यापकः । देशादित्रिविधपरिच्छेदशून्य इत्यर्थः । तत्रापि हेतुमाह ॥ अवबोधवारिधे इति ॥ अपरिच्छिन्नगर्नविषयकज्ञानार्णव इति संबोधनम् । यः सर्वज्ञः सर्ववित् इति श्रुतेः । यद्वा हेतौ पञ्चमी। किञ्च पष्ठीविवक्षायां, पद्धतिपदेनान्वय इति विवेकः ॥ १२ ॥

अथोक्तपद्धतेः प्राप्यं फलं निरूपयति—

आत्मभावमनुभूतिरूपिणो
ये वदन्ति तव रूपरूपिणः ॥
ब्रह्मभावपरमात्मभावतः
सत्यमेव सुखबोधरूपिणः ॥ १३ ॥

आत्मभावमित्यादिना ॥ ये मन्त्राः, परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इत्यादयोऽनुभूतिरूपेणस्तव आत्मभावं मोक्षलक्षणं वदन्ति। ये च मन्त्राः—निरञ्जनः परमं साम्यमुपैति, ब्रह्मविदाप्नोति परम्। तन्महिमानमिति वीतशोक इत्यादयो ब्रह्मभावपरमाऽऽत्मभावतो मोक्षमाहुः । ततसत्यमेवेत्यर्थः ।
याथात्म्यमेवेत्यर्थः । ब्रह्मभावात् परम उत्कृष्टम् आत्मभावत आत्मभावमिति । ब्रह्मणो भावः सार्वज्ञादिधर्मकदम्बस्तस्मादप्युत्कृष्टम् आत्मभाव ब्रह्मात्मकत्वाविर्भानमित्यर्थः । सर्वज्ञत्वाद्यनुभवापत्तिपूर्वकतदात्मकत्वानुभूतिरित्यर्थः । येनाऽश्रुतं श्रुतं भवतीत्यादिश्रुतेः

विषयत्युपन्यासात् पूर्वभावादविरोधं बादरायण इति सिद्धान्तसूत्रात् पूर्वोक्तभावात् सार्वज्ञ्यादिविषयकानुभवाद्, अपहतपाप्मत्वादिसंपन्नविज्ञानात्मकस्वरूपाविर्भावादविरोधं मोक्षरूपं भगवान् बादरायणो मन्यते इति सूत्राक्षरार्थः । एवञ्च, न केनापि वाक्येन विरोधः । तद्विशेषश्चाकरे द्रष्टव्यः । कथम्भूतस्य तवेत्याशङ्क्याऽऽह ॥ रूपरूपिण इति ॥ रूपाणि रूपयतीति तथा ■ तस्य । रूपशब्द उपलक्षणार्थः । नामरूपरूपणशीलस्येत्यर्थः । रूपणं व्याकरणम् । नामरूपे व्याकरवाणीतिश्रुतेः । संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादिति सूत्रात् । संज्ञा च मूर्तिश्च संज्ञामूर्ती, तयोः क्लृप्तिस्तथा सा त्रिवृत्कुर्वतस्त्रिवृत्कर्तुः श्रीपुरुषोत्तमस्यैव क्रिया नान्यस्येत्यर्थः । तुशब्दः शङ्कानिरासार्थः । संज्ञाशब्दो नामवाचकः । मूर्तिशब्दो रूपवाचकः । क्लृप्तिः समर्थनम् । व्याकरणं नामरूपव्याकरणं परमेश्वरस्यैव कर्म । कुतः । उपदेशात् । श्रवणादितिसूत्राक्षरार्थः । तत्र विकारप्रसक्तिं वारयति ॥ सुखबोधरूपिण इति ॥ सुखं च बोधश्च तथा, तयोः समाहारः सुखबोधं तथाभूतरूपं मूर्तिर्विद्यतेऽस्येति स सुखबोधरूपी तस्येति विग्रहः । सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे * इति मन्त्रात् । तत्रेयं प्रक्रिया । श्रीभगवतो रमानिवासस्य कृष्णस्य साक्षात्कारादुक्तलक्षणो मोक्षः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् * तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति श्रुतेः । साक्षात्कारश्च तदनुग्रहैकलभ्यः । यमेवैष वृणुते तेन लभ्य इति श्रुतेः । स च ज्ञानादिषु साधनेषु यथाधिकारमेकेनापि प्रसादितः श्रीकृष्णः स्वानुग्रहेणैव ज्ञानादीनां व्याजं कृत्य स्वात्मानं दर्शयित्वा भगवद्भावापत्तिलक्षणं मोक्षं प्रापयतीति । तत्र ज्ञानभक्त्यादीनि नियुज्यन्ते । श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । तं ध्यायेत् तं रसयेत्

वं भवेदित्यादिश्रुतिभ्यः। ज्ञानपत्त्यादिसिद्धये च
धिकारोचितधर्माणां विनियोग इति। तमेतं
णा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति
साधनतन्मदाचानुष्ठानादुक्तलक्षणमोक्षापत्तिरिति भावः॥ १३

अथ सर्वशास्त्रविषयोऽपि त्वमेवेत्याह—

त्वामखण्डरसमात्मवल्लभं
वेदवाक्यमत एव बोधयत्॥
पर्यवस्यति परेऽखिलात्मनि
त्वय्यनन्तसुखरूप शोधयत्॥ १४॥

त्वामखण्डरसमिति॥ वेदवाक्यं त्वय्येव पर्यवस्यतीत्यन्वयः। एकवचनं सामान्यपरं बोध्यम्। वेदवाक्यजातमित्यर्थः। किं कुर्वदित्याकाङ्क्षायामाह॥ त्वां बोधयदिति॥ ज्ञापयत्॥ तमेव विशिनष्टि॥ अखण्डरसमिति॥ अखण्डश्चासौ रसश्च तम्। अपरिच्छिन्नानन्दस्वरूपम्। रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः। तथाभूतानन्दगुणाश्रयं वा। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति श्रुतेः। किञ्च, आत्मवल्लभमिति॥ आत्मनां क्षेत्रज्ञानां वल्लभं प्रेष्ठम्। तेषामन्तरात्मत्वात्। एष सर्वभूतान्तरात्मेति श्रुतेः। आत्मन एव निरतिशयप्रेमास्पदत्वात्। आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः। पुनः किं कुर्वत्। शोधयत् क्षेत्रक्षेत्रज्ञाभ्यां विविच्य श्रीपुरुषोत्तमत्वं व्यञ्जयत्। प्रधानक्षेत्रज्ञपतिः, अक्षरात् परतः पर इत्यादिश्रुतेः। यद्वा, अत एव शोधयत्। प्रधानकालपरमाण्वादिकारणवादं निराकृत्य तव कारणत्वं प्रतिपादयत्। यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः। स कारणं करणाधिपाधिप इति श्रुतेः। यद्वा, अत एव

त्वां बोधयदिति योजना । अत एव, अस्मद्देहाद्यनात्मप्र-पञ्चादात्मानं शोधयद् विवेचयद् विलक्षणतां दर्शयत् । एत-स्मादन्य आत्मा विज्ञानमय इत्यादिश्रुतेः । विविक्तानां च तदात्मकत्वं बोधयत् । ऐतदात्म्यमिदं सर्वं, स आत्मा, तत्त्वमसीति तादात्म्यसंबन्धोपदेशश्रवणात् । तत्र हेतुमाह ॥ अखि-लेनीति ॥ अखिलस्यात्माऽखिलात्मा तस्मिन् । सर्वव्यापी स-र्वान्तरात्मेति श्रुतेः । तत्रापि हेतुगर्भितसम्बोधनमाह ॥ अनन्त-बोधरूप इति ॥ सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मेति श्रुतेः ॥ १४ ॥

अथेतरदेवोपासकान्निन्दयन् भगवद्भक्तिं दृढीकुर्वन् स्तौति—

वेदविद्भिरभिधीयते पशु
र्योऽन्यदेवसमुपासको हि सः ॥
त्वामुपास्य बहवोऽमृता कृताः
पूर्णकाममसृतं निरंहसः ॥ १५ ॥

वेदविद्भिरभिधीयते पशुर्योऽन्यदेवसमुपासक इति ॥ योऽन्य-देवसमुपासकः स वेदविद्भिः पशुरभिधीयते इत्यन्वयः । भगवतो विश्वात्मन इतरेषां देवानां ब्रह्मरुद्रेन्द्रादीनामुपासकः पशुरभिधी-यते । पशुर्विवेकहीन इत्यर्थः । तेषां सार्वज्ञ्याऽनन्ताऽचिन्त्यशक्तित्व-मोक्षदातृत्व-जगत्कारणत्व-मायानियन्तृत्व-शास्त्रयोनित्वाद्ययोगा-त् । परतन्त्रत्व-परजन्यत्व-परोपदेश्यत्व-परदत्तपदत्वादियो-गाच्च । योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति, न स वेद यथा पशुरिति । स देवानां पशुरेवेति च श्रुतेः । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसामिति लभते च ततः कामान् मयैव विहितान् हि तानिति श्रीमुखोक्तेश्च । किञ्च, त्वदुपासकास्तु परमानन्दभाज

इत्याह ॥ त्वामुपास्य बहवोऽमृता मृता इति ॥ त्वामुपासनविषयं कृत्वा निरंहमः सन्तः, अमृता मृता मोक्षं गताः । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते*, बहवो ज्ञानतपसा पूता मद्भावमागताः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति भगवदुक्तेः । तमेव विदित्वा, यदा चर्मवदाकाशमित्यन्वयव्यतिरेकश्रुतेश्च । अथ उपास्यं विशिनष्टि ॥ पूर्णकाममिति ॥ पूर्णाः कामा यस्मादिति । निरतिशयौदार्यतया सर्वपुरुषार्थप्रदम् । तन्निष्ठस्य मोक्षव्यपदेशादिति सूत्रात् । संसारबन्धस्थितिमोक्षहेतुरिति श्रुतेः । किञ्च, अमृतमिति ॥ मृत्युनिवारकम्, आनन्दस्वरूपं वा जुष्टस्ततस्तेनाऽमृतत्वमेति । यो वै भूमा तदमृतमिति श्रुतेः ॥ १५ ॥

अथ भगवच्चरणारविन्दविमुखान्निन्दयन् स्तौति—

नेष्टसिद्धिरपि च व्यवस्थया
नादृतेशचरणा यतो हरे ॥
युक्तिरेव शिथिला हि तन्मते
सत्तयापि न हि मानदो विभुः ॥ १६ ॥

नेष्टसिद्धिरपि चेति ॥ अश्रौतकपोलकल्पितव्यवस्थयापि तेषामिष्टसिद्धिर्नोपपन्नेति योजना । तत्र हेतुमाह ॥ यतो नादृतेशचरणा इति ॥ यतो यस्माद् अनादृतावीशचरणौ यैस्ते तथा, अनादृतेशचरणत्वात् तेषामिष्टसिद्धिः श्रेयोलक्षणा नास्तीत्यर्थः ॥ हे हरे इति ॥ स्वाश्रितदुःखापहारक, तन्मते युक्तयोऽपि शिथिला दुर्बलाः । अश्रौतत्वात् । किञ्च, विभुरिति ॥ सद्भवनसमर्थो भवान् ॥ सत्तयापीति ॥ तेषां निषेधेन कल्पितया सत्तयापि, मानदो न भवतीति, सन्मानदो न भवतीत्यर्थः । अस्य विशेषार्थ आकरे द्रष्टव्यः । न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः* अव-

जानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्। मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहनीं श्रिताः। येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्। ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रता इत्यन्वयव्यतिरेकोपपत्तिमद्भक्तश्रीमुखोक्तिभ्यः ॥ १६ ॥

अथ श्रीभगवद्धामस्वरूपमाह–

पारशून्य परधाम तेऽद्भुतं
चिद्घनं जयति लोकमूर्द्धनि ॥
व्यापकं च परिखा सरिद्वरा-
ऽचिन्त्यशक्ति नवमङ्गलध्वनि ॥ १७ ॥

पारशून्यपरधाम तेऽद्भुतमिति ॥ लोकमूर्द्धनि ते पारशून्यपरधाम जयतीति योजना। परस्य भावः पारमाधिक्यं तच्छून्यं पारशून्यं च तत् परधाम चेति विग्रहः। आधिक्यशून्यं सर्वोपरि वर्तमानं तत्र धामेति यावत्। धामेति निवासस्थानम्। मुक्तोपसृप्यं लोकं लोकमूर्द्धनीति ॥ लोक्यतेऽनेनेति लोकं शास्त्रम्। तस्य मूर्द्धस्थानीयम्। उपनिषदादिवेदान्तशास्त्रम्। तस्मिंस्तत्प्रतिपाद्यतया स्वोत्कर्षेण प्रकाशते इति वाक्यार्थः। तस्यालौकिकत्वं व्यञ्जयन्नाह ॥ अद्भुतमिति ॥ नित्यं प्रतिक्षणं तत्रस्थानां द्रष्टृणामपि अपूर्वतयाऽऽश्चर्यावहमित्यर्थः। तत्र हेतुमाह ॥ चिद्घनमिति ॥ प्रकाशानन्दमूर्तिकं प्रकृतिसम्बन्धदोषास्पृष्टमाहात्म्यमित्यर्थः। ननु मूर्तित्वात्परिच्छिन्नमेव स्यात्। मूर्तित्वपरिच्छिन्नत्वयोः सामानाधिकरण्यदर्शनादित्याह ॥ व्यापकमिति ॥ परिच्छिन्नत्वेन भासमानत्वेऽपि व्यापकमिति चकारार्थः। भगवदीयविश्वरूपवत् परिच्छेदशून्यत्वात्। उभयथापि हेतुत्वेन विशेषणद्वयम् ॥ परिखा सरिद्वरेति ॥ अचिन्त्य-

शक्तीति ॥ यस्य धाम्नः सरिद्वरा विरजा परिखेति पूर्वत्र हेतुः । अचिन्त्याः शक्तयो यस्येति तथा तदिति उत्तरत्र हेतुः । ब्रह्मस्वरूपवन्निर्विकारम् । तन्महिमरूपत्वात् सर्वमविरुद्धम् । तथैवाम्नातत्वाच्छान्दोग्यैः । स भगवः कस्मिन् प्रतिष्ठिते स्वमहिम्नीति ॥ किञ्च, नरमङ्गलध्वनीति ॥ नवीना, जितं ते पुण्डरीकाक्ष इत्यादिना तत्स्वरूपगुणादिप्रतिपादकाः स्तोत्रपाठात्मकाः सामगानादिरूपाश्च मङ्गलध्वनयो यत्रेति तथा । तदेव परमपदविष्णुपदपरमव्योमब्रह्मलोकादिशब्दैः श्रुत्याभिधीयते । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । योऽस्याऽध्यक्षः परमे व्योमन् स पाप्मना विनिर्मुक्तः सामभिरुन्नीयते ब्रह्मलोकमित्यादिश्रुतेः । योगयाज्ञवल्क्ये— ॐकाररथमारुह्य मनः कृत्वा तु सारथिम् ॥ नरो ब्रह्मपदान्वेषी याति विष्णोः परं पदम् । भारते वनपर्वणि । यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम् ॥ अनादिनिधनं देवं प्रभुं नारायणं हरिम् । ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते । देवाश्च यत्र पश्यन्ति दिव्यं तेजोमयं परम् । अत्यर्कानलसंदीप्तं स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः । यतयस्तत्र गच्छन्ति देवं नारायणं हरिम् । वरेण तपसा युक्ता भाविताः कर्मभिः शुभैः । योगसिद्धा महात्मानस्तमोमोहविवर्जिताः । तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत । स्थानमेतन्महाराज ध्रुवमक्षयमव्ययम् । ईश्वरस्य सदा ह्येतत् प्रमाण च युधिष्ठिर इत्यादि । तथाच सत्यलोकभिन्नत्व देवाद्यगोचरत्व—तेजोमयत्व-सूर्यादिदीप्त्यतिक्रान्तत्व-स्वप्रकाशत्व—देवादिदुष्प्रेक्ष्यत्व—तमोमोहादिशून्यत्वादीनां परमयोगिगम्यत्व—परिणामादिविकारहीनत्वाक्षयत्वादिमत्त्वानां लिङ्गानां तद्विपरीतधर्मवत्सु प्राकृतेषु ब्रह्मलोकादिषु समन्वयायोगेन प्रकृतेः परत्वं श्रीपुरुषोत्तमाधिष्ठितत्वं च नित्यधाम्नः सिद्धम् । तच्च प-

श्वरात्रे स्पष्टम् । लोके वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् * अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् । नित्यमुक्तैः समाकीर्णं तन्मयैः पाञ्चकालिकैः । सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः । वापीकूपतडागैश्च वृक्षखण्डैश्च मण्डितम् । अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम् । प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा । क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशव, इत्यादिना ॥ १७ ॥

अथ भगवत्प्राप्त्यसाधारणसाधनभूतां भक्तिमाह—

सत्प्रसङ्गबललभ्यभक्तितो
लभ्य एव रसमूर्तिमान् भवान् ॥
सन्मुखा ननु भवन्ति ये न ते
ते नियन्ति निरयान् विपद्गणान् ॥ १८ ॥

सत्प्रसङ्गबललभ्यभक्तितो लभ्य इति ॥ भवान् सत्प्रसङ्गबललभ्यभक्तितो लभ्य एवेत्यन्वयः । सतां महतां ज्ञानवैराग्यादिभूषणानां श्रीमुकुन्दपदकञ्जमकरन्दमधुव्रतानां प्रकर्षेण सङ्गः, स एव बलं तेन लभ्या सा, तथा चाऽसौ भक्तिश्च तया । तृतीयार्थे तसिल् प्रत्ययः । एवकारश्च क्रियापदेनान्वितोऽत्यन्ताऽयोगव्यवच्छेदाऽर्थः । लभ्यो भवेदेवेत्यर्थः । भक्तिपदेनान्वितोऽन्ययोगव्यवच्छेदाऽर्थः । अन्ययोगोऽत्र साधनान्तरयोगस्तन्निषेधार्थः ।
नाऽहं वेदैर्न तपसा न दानेन न चेज्यया * शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुनेति श्रीमुखोक्तेः । तमेव विशिनष्टि ॥ रसमूर्तिमानिति ॥ रस आनन्दः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति श्रुतेः । स एव मूर्तिर्विद्यतेऽस्य तथा सः । यदात्मको भगवाँस्तदात्मिका व्यक्तिरिति श्रुतेः । ततो बहिर्मुखानिन्द्रियैस्तामेव दृष्टिं करोति ॥ सन्मुखा ननु

भवन्तीति ॥ ये ते सन्मुखा ननु न भवन्ति ते निरयान्नियन्तीति योजना । नरकविशेषणमाह ॥ विपद्गणानिति ॥ विपदां यातनाजन्यदुःखानुभूतानां गणः संघो यत्र तान् । न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः॥माययापहृतज्ञाना आसुरं भावमाश्रिताः। मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहनीं श्रिताः। तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि । न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखा इत्यादिस्मृतेः । स्वकर्मणा जायते तत्र तत्र, जायस्व म्रियस्वेत्यादिश्रुतेश्च ॥ १८ ॥

अथ प्रमाणबलाबलत्वं विचारयँस्तौति–

अक्षमेव सबलं प्रमाणतो
यद्यपीह कथयन्त्यपूर्वजाः ॥
त्वत्स्वरूपगुणवर्णने विभो
वाक्यमेव सबलं प्रतीयते ॥ १९ ॥

अक्षमेवेति ॥ प्रमाणत इति ॥ सप्तम्यर्थे तसिल् । प्रमाणेषु अक्षं प्रत्यक्षमेव सबलं, नान्यदिति । यद्यप्यपूर्वजा आधुनिकाः कथयन्ति तथापि हे विभो, त्वत्स्वरूपगुणवर्णने वाक्यमेव सबलं प्रतीयते । निश्चीयते इत्यर्थः । प्रत्यक्षस्य चन्द्रादित्यमण्डलादिदर्शने मायामृद्घादिदर्शने च व्यभिचारात् । अनुमानस्यापि दृष्टिनष्टायां धूमोद्गारिपर्वतादौ व्यभिचाराच्च दौर्बल्यम् । आगमस्य तु कुत्राऽप्यव्यभिचारात् प्राबल्यमिति भावः ॥ १९ ॥

अथैकत्र एव हि भूतात्मेत्यादिश्रुत्यर्थतया स्तौति–

एकधा च बहुधा प्रदृश्यते
यत्र यत्र नव बिम्बमात्मनः ॥
उत्तमश्च खलु भाग्यवत्सु स
सोऽपि युक्ततम एव सद्वरः ॥ २० ॥

एकधेति ॥ यत्र यत्रेति ॥ यस्मिन् यस्मिन्नुत्तमाधमस्थाने सार्वज्ञादिगुणाऽऽश्रयस्य भगवतस्तव बिम्बम् अन्तरात्ममूर्तिर्दृश्यते । अप्रच्युतगुणशक्तिकत्वेनानुभूयते स भाग्यवत्सु उत्तम इत्यन्वयः । खलु निश्चये । युक्ततमः स एव । किञ्च सद्वरः । सतां मध्ये श्रेष्ठः । तत्रैकधा समष्ट्यन्तरात्मतया, बहुधा व्यष्ट्यन्तरात्मतया । यद्वा एकधा अव्यक्तनामरूपविश्वात्मतया, बहुधा व्यक्तनामरूपविश्वात्मना । यद्वा, एकधा स्वनन्यगताश्रयश्रीवासुदेवरूपेण सार्वज्ञादिकल्याणगुणवत्त्वेन, बहुधा चेतनवस्तुमात्रावच्छिन्नतदन्तरात्मतयेति यावत् ॥ २० ॥

अथ आत्मन्यहंकाराध्यासं निराकरिष्यँस्तस्याहमर्थस्वरूपत्वं प्रतिपादयति—

द्व्यंशताऽपि न च भाति चेतने-
ऽहम्प्रतीतिविषयेऽहमर्थके ॥
त्वच्छरीरमिति हेतुवर्णना-
न्मन्य आत्मपरिशीलने कुतः ॥ २१ ॥

द्व्यंशतेति ॥ अहमर्थके द्व्यंशता न भातीत्यन्वयः । अहमर्थ एवाहमर्थकः । द्वावंशौ द्व्यंशौ, द्वयोरंशौ द्व्यंशाविति वा । द्व्यंशयोर्भावो द्व्यंशता । चेतनाचेतनाध्यासात्मतेति भावः । तस्य लक्षणमाह ॥ अहम्प्रतीतिविषये इति ॥ अहमिति प्रतीतिमात्रस्य विषयः स तथा तत्रेति विग्रहः । इदं रजतमितिवदप्रतीयमानत्वात् ।

तत्र हेतुभूतं विशेषणान्तरमाह ॥ चेतन इति ॥ चेतनत्वात् । यत्र चेतनत्वं तत्र भ्रंशताभावः । ब्रह्मवदित्यर्थः । ब्रह्मणोऽप्यहम्प्रतीतिविषयत्वं श्रुतौ दृश्यते । ब्रह्मैवेदमग्र आसीत् स चात्मानं वेदाहं ब्रह्मास्मीति । तथैव प्रत्यगात्मनोऽपि तच्छ्रूयते । अभयं वै जनक प्राप्तोऽसि यदात्मानमेवाऽवेदहं ब्रह्मास्मीति । मतान्तरेण हेतुमाह ॥ त्वच्छरीरमिति हेतुवर्णनादिति ॥ यस्यात्मा शरीरम्, एष ते आत्मान्तर्याम्यमृत इति श्रुतेः । देहेऽहम्प्रतीतिरात्मविषयिकैव । देहे तत्ताया गौणत्वादित्यर्थः । अथ स्वसिद्धान्तमाह ॥ मन्य आत्मपरिशीलने कुत इति ॥ आत्मपरिशीलने प्रतीचस्तदात्मकपरिशीलने तु भ्रंशता कुतो भातीति ? । न कुतश्चिदपीत्यर्थः । यद्वा, आत्मनस्तत्त्वाहमर्थत्वविचारे भ्रंशता कुतो भाति न । कुतो हेतोः । इदं रजतमित्यत्रेदंत्वरजतत्वयोर्यथाभ्रंशताभानं, न तथाऽहमिति प्रत्ययविषयेऽहमर्थे भ्रंशताभानम् । अध्यासेऽधिष्ठानारोप्यांशभानस्यैव हेतुत्वादिति तात्पर्यार्थः । इदमहं मन्ये । अयमेव राद्धान्तो ममाप्यभिमत इत्यर्थः ॥ २१ ॥

अथ दृष्टिसृष्टिवादं निरासयन्नाह—

> दृष्टिसृष्टिरपि नैव सम्मता
> दर्शनात् तव फलं यतः स्थिरम् ॥
> सार्थको भवति यत्र शब्दकः
> सत्र एव परदेवतात्मनि ॥ २२ ॥

दृष्टिसृष्टिरपीति ॥ दृष्टिरेव सृष्टिर्दृष्टिसृष्टिः । दृष्टौ सृष्टिर्दृष्टिसृष्टिरिति वा विग्रहः । [illegible] सम्मते दृष्ट्यऽभावे सृष्टिनां ... [illegible] ...मा गौणत्वं ... श्रुतीनां च संमता न भवतीति हेतुमाह ॥ ... यतः स्थिरमिति ॥ यतो

यस्माद्धेतोस्तत्र दर्शनात् स्थिरं मोक्षलक्षणं फलं श्रूयते । तमेव विदित्वाऽतिमृत्युमेति, यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतिभ्यः । अन्यथा दर्शनस्य दृष्टिसृष्टित्वे तत्फलस्यापि तथात्वप्रसङ्गात् । श्रवणादीनां साधनानामपि तथात्वेन फलपर्यवसानासम्भवात् । तत्प्रतिपादकशास्त्रबाधाच्च । तदऽसम्भवे शास्त्रस्य सार्थक्यमित्याह ॥ सार्थक इति ॥ यत्र यस्मिन् दृष्टिसृष्टिवादासम्भवे सति सर्व एव शब्दकः सार्थको भवति । को वा तस्य विषय इत्याकाङ्क्षायामाह ॥ परदेवतात्मनीति ॥ परा देवता एवात्मा परदेवतात्मेति विग्रहः । तत्प्रतिपादनेनैव सर्वः शब्दोऽर्थवान् भवतीति यावत् । सर्वे वेदा यत्पदमामनन्तीति श्रुतेः । दृष्टिसृष्टिवादे वैदिकशब्दस्य वैय्यर्थ्यादिति भावः ॥ २२ ॥

अथ ब्रह्मणोऽज्ञानाश्रयत्वं तद्विषयत्वं च केषाञ्चित् संमतं, तन्निराकुर्वन् स्तौति—

> **नाश्रयो, न विषयो, भवान् यतो-**
> **ऽज्ञानतोऽपि करुणानिधे तव ॥**
> **सत्स्वरूपमत आमनन्ति हि**
> **विग्रहं परममङ्गलं परम् ॥ २३ ॥**

नाश्रय इति ॥ हे करुणानिधे । सविसर्गपाठे तवेत्यस्य विशेषणं बोध्यम् । भवान् अज्ञानतोऽज्ञानस्याश्रयो, विषयश्च न भवतीति सम्बन्धः । सूर्यस्यान्धकाराश्रयत्वं, तद्विषयत्वं च यथाऽत्यन्तासम्भाव्यं तद्वदित्यर्थः । सार्वज्ञाज्ञानयोरितरेतरात्यन्तविरोधात् । ननु यथा सूर्यस्य सर्वथा तदयोगेऽप्युलूकदृष्ट्या कल्पितस्य तत्र सत्त्वात्,तथा प्रकृतेऽपि ब्रह्मणि वस्तुतस्तदभावेऽपि अज्ञकल्पितस्य

तत्त्वानिर्देशान्नोक्तविरोध इतिचेन्न। असम्भवात्। न तावदौपनिषदानामस्माकं मते तत्त्वायोगोऽङ्गीक्रियते, प्रत्युत ब्रह्मण्यज्ञानं नासीद्, नास्ति, न भविष्यतीति कालत्रयेऽपि तदसत्ताभावाऽभ्युपगमात्। नाऽपि मीमांसकसांख्याऽऽदीनां तथात्वाऽङ्गीकारः। अज्ञानवादानभ्युपगमात्। परिशेषाद् ये ब्रह्मण्यऽज्ञानाध्यासवादिनस्त एवोल्लूकस्थानीयाः। तदुत्प्रेक्ष्या कल्प्यमाने विरोधाभावात्। नाभ्युद्भयामः। विधात्रा तल्ललाटे लेखनादित्यर्थः। यतो यस्मादऽज्ञानवादोऽत्यन्तश्रुतिविरुद्धस्तस्मात् तव सार्वज्ञ्यादिषाड्गुण्यजलधेः सत्स्वरूपं श्रुतय आमनन्ति। सत्यं ज्ञानमनन्तं ब्रह्म, यः सर्वज्ञः सर्ववित्, य आत्माऽपहतपाप्मा, विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः, सत्यकामः सत्यसंकल्पः, न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते * पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादयः। अशेषहेयगन्धाऽघ्रातमाहात्म्यं, स्वाभाविकानन्ताचिन्त्यापरिमितगुणशक्त्यादिकं तव स्वरूपं श्रुतय आमनन्ति निरूपयन्ति॥ हीति निश्चये। अत एव, परं सर्वोत्कृष्टम्। अक्षरात् परतः परः, प्रधानक्षेत्रज्ञपतिरित्यादिश्रुतेः। किञ्च, परममङ्गलविग्रहं चामनन्तीति योजना। यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति। य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशो हिरण्यश्मश्रुः। आप्रणखात् सुवर्णः। सुपुण्डरीकनयनं मेघाभं वैद्युताऽम्बरम् * द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम्। गोपीगोपगवावीतं सुरद्रुमतलाश्रयम्। दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम्। कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम्। चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृतेरित्याद्याः श्रुतयः॥ २३॥

इदानीं ब्रह्मसाक्षात्कारे श्रवणमन्तरङ्गं साधनत्वेन, ध्यानं तु तदङ्गत्वेनाभ्युपगच्छतां मतं निरासयन्नाह—

ध्यानमङ्गमिति यन्मतान्तरं
तन्न युक्तमत एव माधव ॥
यद्यपि श्रवणतोऽपवर्गदोऽङ्गे
तथापि सुवचं शुभं यतः ॥ २४ ॥

ध्यानमङ्गमिति ॥ हे माधव रमाकान्त, ध्यानमङ्गमिति यन्मतान्तरं तद्युक्तं न भवतीति संबन्धः । आत्मावाऽरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्य इति श्रुतौ आत्मदर्शने श्रवणमन्तरङ्गं, साक्षात्कारहेतुत्वाद् अङ्गि, मनननिदिध्यासनयोः परम्परासाधनत्वादङ्गत्वमिति मतम् । तन्न युक्तम् । युक्तिमद्वै न भवति । तथाहि । यदि श्रवणेन साक्षात्कारस्तर्हि किमर्थं मननादिविधानम् । न हि दर्शनानन्तरं पुनस्तदर्थं साधनान्तरापेक्षानुभ्यचारां दृश्यते । चक्षुर्माश्रग्राह्यत्वात् । दर्शने तारतम्याभावाच्च । अङ्गस्य फलजननसाधनसहायमात्रोपयोगित्वेन फलानन्तरं तदनुपयोगाच्च । नन्वसंभावनादिनिवृत्तये तयोरुपयोग इति चेन्न । साक्षात्कारानन्तरमसंभावनादेरसंभवात् । न हि सूर्यदर्शनानन्तरं कस्यापि तत्र पुनरऽसंभावनादिर्जायते इति तत्र हेतुमाह ॥ अत एवेति ॥ श्रवणमाक्षात्कारयोरन्वयव्यतिरेकाभावादेव । प्रत्युत यत्र श्रवणं तत्र साक्षात्काराऽभाव इति विरुद्धव्याप्तेः सत्त्वादित्यर्थः । तस्माच्छ्रवणं न साक्षात्कारहेतुरिति । ननु श्रवणस्य साक्षात्कारहेतुत्वानङ्गीकारे श्रुतौ दर्शनमुद्दिश्य श्रवणविधानस्यानर्थकत्वापत्त्या श्रुतेर्व्याकोपप्रसङ्गादित्याशङ्कानिरासार्थमाह ॥ यद्यपि श्रवणत इति ॥ श्रवणादपि भवान् मोक्षदो भवति, तथाप्यङ्गं श्रवणमङ्गमित्येव वाच्यं शुभं शोभनमिति.

योजना। तत्र हेतुमाह॥ यतः सुवचामिति॥ सुष्ठु वक्तुं शक्यत्वात्। श्रवणस्य ध्यानाङ्गत्वेन परम्परयैव मोक्षहेतुत्वं, न तु साक्षादन्तरङ्गत्वेनेत्यर्थः। यद्वा, श्रवणमङ्गमित्येव सुवचं वक्तुं शक्यम्। तत्र हेतुर्यतः–शुभमिति॥ श्रुतिमूलत्वेन शुभार्थत्वात्। ततस्तु तं पश्यति निष्कलं ध्यायमानः। ते ध्यानयोगाऽनुगता अपश्यन्नित्यादिश्रुतेः। एवं श्रवणेन साक्षात्कारे मानाभावात्। शृण्वन्तोऽपि बहवो यं न विद्युरित्यादिना तद्विपरीतश्रवणाच्चेति भावः॥ २४॥

अथ शास्त्रार्थमुपसंहरन् भगवच्चरणारविन्दविमुखनिन्दया व्यतिरेकमुखेन तन्निष्ठां विधत्ते—

प्राप्य जन्म यदि मानुषं नरः
सेवते न तव पादपङ्कजम्॥
धिक् च जन्म कुलमादिदेव तद्-
यौवनादि सकलं न शोभते॥ २५॥

प्राप्येति॥ हे आदिदेव, यः पुमान् मानुषं जन्म प्राप्य तव पादपङ्कजं न सेवते तस्य जन्मादिकं धिगित्यन्वयः। देवानामादिकारणमैश्वर्याद्यधिकारप्रदाता हितोपदेष्टा चेति आदिदेवः। यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै इति श्रुतेः। आदिश्चासौ देवश्चेति वा विग्रहः। तत्र जन्म त्रिविधं, शौक्र-सावित्र्य-दैक्ष्यभेदात्। ब्राह्मणादिशुक्रोद्भवं शौक्रं प्रथमम्। उपनयनसंस्कारोद्भवं सावित्र्युपदेशजं द्वितीयम्। श्रीगुरुदीक्षासंस्कारजं तृतीयमिति विवेकः। सर्वस्यापि त्रिविधस्य जन्मनो भगवद्विमुखस्य जीवस्य संसरणहेतुत्वाद् धिक्कारास्पदत्वमित्यर्थः। तथा कुलमपि ऋष्यादिगोत्रपरम्परागतम्। न चैतन्मात्रमेव, किन्तु यौवनादि सकलं न शोभते इति। शवालङ्कारवद् दर्शनानर्हत्वात्।

आदिशब्दस्तस्य कर्मकौशल्याध्ययनादिसङ्ग्रहार्थः । तथाह वामने श्रीप्रह्लादो बलिं प्रति । किं जपैस्तस्य मन्त्रैर्वा किं तपोभिः किमाश्रमैः * यस्य नास्ति परा भक्तिः सततं मधुसूदने । वृथा व्रतं वृथा यज्ञा वृथा वेदा वृथा श्रुतम् । वृथा तपश्च कीर्तिश्च यो द्वेष्टि मधुसूदनम् । शोचनीयः स बन्धूनां जीवन्नपि मृतो नरः । यः पादपङ्कजं विष्णोर्न पूजयति भक्तितः । नूनं हि तस्करौ मोक्षौ हस्तावाजग्रपल्लवौ । न यौ पूजयितुं शक्तौ हरिपादाऽम्बुजद्वयम् । तत्कण्ठं मण्डूकोल्लूकमथवा प्रतिजिह्विका । रोगो वाऽन्यो न सा जिह्वा या न वक्ति हरेर्गुणानिति । श्रीमुखोक्तिश्च । न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमा इत्यादि । मोघाशा मोघकर्माणो मोघज्ञाना विचेतस इत्यादि च समापर्वणि च । कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः । जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचनेति । तस्माच्छ्रीभगवद्वैमुख्यहेतुमासुरभावं त्यक्त्वा तत्पदाऽम्बुजमाश्रित्य सदा तद्भक्तिपरो भवेदिति वाक्यस्य तात्पर्यार्थः । तथैव भगवदुक्तेः—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
उदाराः सर्वएवैते ज्ञानी त्वात्मैव मे मतम् ।
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते, इत्यादिना ।

वामने प्रह्लादोक्तेश्च । प्रवक्ष्यामि हितं तेऽद्य तथाऽन्येषां नृणामपि * इति प्रतिज्ञायाह—

भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषयविषमतोये मज्जतां मानवानां
भवति शरणमेको विष्णुपोतो नराणाम् ॥
ये संश्रिता हरिमनन्तमनध्यमाद्यं
नारायणं सुरगुरुं शुभदं वरेण्यम् ।
शुद्धं खगेन्द्रगमनं कमलालयेशं
ते धर्मराजभवनं न विशन्ति धीराः ॥
स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां, न वैष्णवानाम् ॥
तथाऽन्यदुक्तं नरसत्तमेन
इक्ष्वाकुणा भक्तियुतेन नूनम् ।
ये विष्णुभक्ताः पुरुषा पृथिव्यां
यमस्ततो निर्विषया भवन्ति ॥
सा जिह्वा या हरिं स्तौति तच्चित्तं यत् तदर्पितम् ।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥
येनाऽर्चितो हि भगवाँश्चतुर्बाहुस्त्रिविक्रमः ।
तेनाऽर्चिता न सन्देहो लोकाः साऽमरदानवाः ॥
यथा रत्नानि जलधेरसंख्यातानि पुत्रक ।
तथा गुणा हि देवस्य असंख्येयाश्च चक्रिणः ॥
न तां गतिं प्राप्नुवन्ति श्रुतिशास्त्रविशारदाः ।
या गतिर्धर्मशीलानां सात्त्विकानां महात्मनाम् ।
सा गतिर्गदिता दैत्य भगवद्भक्तिमिनामपि ॥

अनन्यमनसो भक्ता ये नमस्यन्ति केशवम् ।
मुच्यस्ते महात्मानस्तीर्थभूता भवन्ति ते ॥
तिष्ठन् गच्छन् स्वपन् जाग्रन् पिबन्नश्नन् ह्यभीक्ष्णशः ।
ध्यायेन्नारायणं यस्तु न ततोऽन्योऽस्ति पुण्यभाक् ॥
येषां नित्यप्रियो विष्णुस्ते विष्णोः सततं प्रियाः ।
न ते पुनः सम्भवन्ति तद्भक्तास्तत्परायणाः ॥
विष्णुभक्तिप्रसक्तानां जनानां या परा गतिः ।
सा तु जन्मसहस्रेण न सर्वाभिरवाप्यते, इत्यादिना ।

किञ्च ।

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकरा, इत्यन्वयव्यतिरेकोक्तेः ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदेति श्रीसूत्रकारनिर्णयवचनाच्च ॥ ॥ २५ ॥

मन्दानामुपकारार्थं तोषार्थं च मनीषिणाम् ।
श्रीव्रजेशप्रसादार्थं साफल्यं यास्यतु श्रमः ॥ १ ॥

इति श्रीश्रुतिसिद्धान्तमञ्जर्याख्या सविशेषनिर्विशेषश्रीकृष्णस्तवराजटीका समाप्ता ॥



श्रीराधाकृष्णाभ्यां नमः

अथ सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्यारूपः ।

# श्रुत्यन्तसुरद्रुमः ।

विद्वद्वरश्रीपुरुषोत्तमप्रसादविरचितः ।

---

नतोऽस्मि सर्वेश्वरमादिदेवं
प्रपन्नसंरक्षणबद्धकक्षम् ॥
कारुण्यवात्सल्यदयादिसिन्धुं
जगद्गुरुं ब्रह्मशिवादिवन्द्यम् ॥ १ ॥

यो ब्रह्मेशसुरादिपूज्यचरणः श्रीश्रीनिवासाभिधः
कारुण्यादिवशोऽवतीर्य हावनावालोडयच्चोयधिम् ॥
वेदाख्यं च निरूप्य भाष्यमऽमृतं चापाययत् स्वाश्रितान्
सन्तत्याख्यश्रियं स्ववक्षसि दधौ तं चाश्रये सद्गुरुम् ॥ २ ॥

दृश्यते योऽनिशं निस्वैर्मुक्तैर्यो गम्यते हरिः ॥
धीयते योगिभिश्चित्ते तं श्रीकृष्णं समाश्रये ॥ ३ ॥

इह खलु मन्दबुद्धिजनतावाहुल्यं निरीक्ष्य तद्धितं परिमृष्यमाणो भगवान् ग्रन्थकारस्तदुद्दिधीर्षुः पूर्वाचार्यप्रणीतशारीरकमीमांसादिवेदान्तशास्त्रार्थमल्पबुद्धिभ्योऽपि कार्त्स्न्येन जिग्राहयिषया स्तोत्ररूपेण सञ्जग्राह । तस्य मिताक्षरैः समासतो व्याख्यानं समारभ्यते । तत्र तावद् ब्रह्मस्वरूपादि निर्दिशन् स्तौति ॥

शान्तिकान्तिगुणमन्दिरं हरिं
स्थेमसृष्टिलयमोक्षकारणम् ॥

व्यापिनं परमसत्यमंशिनं
नौमि नन्दगृहचन्दिरं प्रभुम् ॥ १ ॥

शान्तीत्यादिना ॥ अहं हरिं नौमीति योजना । नौमि स्तौमि । एतेनाऽथातो ब्रह्मजिज्ञासेत्युपक्रमाधिकरणार्थः संगृहीतो बोध्यः । तथाहि । जिज्ञासा नाम जिज्ञास्यस्य वस्तुनस्तत्स्वरूपशक्त्यादिभिर्निरतिशयबृहत्त्वानुसंधानरूपो विचारविशेषः । स एव स्तवनपदार्थोऽत्र वर्णनीयतया विधत्ते इति तदेवयार्थोऽवगम्यते । सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्यर्थस्याऽप्यत्रान्तर्भावात् । ब्रह्मस्वरूपगुणादीनामेवात्रायोगान्ययोगव्यवच्छेदाभ्यां निर्णीयमानत्वादिति भावः । तत्र वर्णयिष्यमाणेषु स्वरूपगुणशक्त्यादिषु तावत् स्वरूपं निर्दिशति ॥ परमसत्यमिति ॥ परमसत्त्वं नाम, न तत्समश्चाभ्यधिकश्च दृश्यते इत्यादिश्रुत्युक्तातिशयसाम्यशून्यत्वे सति स्वान्तन्यसमानाधिकरणत्वं, स्वतन्त्रसत्ताश्रयत्वमिति यावत् । सदेव सोम्येदमग्र आसीत्, सर्वस्य वशी सर्वस्येशान इति श्रुतेः ॥ नौमीति ॥ तत्स्वरूपगुणशक्त्यादिविषयकविचारविषयीकरोमीत्यर्थः । भजतां पापहारित्वाद्धरित्वम् । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृत इत्यादिस्मृतेः । एवं प्रथमसूत्रार्थः संग्रहेणोक्तः । अथ, जन्माद्यस्य यत इति लक्षणसूत्रार्थं निरूपयन् स्तौति ॥ स्थेमसृष्टिलयमोक्षकारणमिति ॥ तत्र स्थेमा स्थितिः पालनं, सृष्टिः सर्गः, लयः संहारः, मोक्षो भगवद्भावापत्तिलक्षणस्तेषां कारणम् । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म तद्विजिज्ञासस्वेति श्रुतेः । विष्णोः सकाशादुद्भूतं जगत्तत्रैव संस्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च यः । यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । य-

स्मिंश्च मलयं यान्ति पुनरेव युगक्षये । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते इत्यादिस्मृतेश्च। जगत इत्यत्र सम्बध्यते। नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयभूतस्य तर्कागोचररचनस्य स्थेयादिकारणमिति वाक्यार्थः । एतेन सूत्रमपि व्याख्यातं बोध्यम् । श्रीभगवद्देवाचार्य्यपादैः सिद्धान्तजाह्नव्यां तथैवोक्तत्वात् । किञ्च, परमाणव एव कारणमिति केषां चित्तार्किकादीनां दुराग्रहस्तन्निराकरोति ॥ व्यापिनमिति ॥ व्यापनशीलत्वश्रवणाज्जगत्कारणस्य न परमाणूनां कारणत्वसम्भव इति यावत् । यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा * अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेः । अयमभिप्रायः । पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो नित्याः मलयकालेऽवतिष्ठन्ते । सर्वत्र त्रिभ्यः समवाय्यसमवायिनिमित्ताभिधेयेभ्यः कारणेभ्यः कार्य्यनिष्पत्तिः । यथा पटरूपकार्यस्य तन्तवः समवायिकारणम् । तेषामितरेतरसंयोगोऽसमवायिकारणम् । तुरीवेमकुविन्दादि निमित्तकारणम् । तथा परमाणवः समवायिकारणम् । तेषां संयोगोऽसमवायिकारणम् । ईश्वरेच्छादि निमित्तकारणम् । तत्रेश्वरेच्छावशेनाद्यं कर्म वायवीयेष्वणुषूत्पद्यते । ततः संयोगस्तेन द्वाभ्यां द्व्यणुकमुत्पद्यते । एवं त्र्यणुकादिक्रमेण महान् वायुरुत्पद्यते । स च दोधूयमानस्तिष्ठति । तथैव तैजसपरमाणुभ्यो महानग्निरुत्पन्नो जाज्वल्यमानस्तिष्ठति । तथाऽऽप्येभ्यो महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तथा पार्थिवपरमाणुभ्यः पृथिव्युत्पन्ना निश्चला तिष्ठतीति । किञ्चायुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः समवायः । यथेह तन्तुषु पटः, गवि गोत्वम्, इह पटे शुक्लत्वमिति कार्य्यकारणयोः। सामान्यविशेषयोर्गुणगुणिनोश्च सम्बन्धास्तिष्वपि समानल-

-क्षणः, स चैको नित्यः सर्वगतो व्योमवदिष्यते । युतसिद्धानां तु संयोगः । यथा रज्जुघटयोरिति तेषां प्रक्रिया ॥ सा तुच्छा ॥ अनुपपन्नत्वात् । तथाहि । न तावत्परमाणुष्वाद्यकर्मोत्पत्तिकथा मनोज्ञा । प्रलये यत्नाभिघातादीनां कर्महेतूनामसम्भवात् । नचादृष्टस्यात्र हेतुत्वं कल्प्यते इति वाच्यम् । विकल्पासहत्वात् । परमाणुगतमाद्यं कर्म स्वगताऽदृष्टप्रयुक्तम् ? आत्मगताऽदृष्टप्रयुक्तं वा ?॥ नाद्यः । अदृष्टस्यात्मासाधारणविशेषधर्मस्य परमाणुवृत्तित्वायोगात् । अनभ्युपगमाच्च । अभ्युपगमे च सदोत्पादकत्वप्रसङ्गात् । अपसिद्धान्तापत्तेश्च । न द्वितीयः । तस्यात्मगतत्वेऽपि तदात्मनां चैतन्याभावेन कार्योत्पादनयोग्यताऽभावात् । अन्यथा प्रलयाभावप्रसङ्गो दुर्वारः । नाऽपि समवायाऽभ्युपगमः प्रामाण्यार्हः । यथा द्व्यणुकं समवायसम्बन्धेन स्वकारणे समवेतमत्यन्तभिन्नत्वात् । तथा समवायोऽपि समवायिभ्यां समवायसम्बन्धान्तरेण समवेतव्यः । सोऽपि सम्बन्धान्तरेणेत्यनवस्था । नच समवायस्य स्वयं सम्बन्धरूपत्वान्न सम्बन्धान्तरापेक्षेति वाच्यम् । संयोगस्यापि स्वयं सम्बन्धरूपत्वसाम्येन समवायानपेक्षत्वप्रसङ्गात् । तथाच संयोगः संयोगिभ्यां सम्बन्धः समवायपूर्वक इति प्रतिज्ञाहानिप्रसङ्गात् । नच संयोगो गुणत्वात् समवायमपेक्षत इति वक्तुं शक्यम् । पारिभाषिकत्वात् । समवायोऽपि गुण इति परिभाषितुं शक्यते । नचाऽयुतसिद्धत्वं कार्य्यकारणयोः । पूर्वसिद्धं कारणं, पश्चात्कालीनं कार्य्यम् । तत्रापृथक्सिद्धत्वमनयोः कथम् । नचान्यतरापेक्षमऽयुतसिद्धत्वमिति वाच्यम् । तथापि द्वयोः सतोः सम्बन्ध इति कृत्वोत्पन्नकार्य्यं क्षणमात्रमवस्थाय समवायेन सम्बध्यते इति दूषणं तदवस्थमेव । अथोत्पत्तिरेव समवाय इत्ययुक्तम् । तत्समवायस्य नित्यत्वाभ्युपगमात् । उत्पत्तेश्चानित्यत्वात् । उत्पत्तिनित्यत्वे च

कार्य्यत्वावच्छिन्नस्य नित्यत्वं दुर्वारम् । कारणव्यापारानर्थक्यं च । किञ्च, परमाणवः प्रवृत्तिस्वभावा, निवृत्तिस्वभावा वा, उभयस्वभावा वा, अनुभयस्वभावा वा ? । आद्ये नित्यमेव सृष्टिः स्यात् । प्रलयाभावश्च । द्वितीये सर्गाभावो, नित्यप्रलयश्च । नाऽपि तृतीयचतुर्थौ । उभयस्वभावत्वस्येतरेतरविरोधात् सर्वथाऽनुपपत्तिरेव । किञ्च, परमाणवो रूपादिगुणवन्तो, न वा । नाद्यः । अनित्यत्वापत्तेः। परमाणवोऽनित्या, रूपादिमत्त्वात् । घटादिवदित्यनुमानात् । न द्वितीयः । सिद्धान्तभङ्गात् । कार्य्यस्यापि रूपादिशून्यत्वापत्तेश्च । अथ रूपादि नेष्येत, कार्य्यं रूपादिमन्न स्यात् । रूपादिमन्तो नित्याश्चेति तव वचनात् । तव मते कारणवृत्तिरूपादरेव कार्य्यगतरूपादिकारणत्वात् । एतेन, उभयथापि न कर्मातस्तदभावः, समवायाभ्युपगमाच्च साम्यादनवस्थितेरित्यादिसूत्राणि व्याख्यातानि । अलमतिविस्तरेण । तस्मात् कार्य्यव्यापनशीलं परं ब्रह्मैव जगत्कारणमिति सिद्धम् ॥

ननु माऽस्तु परमाणूनां कारणत्वमुक्तदोषेभ्यः, किन्तु प्रधानस्यैव व्यापनशीलत्वात् कारणत्वमभ्युपेयम् । तथाच, मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष इति तत्त्वसङ्ग्रहवाक्यादिति । अस्यार्थः । मूलप्रकृतिः प्रधानम् अविकृतिः । अजत्वात् । महदहङ्कारौ पञ्च भूतानि, सूक्ष्माणि पञ्च तन्मात्रासंज्ञानि, सप्त महदाद्याः प्रकृतिविकृतय इति । तत्त्वान्तरोपादानत्वात् प्रकृतित्वम् । महतो बुद्धिसंज्ञस्याहङ्कारं स्वकार्यं प्रति उपादानत्वात् प्रकृतित्वं, प्रधानापेक्षया तत्कार्य्यत्वाद्विकृतित्वम् । तथैवाहङ्कारादीनामपि स्वस्वकार्य्यापेक्षया प्रकृतित्वं, स्वस्वकारणापेक्षया विकृतित्वमनुसन्धेयम् । किञ्च षोडशकस्य षोडशसंख्यावच्छिन्नस्य एकादशेन्द्रियपञ्चमहाभूतस-

मुदायस्य विकृतित्वं विकारत्वमेव, न प्रकृतित्वमिति । पुरुषस्तु कूटस्थ एव उभयत्वाभावादिति यावदितिचेन्न । आनुमानिकत्वेन शब्दप्रमाणहीनत्वात् । ननूक्तस्मृतेरेवात्र मानत्वान्नोक्तदोषावकाश इतिचेन्न । श्रुतिविरुद्धायास्तस्याः प्रामाण्याभावात् । तथैव सूत्रितं भगवता जैमिनिना, विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति । अस्यार्थः । श्रुतिस्मृतीनामितरेतरविरोधे कस्या बाध इति विचार्यते । तत्र, औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतेः, औदुम्बरीं वेष्टयितव्येति स्मृतेः । यदि स्पर्शोऽभ्युपगमस्तर्हि स्मृतेर्बाधः । यदि सर्ववेष्टनं तदा श्रुतेर्बाध इति प्राप्ते राद्धान्तः । विरोधे त्वित्यादि । स्मृतीनां श्रुतिविरोधे सति श्रुतीनां निरपेक्षं प्रामाण्यं स्यात् । स्मृतिमनपेक्ष्यैव प्रामाण्यं, न स्मृतिविरोधोऽत्र विचारणीयः । श्रुत्यविरोधे तु अनुमानमपि । अनुमीयते श्रुत्यर्थो येन तदनुमानं स्मृतिरपि प्रमाणं, न तु श्रुतिविरोधेन । श्रुतीनां स्मृतिनिरपेक्षतया प्रामाण्यं स्वत एव । स्मृतीनां तु तन्मूलकत्वाच्छ्रुतिसापेक्षत्वात् । तदविरोधे सत्येव प्रामाण्यं, विपर्यये त्वऽप्रामाण्यमित्यर्थः । किञ्च, यन्मनुरवदत्तद्भेषजमिति श्रुतिसिद्धौषधरूपं भगवतो मनोरपि निर्णयरूपं वचनम् । या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः॥ ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इति । तस्मादप्रामाण्यं तदवश्यमेव । ननु, यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित इति श्रुतिमूलकत्वात् पूर्वोक्तस्मृतेः कथं श्रुतिविरोधः । पञ्च पञ्चजना इति पञ्चविंशतितत्त्वानि श्रुतिप्रतिपादितानि दृश्यन्ते तान्येव स्मृतौ गृहीतानीतिचेन्न । उक्तमन्त्रस्य पञ्चविंशतिसंख्याकतत्त्वप्रतिपादनपरत्वाभावात् । तथाहि उपक्रमे तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति ज्योतिषां सूर्यादीनामपि प्रकाशकत्वात् परब्रह्मभूतः श्रीवासुदेव एव ज्योतिःशब्देन प्रतिपाद्यः ।

तथैव श्रीवासुदेवस्य अस्मिन् वाक्ये, यस्मिन्निति यच्छब्देन परामृश्य पञ्चपञ्चजनस्याकाशस्य चाधारतया निरूप्यते इति व्यक्तमेव पञ्चजना इत्यत्र संख्याशब्दः संज्ञापरः । यथा सप्तर्षयः सप्तेत्यत्रैकैकोऽपि सप्तर्षिपदवाच्यस्तथा पञ्चजनशब्दोऽपि बोध्यः । दिक्संख्ये संज्ञायामिति पाणिनिस्मृतेः । स्युः पुमांसः पञ्चजना * इत्यमरकोशाच्च । तथाचावयवार्थमनपेक्ष्य पुरुषमात्राभिधानपरोऽयं पञ्चजनशब्द इति सिद्धम् । पुरुषस्यात्रानुपपत्त्या लक्षणया तत्सम्बन्धिपरः । प्राणादयः पञ्चजना इति यावत् । ते कतीत्यपेक्षायां पञ्चत्वसंख्यान्वयात् प्राणादयः पञ्चेति सिद्धम् । माध्यन्दिनशाखोक्ताश्च, प्राणश्चक्षुः श्रोत्रमन्नं मनश्चेति, प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरिति वाक्यशेषात् । प्राणादयो वाक्यशेषादिति सूत्राच्च । ननु काण्वानां माध्यन्दिनानां च यस्मिन् पञ्च पञ्च इति मन्त्रपाठस्याऽविशेषेऽपि, प्राणस्य प्राणमिति वाक्यशेषेऽन्नशब्दहीनत्वात् काण्वपाठस्य । तथाचोक्तार्थस्यासिद्धेरितिचेन्न । तेषां पूर्ववाक्यपठितज्योतिःशब्देन पञ्चत्वसंख्यानिर्णये तात्पर्यात् । ज्योतिषैकेषामसत्यन्ने इति सूत्रात् । ननु ज्योतिःशब्दे उभयेषामपि वाक्ये सामान्यतः पञ्चपाने कथमेकेषामेव तस्य ग्रहो, नान्येषामिति वैषम्यं नियामकाभावादितिचेन्न । अपेक्षाभेदस्यैवात्र नियामकत्वात् । माध्यन्दिनानां हि समानमन्त्रपठितप्राणादिपञ्चकस्य लाभान्नास्मिन्मन्त्रान्तरपठिते ज्योतिषि अपेक्षा । काण्वानां तस्याभावाद् भवत्यन्यापेक्षा । अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाऽग्रहणे । यथा समानेऽप्यतिरात्रे वचनभेदात् षोडशिग्रहणाग्रहणे, तथा प्रकृतेऽपीति नोक्तदोषावकाशः । किञ्च, पञ्चपञ्चजनशब्दस्य पञ्चविंशतिसंख्याकस्त्वदुक्ततत्त्ववाचकत्वाङ्गीका-

हेऽपि नोक्तप्रक्रियासिद्धिराशसनीया । यस्मिन्निति यच्छब्दवाच्यस्य सर्वाधारस्याकाशस्य च पृथक्कण्ठरवेण श्रुत्या पठितत्वात् । तथा सप्तविंशतितत्त्वानि संपद्यन्ते । वस्तुतस्तु, यो ज्योतिषां सूर्यादीनामपि प्रकाशको, यश्च पञ्चजनशब्दाभिधेयानां प्राणादीनामाकाशस्य चाधारस्तेषामप्यन्तरात्मा च तमेव सर्वात्मानं ब्रह्मशब्दाभिधेयमहं मन्ये, तमेवाऽमृतं विद्वान् मृतोऽपि संसार्यऽपि अमृतं ब्रह्मभावं प्राप्नोतीति वाक्यसंग्रहार्थः । एतेन, न संख्योपसंग्रहादपि नानाभावादतिरेकाच्चेत्यधिकरणं व्याख्यातम् । ननु,सदेव सोम्येदमग्र आसीदितिश्रुतेरत्र मानत्वम् । सच्छब्दवाच्यप्रधानस्यैवात्र वाच्यत्वादितिचेत्तु तत्राह ॥ प्रभुमिति ॥ समर्थं सार्वज्ञ्याद्यचिन्त्यानन्तगुणाश्रयमित्यर्थः । तद्धर्माणामचेतनेऽनुपपन्नत्वात् । तथाहि । तदैक्षत बहु स्यां प्रजायेयेत्यादिना कारणस्येक्षणबहुभवनसंकल्पत्वादियोगश्रवणात् । अचेतने प्रधाने तदनुपपत्तेः । किञ्च, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये इति कारणविदो मोक्षोपदेशात् प्रधानस्योपासनं तज्जन्यज्ञानस्य च मोक्षहेतुत्वं त्वयाप्यनभ्युपगतमेव । अन्यथा अचेतनविषयकज्ञानस्य सर्वेषामपि सत्त्वात् सर्वमोक्षप्रसङ्गः । अचेतनापत्तिरेव मोक्षश्च स्यात् । किञ्च, ऐतदात्म्यमिदं सर्वमिति सर्वस्य चेतनाचेतनवस्तुनस्तदात्मकत्वेन तादात्म्योपदेशाद् अचेतनस्य तादात्म्योपपत्तावपि चेतनस्य तादात्म्यं कथमुपपन्नमिति । किञ्च, येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति श्रुत्या, यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिदृष्टान्तैः कारणविज्ञानात् कार्यविज्ञानं प्रतिज्ञातम् । प्रधानकारणवादे तस्या बाधापत्तेः । प्रधानज्ञानात्तदुपादेयस्याकाशादेरचेतनवर्गस्य विज्ञाने जातेऽपि चेतनस्य तदुपादेयत्वाभावात् तज्ज्ञानासिद्धेरिति । तस्मान्न सच्छब्दवाच्यं प्रधानं कथमप्यु-

पपद्यते । ईक्षतेर्नाशब्दमित्यादिसूत्रात् ॥

नतु चेतनकारणवादेऽपि विप्रतिपत्तिबाहुल्यादसम्भवस्त्वमेव । तथाहि । उपादेयभूतस्य विकारस्योपादानगतधर्मानुविधायित्वनियमः । दृष्टश्चाऽयं सुवर्णविकारभूते कुण्डलादौ । प्रकृते तु कारणधर्मस्य चेतनत्वस्याकाशादिष्वनुवृत्त्यभावात् । अन्यथा तेषामपि चैतन्याविशेषाद् भोक्तृभोग्यत्वविभागाऽनुपपत्तिप्रसङ्गः । आकाशादयो न चेतनोपादेयाः । अत्यन्तवैलक्षण्यात् । अग्निजलवत् । गोअश्ववच्चेति प्रयोगादितिचेन्न । उक्तप्रयोगस्य हेत्वाभासत्वात् । तथाहि । यत्र यत्रोपादानोपादेयभावस्तत्र तत्र सादृश्यमिति व्याप्तिर्न तावन्नियता, यथा तथात्वं स्यात् । वैलक्षण्येऽपि कार्यकारणभावस्य प्रत्यक्षगम्यत्वात् । मुक्तादन्नात् केशनखादिरूपं विलक्षणं, गोमयाच्च वृश्चिको जायते । किञ्च । कार्यकारणभावे सर्वथा सादृश्यं विवक्षितं भवता ? किञ्चित्साधर्म्यं वा ? । नाद्यः । कार्यकारणभावस्यैवासिद्धेः । द्वितीये तु इष्टापत्तिः । सत्तादेर्ब्रह्मधर्मस्याकाशादावपि सत्त्वात् । तथाच प्रयोगः । आकाशादिप्रपञ्चजातं, ब्रह्मोपादेयम् । सत्तादिसाधर्म्यात् । यन्नैवं तन्नैवम् । अग्निसेचनयोरिवेत्युक्तहेतोः सत्प्रतिपक्षत्वं बोध्यम् । किञ्च, प्रत्यक्षादिप्रमाणागोचरे ब्रह्मणि तर्कामवेशाच्छब्दस्तु ब्रह्मण एव जगत्कारणत्वं विदधाति, नारायणाज्जायते प्राणो मनः सर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारणी, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादिश्रुतेः । अतश्च सक्षेपमिदं शृणुध्वं नारायणः सर्वमिदं पुराणः ॥ स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूय इति पुराणवचनम् । तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्य इत्यापस्तम्बः । काया ब्रह्मेन्द्राद्यो देवाः, मूलमुपादानम्, शाश्वतिक एकरसो विका-

रशून्य इत्यर्थः इत्यादिस्मृतिभ्यश्च । नैषा मतिस्तर्केणापनेया । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदिति । तर्काऽप्रतिष्ठानादित्यादिश्रुतिस्मृतिसूत्रैस्तर्काणां निषेध्यत्वात् । ननु, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्या, यस्तर्केणानुसंधत्ते स धर्मं वेद नेतर * इति स्मृत्या च तर्कस्य निर्णयौपयिकत्वप्रतिपादनात् कथं निषिध्यते इति चेत् सत्यम् । तथापि श्रुतिमूलकस्यैवोपादेयत्वं, न तद्विरुद्धस्येति ब्रूमः । तर्को नाम– प्रमाणाऽनुग्राहक ऊहः । अज्ञातनिश्चये वस्तुनि क्रियमाणस्तत्त्वज्ञानैकप्रयोजनस्तर्कः । तथाहि । यथाऽग्नेर्विस्फुलिङ्गा इत्यादिश्रुत्या प्रत्यगात्मनो जन्म प्रतीयते, न जायते म्रियते वा विपश्चिदिति श्रुत्या च तदभाव इति, तत्र नित्यो वाऽनित्यो वेति संशये । आत्मा नित्य एव । यदि नित्यो न स्यात्तर्हि कृतनाशाकृताभ्यागमप्रसङ्गः स्यादित्यादिरूपो, नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः । अविनाशी वारे आत्माऽनुच्छित्तिधर्मेत्यादिशास्त्रमूलकत्वात् प्रामाण्यसहायत्वेन गृह्यते । आगमस्याऽविरोधेन ऊहनं तर्क उच्यते * इति लक्षणवचनात् । अविज्ञाततत्त्वार्थे कारणोपपत्तितस्तत्त्वज्ञानार्थ ऊहस्तर्क इति न्यायसूत्रात् । किञ्च, असद्वा इदमग्र आसीत्, सदेव सोम्येदमग्र आसीदिति श्रुतिभ्यां कार्यस्य सत्त्वासत्त्वोभयविधत्वे, सत्यं वाऽसत्यं वेति संशये । कार्यं सत्यं न स्यात् तर्हि असत उत्पत्तिरपि न स्यादित्यादिश्च, असद्व्यपदेशादितिचेन्न धर्मान्तरेण वाक्यशेषादिति कथमसतः सज्जायेतेत्यादिशास्त्रमूलत्वाद् ग्राह्यः । अन्यश्च शास्त्रविरुद्धो हेयः । यदि प्रपञ्चो मिथ्या न स्यात् तर्हि अनिर्मोक्षप्रसङ्गः स्याद्, यदि सेश्वरं जगन्मिथ्या न स्यात्तर्हि अद्वैतसिद्धान्तभङ्गः स्यादित्यादीनां श्रुतिप्रमाणशून्यत्वाद्धेयत्वमिति । तथाच तर्काभ्युपगमशास्त्रस्य श्रुतिमूलकतर्कविषयत्वेन तर्क-

निषेधविषयकशास्त्रस्य च शास्त्रविरुद्धशुष्कतर्कविषयत्वेन नैराकाङ्क्ष्यादनवद्यमिति सङ्क्षेपः ॥

किञ्च तत्र पक्षेऽपि उक्तदोषस्य साम्याचत्राऽऽलोच्यते मनीषिणा । तथाहि । तत्र पक्षे त्रिगुणमचेतनरूपं निरवयवं प्रधानं तत्तत्कार्याकारेण परिणमते । तत्र निरवयवनीरूपादिमतः प्रधानात् सावयवरूपादिमत्कार्यस्योत्पत्त्यसंभवस्तत्राऽप्यविशेष इति त्वयैव विचार्य्यताम् । यत्रोभयोः समो दोषः परिहारोऽपि वा समः ॥ नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे इति न्यायात् । अन्यथा सर्वस्य कार्य्यस्य नीरूपत्वनिरवयवत्वमेव स्यात् । तथात्वे च कार्यप्रत्यक्षं नामरूपविभागेन न स्यादित्यलं विस्तरेण ॥

सिद्धान्ते तु ब्रह्मणोऽचिन्त्यानन्ताघटघटनापटीयःशक्तियोगात् सर्वं समञ्जसम् । तस्मात् सार्वज्ञ्याद्यनन्तसद्गुणशक्त्याश्रयं परं ब्रह्मैव जगत्कारणं, न प्रधानमिति सिद्धम् । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, यच्चेहास्ति यच्च नास्ति सर्वं तस्मिन् समाहितं, तस्मिन् कामाः समाहिताः, एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः, सत्यकामः सत्यसंकल्पः, नामरूपे व्याकरवाणि, स कारणं करणाऽधिपाधिपः, न तस्य कश्चिज्जनिता न चाधिपः, तमीश्वराणां परमं महेश्वरं, न तत्समश्चाभ्यधिकश्च दृश्यते, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिभ्यः ॥

परमते तु ब्रह्मकारणवादस्य सर्वथाऽनुपपत्तिरेव । तथाहि । किं शुद्धं चिन्मात्रं जगत्कारणम् ? अविद्योपहितं वा ? तदध्यासाश्रयं वेति विवेचनीयम् । अत्राहुः केचित् । शुद्धमेवोपादानम् । जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः । तथा चास्मन आकाशः सम्भूत इत्यादिवाक्येषु ब्रह्मवाचिनामात्म-

दिशब्दानां शुद्धे लक्षणैव स्वीकार्य्येति । तन्न । शुद्धशब्देन, शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते * इत्यादिशास्त्रोक्तो भगवान् महाविभूतिर्विवक्षितः ? सर्वविशेषहीनोऽखिलप्रमाणशून्यो, निर्विशेषो वेति । नाद्यः । अनङ्गीकारात् । अन्यथा सिद्धान्तभङ्गात् । अस्मत्पक्षप्रवेशाच्च । नाऽपि द्वितीयः । सर्वविशेषशून्यस्य श्रुत्युक्तेक्षणबहुभवनसंकल्पाद्यनुपपत्तेः सर्वप्रमाणशून्यस्यावस्तुत्वात्, निर्विशेषत्वानुपपत्तेर्वक्ष्यमाणत्वाच्च । नाप्युपहितम् । विकल्पासहत्वात् । उपहितं ब्रह्म विम्बरूपं, प्रतिविम्बरूपं वा जगत्कारणम् । न च विम्बात्मकमेव । तथाहि । एकमेव चैतन्यं विम्बत्वाक्रान्तम् ईश्वरचैतन्यं, प्रतिविम्बत्वाक्रान्तं जीवचैतन्यम् ॥

तत्र विम्बप्रतिविम्बकल्पनोपाधिश्चैकजीववादेऽविद्यारूपः, अनेकजीववादे चान्तःकरणानीति तत्रविम्बरूपपरमेश्वर एव जगत्कारणमिति वाच्यम्। अनुपपन्नत्वात्। ग्रीवास्थमुखस्य दर्पणप्रदेश इव विम्बरूपचेतनस्य परमेश्वरस्य जीवप्रदेशे व्याप्त्यभावात् सर्वान्तर्यामित्वाऽनुपपत्तेः । नाऽपि प्रतिविम्बरूपः परमेश्वरो जगत्कारणं सम्भवति । तथाच सामान्यं चैतन्यं विम्बम्, अविद्यात्मकमायायां प्रतिविम्बमीश्वरचैतन्यमन्तःकरणेषु प्रतिविम्बं जीवचैतन्यमिति शक्यो वक्तुम । अविद्याकृतदोषा जीव इव जगत्कारणे परमेश्वरेऽपि स्युः । उपाधेः प्रतिविम्बपक्षपातित्वनियमादिति संक्षेपः । प्रतिविम्बवादनिरासस्य चाऽग्रे विस्तारेष्यमाणत्वात् । नाऽपि चरमः । ब्रह्मणि अज्ञानाऽसम्भवात् । निर्विशेषस्वप्रकाशात्मके ज्ञानेऽज्ञानस्य, सूर्य्ये तमस इवात्यन्तविरुद्धत्वात् । किञ्चाज्ञानं वस्तुरूपं द्रव्यं किञ्चिद कल्पितं ? तुच्छरूपं वा ? । नाद्यः । अनभ्युपगमात् । अन्यथा सिद्धान्तभङ्गात् । नाऽपि द्वितीयः । कल्पनाप्रयोजकाभावात् । तथाहि । अज्ञानं स्वप्रयुक्तं, ब्रह्मप्रयुक्तमुभयप्रयुक्तमन्य-

प्रयुक्तं वा ? । नाद्यः । आत्माश्रयापत्तेः । तस्याक्रियत्वेन प्रयोजकत्वासिद्धेश्च । न द्वितीयः । तस्य निरीहत्वेन प्रयोजकत्वायोगात् । अन्यथा प्रयोजकस्य ब्रह्मणो नित्यत्वेन प्रयोज्यस्यापि नित्यत्वापत्त्या निवृत्त्यभावप्रसङ्गात् । अनिर्मोक्षप्रसङ्गाच्च । तस्य निरीहत्वस्वभावत्यागप्रसङ्गश्च । सविशेषत्वापत्तेश्च । न तृतीयः । अन्योन्याश्रयापत्तेः । न चतुर्थः । उभयेतरतत्त्वानङ्गीकारात् । अज्ञानान्तरकल्पनाया चक्रकापत्तेस्तस्यापि प्रयोजकान्तरकल्पनेऽनवस्थापत्तेश्च ॥

तस्मात् कल्पनाप्रयोजकासिद्ध्या प्रयोज्यस्य सुतरामसिद्धेः । नाऽपि तस्य मिथ्यात्वम् । लक्षणप्रमाणाभावात् । किं तावत् तस्य लक्षणम् ? । सत्त्वानधिकरणत्वमितिचेन्न । निर्धर्मके ब्रह्मण्यतिप्रसङ्गात् । नच निर्धर्मकत्वादेव तस्य सत्त्वानधिकरणत्वमिति वाच्यम् । निर्धर्मकत्वरूपस्य हेतोः सत्त्वानधिकरणत्वरूपसाध्यस्य च भावाऽभावव्याप्तिरेतरव्याघातेनाभावरूपधर्मनिषेधायोगात् । अन्यथा असत्त्वानधिकरणत्वस्यापि तत्र भावेन तद्व्याष्टसर्थमनिर्वाच्यलक्षणे सत्त्वानधिकरणत्वरूपविशेषणायोगात् । न तु प्रमित्यऽविषयत्वं मिथ्यात्वम् । निर्विशेषे अप्रमेये ब्रह्मण्यतिव्याप्तेः । नच तस्य वेदान्तजन्यवृत्तिव्याप्यत्वान्नोक्तदोष इति वाच्यम् । शुक्तिरूप्यादेरपि व्यवसायद्वाराऽनुव्यवसायं प्रति साक्षाद्बाधकज्ञानं प्रति निषेध्यत्वेन विषयत्वात् । सत्त्वप्रकारकप्रमां प्रति साक्षादविषयत्वं चेदात्मव्यक्ताव सत्त्वाभाव एव मिथ्यात्वं स्यात् । तथात्वेचाऽपसिद्धान्तापत्तेः । नाऽपि भ्रान्तिज्ञानविषयत्वम् । ब्रह्मणोऽप्यधिष्ठानत्वेन तद्विषयत्वात् । नाऽपि भ्रान्तिमात्रविषयत्वं तत्त्वम् । तस्योक्तरीत्या शुक्तिरूप्यादावप्यभावात् । अ यस्ततया भ्रान्तिविषयत्वमितिचेन्न । विशेषणवैयर्थ्यात् । विशेषणमात्रस्य निरुच्यमानमिथ्यात्वानतिरेकात् । नाऽपि बाधकज्ञानविषयत्वम् । ब्रह्मण्यतिव्याप्तेः ।

नाऽपि ज्ञाननिवर्त्यत्वं तत्त्वमिति वाच्यम् । उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्त्वेनाप्युपपत्तेः । नाऽपि स्वसमानाधिकरणात्यन्ताऽभावप्रतियोगित्वम् । अव्याप्यवृत्तिसद्रूपसंयोगादावतिव्याप्तेः । नाऽप्यऽविद्यातत्कार्य्ययोरेकतरत्वम् । अनादिरूपजीवब्रह्मविभागादावव्याप्तेः । तस्माल्लक्षणाऽसिद्ध्या सुतरां लक्ष्यासिद्धिः । किञ्च, नाऽपि मिथ्यात्वे प्रमाणम् । तत्र, न तावत् प्रत्यक्षम् । वर्त्तमानमात्रग्राहिणस्तस्य त्रैकालिकबाध्यत्वग्राहकत्वायोगात् । अतीन्द्रियत्वाच्च । नाऽप्यनुमानम् । तस्य प्रत्यक्षमूलकत्वात् । नाप्यागमः । अप्रसिद्धत्वात् । नन्वेकमेवाद्वितीयमिति श्रुतिरेवाद्वितीयादिपदैर्द्वितीयमात्रं निषेधन्ती तस्य मिथ्यात्वे प्रमाणमितिचेन्न । अद्वितीयादिश्रुतेः साम्यातिशयनिषेधपरत्वेनाग्रे व्याख्यास्यमानत्वात् । तस्मान्नास्य मिथ्यात्वे प्रमाणं किञ्चिदस्तीति सिद्धम् ॥

किञ्चास्य व्युत्पत्तेरपि दुर्निरूप्यत्वम् । तथाहि । नञर्थस्तावत् षड्विधः । तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता * अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता इति वचनात् । तत्र न तावज्ज्ञानस्य सदृशमज्ञानं, विरुद्धत्वात् । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं हि सादृश्यम् । यथा अब्राह्मणो ब्राह्मणसदृशः । क्षत्रिय इत्यर्थः । ज्ञानस्य धर्मवत्त्वाभावाभ्युपगमात् । नाऽपि ज्ञानाभावोऽज्ञानम् । यथा दीपप्रागभावस्तमः । भावरूपत्वाङ्गीकारात् । तथात्वे कारणत्वाऽनुपपत्तेश्च । नाऽपि ज्ञानान्यदज्ञानम् । अब्राह्मणः शूद्र इतिवत् भेदस्य सत्त्वापत्तेः । अद्वैतभङ्गाच्च । नाऽपि तदल्पत्वम् । ज्ञानकोटिनिवेशात् । अनुदरी कन्या अल्पोदरीतिवत् ईषज्ज्ञानमज्ञानमित्यर्थाभ्युपगमः स्यात् । नाप्यप्राशस्त्यम् । अपण्डितोऽप्रशस्तपण्डित इतिवदप्रशस्तज्ञानमज्ञानपदवाच्यं स्यात् । नाऽपि विरोधः । असुरः सुरविरोधी नितरज्ज्ञानविरोध्यऽज्ञानमित्यर्थः स्यात् । विरोधिनोः

सहभावायोगाद्, अनङ्गीकाराच्चेति सङ्क्षेपः ॥

एवञ्च, न तत्स्वरूपासिद्धिस्तदध्यासस्य तु का पुनराशङ्का । तथाहि । यत्राज्ञानाध्यासस्तज्ज्ञानरूपं ब्रह्माज्ञानविरोधि ? न वा ? नाद्यः । अत्यन्तविरोधिनोः सूर्यान्धकारयोरिव सहभावायोगेनेतरेतराध्यासानुपपत्तेः । नान्त्यः । अनिर्मोक्षप्रसङ्गात् । किञ्च ज्ञानं नाज्ञानविरोधीति वाक्यस्योपहास्यमात्रत्वात् । सूर्यो नान्धकारविरोधीतिवत् । उभयस्वरूपहानिप्रसङ्गात् । ज्ञानाज्ञानयोरितरेतरविरोधित्वस्यैव लक्षणत्वात् । तदभावे स्वभावत्याग एव स्वरूपहानिरिति यावत् । ननु स्वरूपज्ञानस्याज्ञानाविरोधित्वेऽपि प्रमाणजन्यज्ञानस्य वृत्त्याख्यस्य तन्निवर्तकत्वान्नोक्तदोषावकाश इतिचेन्न । भिन्नविषयत्वात् । वृत्त्याख्यं ज्ञानं शुद्धविषयकं ? विशिष्टविषयकं वा ? नाद्यः । तत्रानङ्गीकारात् । अन्यथा प्रमेयत्वयोगेन मिथ्यात्वापत्तेः । शुद्धं ब्रह्म मिथ्या, प्रमाणविषयत्वात् । तव मते प्रपञ्चवदित्यनुमानात् । नाऽपि द्वितीयः । इतरविषयत्वात् । न हि घटविषयकज्ञानात् पटकुड्यादिविषयकाऽज्ञाननिवृत्तिर्दृष्टा, श्रुता, सम्भवति वा । अज्ञाननिवर्तकज्ञानयोरेकविषयत्वनियमाद् । अन्यथाऽतिप्रसङ्गो दुर्वारः । किञ्चाज्ञानं ब्रह्मस्वरूपावरकं, तद्धर्मावरकं वा । आद्येऽप्येकदेशावरकं सर्वावरकं वा । नाद्यः । सदेशत्वापत्तेः । निर्विशेषत्वहानिप्रसङ्गाच्च । न द्वितीयः । जगदान्ध्यापत्तेः । मुक्तोपसृप्याभावप्रसङ्गाच्च । नान्त्यः । स्वरूपे धर्मान्तरानङ्गीकारात् । ननु निर्गुणश्रुतिविरोधाद्धर्मविशेषानङ्गीकारेऽपि स्वरूपस्यैवानन्दांशावरणे ज्ञानसत्तांशस्यानावृतत्वान्नोक्तदोषयोग इतिचेन्न । असम्भवात् । न तावदानन्दादयो धर्मविशेषाः । तदनङ्गीकारस्य त्वयैवोक्तत्वात् । नाऽपि स्वरूपविशेषाः । निरवयवे वस्तुनि विशेषांशादिकल्पनाया अन्याय्यत्वात् । अन्यथा

सावयवत्वेन मिथ्यात्वापत्तेः । ब्रह्म मिथ्या, सांशत्वात् । तत्र मते घटादिवदिति प्रयोगात् । निरवयवशास्त्रव्याकोपाच्च । निर्विशेषत्वहानेश्च । किञ्च, वक्ष्यमाणरीत्या अज्ञानाश्रयविषयानुपपत्तेरपि अध्यासासिद्धेः । किञ्चाध्यासाधिष्ठानस्य तत्साधकबाधकोभयविधधर्मवत्त्वनियमादपि निर्विशेषे कथमप्यध्यासासिद्धेः । तथाच यथेदं रजतमित्यत्र प्रतीतौ तदधिष्ठानभूतायाः शुक्तेरुभयधर्मवत्त्वेनैव तत्साधकबाधकैकतरसामान्येदन्तावच्छिन्नतया भासमानायां तस्या तद्विरोधिद्वितीयशुक्तित्वरूपविशेषधर्मावच्छिन्नाधिष्ठानस्वरूपावरणे च तत्प्रतीतिसिद्धेः । पुनश्च तद्विरोधिशुक्तित्वावच्छिन्नाधिष्ठानभूतशुक्तिविषयकप्रत्यक्षज्ञानेनैव, नेदं रजतमपि तु शुक्तिरेवेत्याकारकेण तद्बाधनियमात् । प्रकृते तु विपर्यय एव सर्वविशेषशून्यत्वादधिष्ठानत्वायोगः । तथाचाज्ञानेन शुद्धस्वरूपमावृतं, न वा ? आद्ये अधिष्ठानत्वासिद्धः । द्वितीये स्वरूपभानादेवाध्यासाऽभावः । किञ्च, शुद्धस्वरूपस्य त्वयाऽज्ञानाविरोधित्वाभ्युपगमेन कथंचित्कूटकल्पनयाऽध्यासाऽङ्गीकारेऽपि विशेषधर्मानङ्गीकारात्तद्बाधकविशेषधर्मावच्छिन्नाधिष्ठानविषयकप्रत्यक्षज्ञानाभावेन सर्वथापि तन्निवृत्त्यभावात् अनिर्मोक्षप्रसङ्गो दुर्वारः । किञ्च ज्ञानस्य लक्षणप्रमाणहीनत्वादप्यज्ञानासिद्ध्या सुतरामध्यासासिद्धिः ।

तत्र किं तावल्लक्षणमज्ञानस्येत्यपेक्षायाम् अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं वा, भ्रमोपादानत्वं वा । नाद्यः । शुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानेष्वव्याप्तिस्तेषामनादित्वायोगात् । किञ्च । घटादिविषयकज्ञानप्रागभावे चाव्याप्तिस्तस्य भावत्वायोगात् । किञ्च शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मते तदज्ञाने चरमसाक्षात्कारानन्तरभाविजीवन्मुक्त्यनुवृत्तेऽज्ञाने चाव्याप्तिः । तस्य ज्ञाननिवर्त्यत्वाभावात् । चैतन्याऽविद्यासंबन्धेऽतिव्याप्तेश्च । असंभवश्च । क-

रिपतत्वेन दोषजन्यधीमात्ररूपस्य अज्ञानस्य अनादित्वाभावात् । अज्ञानं नानादि, कल्पितत्वात् । दोषजन्यधीमात्ररूपत्वात् । शुक्तिरूप्यवदिति मानात् । ज्ञाननिवर्त्यस्याभावविलक्षणस्य रूप्यवदनादित्वायोगाच्च । किञ्च, त्वन्मतेऽज्ञानस्य भावाभावविलक्षणत्वेन भावत्वासंभवात् । भावविलक्षणस्याभावत्वनियमेन भावविलक्षणेऽभाववैलक्षण्यस्याप्ययोगात् । किञ्चानादेरभावविलक्षणस्यात्मवदनिवर्त्यत्वप्रसङ्गात् । अज्ञानं न ज्ञाननिवर्त्यम् । अनादित्वे सत्यभावविलक्षणत्वात् । आत्मवदिति प्रयोगात् । नापि द्वितीयः । अभावेऽव्याप्तेस्तस्य निरुपादानकत्वात् । सोपादानकत्वपक्षेऽपि भावरूपाऽज्ञानोपादानकत्वायोगात् । मायाब्रह्मणी जगदुपादाने इति मतेऽतिव्याप्तेश्च । तयोर्भ्रमोपादानत्वात् । किञ्च, मायावच्छिन्नं ब्रह्म जगदुपादानमिति पक्षेऽसंभवश्चेति । तस्मादज्ञानलक्षणं दुर्निरूप्यमेव । नाप्यज्ञाने किंचित्प्रमाणमस्ति । ननु, अहमज्ञो मामन्यं च न जानामि, त्वदुक्तमर्थं न जानामीत्यादेः प्रत्यक्षस्य, प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् । अप्रकाशितार्थप्रकाशकत्वात् । अन्धकारे प्रथमोत्पन्नदीपप्रभावदिति विवरणोक्तानुमानस्य, नासदासीन्नो सदासीत्तम आसीदित्यागमस्य च विद्यमानत्वात् कथं तदभावकथनमितिचेन्न । उक्तानां प्रमाणानामाभासमात्रत्वात् । तथाहि—

न तावदुक्तरूपं प्रत्यक्षमत्र मानमितरविषयत्वात् । को वाऽहम्पदार्थो योऽज्ञानविषयत्वेनोक्तप्रतीतिविषय इति विवेचनीयं । शुद्धं ज्ञानमात्रं वा, अज्ञानावच्छिन्नं वा, जीवो वा । नाद्यः । शुद्धत्वहानेः । अन्यथा शुद्धं ज्ञानमज्ञमिति प्रत्यक्षापत्तेः । न तु तथाऽस्ति । नाप्यज्ञानावच्छिन्नम् । तदवच्छेदकस्याज्ञानस्याद्याप्यसिद्धत्वात् । नाऽपि जीवस्त्वयाऽनभ्युपगमात् । अस्मन्मते जीववाचकत्वेन, तत्र पक्षेऽहं-

कारपरत्वादहंशब्दस्य तत्राहङ्कारोऽज्ञ इत्यर्थः स्यात् । किञ्चाहंशब्दस्य ज्ञानवाचकत्वाभावेनाज्ञाने प्रमाणाभावात् । अन्यथा ब्रह्माज्ञम्, आत्माऽज्ञः, ज्ञानमज्ञमित्यादिप्रतीतिः स्यात् । अहमर्थस्य स्वरूपत्वाङ्गीकारे सिद्धान्तभङ्गात्, परमतप्रवेशाच्च नास्मन्मते जीवेऽपि त्वदभिप्रेताज्ञानसिद्धिः । अज्ञानशब्दस्य ज्ञानप्रागभावपरत्वेन, कर्मपरत्वेन वा सामञ्जस्यादिति सङ्क्षेपः । नाऽप्युक्तानुमानम् । सुखादिप्रमायां बाधात् । तस्याः साक्षिरूपत्वेनाज्ञानानिवर्त्यकत्वात् । नाऽपि पूर्वोक्तश्रुतेरत्र प्रामाण्यम् । इतरविषयत्वात् । तथाहि । असच्छब्दोऽत्र महदादिसूक्ष्मवस्तुप्रतिपादनपरः, सच्छब्दश्च महाभूतादिस्थूलकार्य्यप्रतिपादनपरः । तमःशब्दस्तयोर्हेतुभूतप्रकृतिवाचकः । तदानीमसत्सूक्ष्मं महदादि नासीत्, सत् स्थूलमाकाशादिकं नासीत्, किन्तु मूलकारणरूपा प्रकृतिरासीदिति वाक्यार्थः । अक्षरं तमसि लीयते इति वाक्यान्तरे प्रकृतिस्थाने तमःशब्दप्रयोगदर्शनात् । ननु, अविद्यायामन्तरे वर्तमाना इति श्रुत्या कण्ठरवेण पाठो दृश्यते । स च कथमपह्नूयते इति चेन्न । अविद्याशब्दस्य कर्मपरत्वात् । तथाचान्यत्र, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते, अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते इति श्रुतिस्मृत्योः कर्मणि अविद्याशब्दस्य प्रयोगदर्शनात् । तस्मात्त्वदभिप्रेताऽज्ञाने किमपि प्रमाणं नास्तीति सिद्धम् । किञ्च तस्याऽनिर्वचनीयत्वोक्तिरपि मनोरथमात्रा । लक्षणप्रमाणाभावात् । तत्र, न तावल्लक्षणम् । तथाहि किं तावदनिर्वचनीयत्वम् ? । सद्भिन्नलक्षणत्वमिति चेन्न । शशशृङ्गादावतिव्याप्तेः । तेषामपि तत्त्वयोगात् । नाऽप्यसद्भिलक्षणत्वम् । ब्रह्मण्यतिव्याप्तेः । नच सदसद्भिन्नत्वम् । प्रतियोग्यप्रसिद्ध्या तदप्रसिद्धेः । वस्तुजातस्य सदसदन्यतरनियतत्वेनोभयभिन्नत्वाभावात् असम्भवः । नच, सत्त्वानधिकर-

णत्वे सत्यऽसत्त्वानधिकरणत्वमिति निर्धर्मके ब्रह्मण्यतिव्याप्तेः । नच स्वसमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम् । संयोगादावतिव्याप्तेः । नापि निर्वचनानर्हं तत्त्वमिति । अनेनैव निरूप्यमाणत्वेनाऽसम्भवात् । नच सदसत्त्वेन विचारासहत्वं तत्त्वम् । निर्धर्मकब्रह्मणोऽपि सदसत्त्वादिना दुर्निरूप्यत्वात्तत्रातिव्याप्तेः नच सद्विलक्षणत्वे सत्यऽसद्विलक्षणत्वे सति सदसद्विलक्षणत्वमिति वाच्यम् । परस्परविरहरूपयोरेकत्र निषेधस्य व्याघातात् । नच सत्त्वरहितत्वे सत्यऽसत्त्वरहितत्वे सति सदसत्त्वरहितत्वमिति वाच्यम् । असम्भवात् । अत्र सत्त्वासत्त्वे किमभिमेते इति वक्तव्यम् । सत्ताजातितदभावाविति चेन्न । शुद्धात्मनि सद्वैलक्षण्यस्य प्रपञ्चे तदभावस्य चापातात् । अत एव नार्थक्रियाहेतुत्वाहेतुत्वे । तुल्ययोगक्षेमात् । नच बाध्याबाध्ये इति वाच्यम् । सद्वैलक्षण्यस्यानिर्वचनीयस्य बाध्यत्वेन तत्रासद्वैलक्षण्यायोगात् । नाऽपि प्रामाणिकत्वाप्रामाणिकत्वे । अनिर्वाच्यस्याप्रामाणिकत्वे तत्रासद्वैलक्षण्यायोगात् । शुद्धे ब्रह्मण्यतिव्याप्तेश्च । त्वन्मते तत्र प्रामाणिकत्वाप्रामाणिकत्वयोरनभ्युपगमात् । अन्यथा शुद्धत्वहानेर्निर्विशेषत्वभङ्गाच्च । अत एव न प्रामाणिकत्वशून्यत्वे । विशेषाभावात् । नापि शून्यत्वाशून्यत्वे । अनिर्वाच्यस्याशून्यत्वेन तद्वैलक्षण्यायोगात् । नाऽपि ब्रह्मत्वशून्यत्वे । ममापि प्रपञ्चे तस्येष्टत्वात् । नाऽपि त्रैकालिकसर्वदेशीयनिषेधाप्रतियोगित्वम् । तत्प्रतियोगित्वे तथाभूतयोः सत्त्वासत्त्वयोरस्माकमप्यङ्गीकारात् । त्वन्मते निर्वाच्यस्य तत्प्रतियोगित्वान्नोक्ताभिमेतसिद्धिः । किञ्च, रूप्यादौ घटादौ प्रातिभासिकस्य व्यावहारिकस्य च सत्त्वस्य भावात् कथं सद्वैलक्षण्यम् । किञ्च, अस्तिशब्दाभिधेयो, नास्ति शब्दाभिधेयो वाऽसत्त्वशब्दाऽर्थोऽभिमेतः । नाद्यः । तस्य भावत्वापत्त्या स्वरूपासिद्धिप्रसङ्गा-

त्व । व्यावृत्तिनैष्फल्याच्च । प्रतीत्यसम्भवेन तन्निषेधायोगाच्च । तस्मादनिर्वचनीयस्य लक्षणं नास्त्येव । मे माता वन्ध्येतिवद् वचनव्याघातात् । नाऽपि तत्र प्रमाणसम्भावना कार्य्या । अदर्शनात् । ननु, इदं रजतमिदं जलमित्यादिप्रत्यक्षप्रत्यय एवात्र मानम् । तथाहि । न तावत्तस्य प्रत्यक्षप्रत्ययस्य सर्वथाऽसत्त्वविषयकत्वमेव । शशविषाणादीनामपि प्रत्यक्षप्रतीतिविषयतामसङ्गात् । बाह्यपक्षप्रवेशापत्तेश्च । नाऽपि सद्विषयत्वं वक्तुं शक्यम् । नेदं रजतं, नेदं जलमित्यादिबाधदर्शनात् । अतः सदसद्विलक्षणं तात्कालिकप्रतीतिगोचरमनिर्वचनीयमेवेति सिद्धम् । प्रत्यक्षस्यात्र प्रामाण्यमिति केचित् । तन्न सम्यक् । तथाभूतप्रत्ययस्येतरविषयत्वात् । तथाहि । पञ्चीकरणप्रक्रिया तैजसभागकार्य्यस्य रजतस्यापि शुक्तौ आप्यभागस्य जलस्यापि मृत्तिकायां सत्त्वेन तथाभूतप्रत्यक्षविषयत्वेनाऽनिर्वचनीयत्वसंभवात् । ननु नेदं रजतमित्यादिना तद्बाधस्य त्वयाऽपि स्वीकारात् कथं सत्त्वम् । अन्यथा यथार्थाऽयथार्थयोर्विभागाऽसिद्धेः सर्वस्याऽपि प्रमात्वमेव स्यादिति चेन्न । अनाकलिततत्त्वाच्छङ्कायाः । तथाहि । सर्वज्ञानानां यथार्थत्वस्य शास्त्रदृष्ट्या सत्ख्यातिवादिनामस्माकमिष्टत्वात् । त्रिवृतं त्रिवृतं करवाणीति श्रुतेः । तर्हि कथमनुपलब्धिरिति चेत्, सूक्ष्मात्मना सत्त्वेऽप्यर्थकारित्वाऽनर्हत्वादिति ब्रूमः । एतेनैव लौकिकदृष्ट्या यथार्थायथार्थप्रतीतिविभागे निगमनाऽपि दर्शिता भवति । भूयस्त्वभागस्यैव गृह्यमाणत्वाद्यथार्थत्वोक्तिः । अल्पभागस्याऽगृह्यमाणत्वादयथार्थत्वमित्युभयविभागोऽप्यविरुद्धः । न चार्थकारित्वाभावस्यैवानिर्वचनीयत्वाङ्गीकारान्ममापीष्टापत्तिमिति वाच्यम् । तथात्वे शुद्धब्रह्मणोऽपि तद्योगेन तत्रातिप्रसङ्गो दुर्वारः । तन्मते तस्याऽप्यर्थकारित्वानङ्गीकारात् । घटादावव्याप्तेश्च । तस्यार्थकारित्वादित्यलं विस्तरेण । एया-

लिवादे विस्तरिष्यमाणत्वात् । ननु, विमतं, सत्त्वरहितत्वे सत्य-ऽसत्त्वरहितत्वे सति सत्त्वासत्त्वरहितम् । बाध्यत्वाद्दोषप्रयुक्तभानत्वाद्वा । व्यतिरेके ब्रह्मवदित्यनुमानस्यैवात्र मानत्वमिति चेन्न । सत्त्वासत्त्वयोरितरेतरविरुद्धरूपयोरभावस्यैकत्र व्याहतत्वात् । ब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनानिर्वाच्यत्वाभावोपपत्त्याऽर्थान्तराच्च । विमतमसदात्मकं बाध्यत्वात् । यन्नैवं तन्नैवम् । ब्रह्मवदिति विरुद्धत्वात् । विमतम् । असत् । सत्त्वानधिकरणत्वात् । शशशृङ्गवदिति सत्प्रतिपक्षत्वाच्च । साध्यात्यन्ताप्रसिद्धेश्च । नच, सत्त्वाऽसत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वात् । रूपरसवत् । सत्त्वमसत्त्वाधिकरणानिष्ठम्, असत्त्वं वा सत्त्वाधिकरणानिष्ठम् । धर्मत्वात् । रूपादिवदिति सामान्यतः साध्यसिद्धिरिति वाच्यम् । सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी न, परस्परात्यन्ताभावात् । घटत्वाघटत्ववत् । असत्त्वं सत्त्वानधिकरणानिष्ठं, सत्त्वं वाऽसत्त्वानधिकरणानिष्ठम् । तत्तत्प्रतिषेधरूपत्वात् । तमःप्रकाशवत् । घटत्वाऽघटत्ववच्चेत्यादिप्रतिरोधात् । घटत्वाघटत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी । धर्मत्वात् । रूपत्वारूपत्ववत् । कल्पितत्वमकल्पितत्वानधिकरणानिष्ठम् । धर्मत्वात् । रूपरसवदित्याद्याभाससाम्याच्च । किञ्च, तवाभिमतं ब्रह्म, सत्त्वरहितत्वे सत्यऽसत्त्वरहितत्वे सति सत्त्वासत्त्वरहितम् । सर्वधर्मशून्यत्वात् । सर्वप्रमाणहीनत्वाच्च । यन्नैवं तन्नैवम् । अस्मदभीष्टब्रह्मवदित्यपि वक्तुं शक्यत्वात् । नाऽपि दोषप्रयुक्तभानत्वादेरस्याऽपि सद्धेतुत्वम् । स्वरूपासिद्धत्वात् । न हि मूलाज्ञानभानस्य दोषप्रयुक्तत्वं वक्तुं शक्यम् । अज्ञानात् प्राक् प्रयोजकदोषाऽन्तरस्याऽभावात् सर्वेषां दोषाणामज्ञानकार्य्यत्वेनोत्तरभावित्वात् । दोषान्तरकल्पनेऽनवस्थानाच्च । तस्मान्नोक्तानुमानान्यत्र प्रमाणपदवीमारोढुमर्हन्ती-

ति सिद्धम् । ननु विमतं रूप्यादि सत्त्वेन बाध्येत, असत्त्वेन प्रतीयेत । बाध्यते, प्रतीयते च । तस्माद्बाधान्यथानुपपत्तेः, प्रतीत्यन्यथानुपपत्तेश्चात्र प्रामाण्यमिति चेन्न । असंभवात् । तथाहि । सत्त्वेदित्यत्र सच्छब्दस्य को वाऽर्थो विवक्षित इति विवेचनीयम् । प्रामाणिकत्वं सत्त्वम् । प्रमाणत्वं नाम तत्त्वावेदकत्वम् । तच्च लक्षणया शुद्धब्रह्मबोधकवेदान्तशास्त्रमेवेति चेन्न । स्वतः प्रकाशमाने चिन्मात्रे ब्रह्मणि वैयर्थ्येन प्रामाणिकत्वाबाध्यत्वयोर्व्याप्त्यसिद्धेः । यत्र यत्र प्रामाणिकत्वं तत्र तत्राऽबाध्यत्वमितिव्याप्तेर्ब्रह्मणि व्यभिचारात् । तत्राबाध्यत्वं वर्त्तते, प्रामाणिकत्वं नास्तीत्यर्थः । प्रत्युत ब्रह्मभिन्ने एव प्रामाणिकत्वस्य सत्त्वेन तस्य बाध्यत्वेन सह व्याप्तिदर्शनात् । प्रपञ्चे बाध्यत्वप्रामाणिकत्वयोः सत्त्वात् । तथात्वे च तस्यानिर्वचनीयत्वासिद्धेः । नच ब्रह्मणः स्वप्रकाशत्वेऽपि व्यवहारप्रतिबन्धकाज्ञाननिवृत्त्यर्थं प्रमाणप्रवृत्तिः सफलेति वाच्यम् । स्वप्रकाशे व्यवहारप्रतिबन्धकाज्ञानासम्भवादिति पूर्वमेवोक्तम् । प्रत्यक्षस्याऽप्रामाण्ययोगे हि तन्निबन्धनं शुक्तिरूप्यादेरप्रामाणिकत्वं न स्यात् । बाध्यत्वाकारेण बाध्यस्यापि प्रामाणिकत्वेन तस्य अप्रामाणिकत्वं न स्यात् । ननु सत्ताजातित्वम्, अर्थक्रियाकारित्वं वा सत्पदार्थ इति चेन्न । त्वन्मते प्रपञ्चे व्यभिचारात् । तत्र तद्योगेऽपि तस्य सत्त्वानङ्गीकारात् । किञ्च, न बाध्येतेत्यत्र बाधो नाम किं ज्ञानेन निवृत्तिः, त्रैकालिकनिषेधो वा ? । नाद्यः । ज्ञाननिवर्त्यत्वस्य सत्त्वेन व्याप्तेः सम्भवात् । यथा घटज्ञानात् पटादिज्ञानस्य सत्यस्यैव निवृत्तिस्तथा प्रकृतेऽपि सम्भावनीया । न द्वितीयः । शुक्तिज्ञानाद्रजतबाधवद् ब्रह्मज्ञानात् सर्वबाधादर्शनात् । ब्रह्मज्ञानात् सर्वबाधस्वीकारे औपनिषदसिद्धान्तसंप्रदायोच्छेदप्रसङ्गः स्यात् । तथाहि । ब्रह्मज्ञानोपदेष्टारोऽज्ञा वा, नि-

विशेषाऽद्वितीयब्रह्मज्ञानवन्तो वा ? । नाद्यः । अज्ञत्वादेवाचार्यत्व-भङ्गः । अज्ञोपदिष्टस्याप्रामाणिकत्वात् । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन * इति भगवदुक्तेः । अन्यथाऽन्धपरम्परान्याय-प्रसक्तेः । अन्धैर्नीयमाना यथान्धा इति श्रुतेः । न द्वितीयः । अद्वितीयतत्त्वसाक्षात्कारवता भेददर्शनाभावेन गुरुशिष्योपदेशरूपभेददर्शनासम्भवात्, को वा गुरुः कस्मै शिष्याय किं वा तत्त्वमुपदिशेत् । त्रयाणामपि बाधितत्वात् । अन्यथा तव मते भेददर्शनस्यैवाज्ञानमूलकत्वात् कार्यदर्शनस्य कारणसत्तापूर्वकत्वनियमेनाऽज्ञानास्याप्यवश्यम्भावात्तद्योगापत्त्याऽनाप्तत्वप्रसङ्गस्य दुर्वारत्वात् । जीवन्मुक्तेश्चाऽग्रे निराकरिष्यमाणत्वाच्च । किञ्च ब्रह्मैक्यज्ञानात् सर्वनाशाङ्गीकारे एकज्ञानेन सर्वज्ञानप्रतिज्ञाभङ्गात् । यदि नास्त्येव तर्हि कस्य ज्ञानं स्यादिति भावः । नच बाधितविषयकमेव ज्ञानं विवक्षितमिति वाच्यम् । तदभावरूपभेददर्शनस्यावश्यम्भावेनाद्वितीयत्वासिद्धेः । भेदसत्त्वस्य शास्त्रादेवावगमात् । यदिदं किञ्चित् तत् सत्यमित्याचक्षते, सदेव सोम्येदमग्र आसीदित्यादिश्रुतेः । अयं भावः । बाधितविषयकज्ञाने न किञ्चित् प्रमाणमस्ति । श्रुत्युपात्तदृष्टान्तेषु मृद्घटादिषु मृदादिकारणज्ञानेन घटादिरूपकार्यस्य बाधादर्शनात्, प्रत्युत तदपृथक्सिद्धत्वेन सत्त्वस्यैव दर्शनात् । अन्यथा कारणज्ञानेन सर्वं कार्यं बाधितं स्यादित्येव श्रुतिर्ब्रूयान्न तु तथाऽस्ति । श्रुतिविरुद्धसिद्धान्तवादिना तु भवत्वेव विवक्षितं, नास्माकं विवादः । आस्तिकानां तु श्रुतिमूलोक्तस्यैव प्रामाण्यं, तदनुकूलस्मृतेश्चापि । एवं यदि श्रुतिमूलगीतासु क्वचिदपि जगदसत्त्वमिथ्यात्वबाधविषयकं वाक्यं स्याच्चेत्तर्हि वक्तव्यम् । तन्नास्त्येवेति । किञ्च, असच्चेदित्यत्राऽसच्छब्दस्य को वाऽर्थो विवक्षितः । सत्ताहीनं वा, पदार्थत्वविषयत्वरूपनिरूपाख्यं वा ? । नाद्यः । सत्ताहीन-

स्याप्यात्मनः प्रतीत्यभावाभावेन तत्र व्यभिचारात् । तस्य सत्ताहीनत्वेऽपि प्रतीत्यविषयत्वं नास्तीत्यर्थः । न द्वितीयः । पदद्वयाऽविषये वाक्यार्थे प्रतीतिसत्त्वेन व्यभिचारात् । तत्रोक्तलक्षणस्य समन्वयेऽपि प्रतीत्यभावो नास्तीत्यर्थः । ननु वाक्यार्थरूपपदद्वित्तिविषयत्वस्य सत्त्वेन तदविषयत्वाभावान्न व्यभिचार इतिचेन्न । निरुपाख्यत्वपदद्वयविषयादिपदद्वृत्तिविषयताया निरुपाख्येऽपि सम्भवात् । एवञ्च न प्रतीयेतेत्यत्र, का वा प्रतीतिर्विवक्षिता । प्रतीतिमात्रं वा, सत्त्वेन प्रतीतिर्वा, अपरोक्षप्रतीतिर्वा, सत्त्वेनापरोक्षप्रतीतिर्वेति ? । नाद्यः । असतोऽप्रतीतावसद्वैलक्षण्यज्ञानासम्भवात् । असत्प्रतीतिनिरासानुपपत्तेश्च । असत्पदस्याऽनर्थक्येन प्रयुक्तानां पदानां सम्भूय कारित्वेन, असन्न प्रतीयेतेति वाक्यस्याऽबोधकतापत्तेश्च । असतोऽसत्त्वेनाप्रतीतावसद्व्यवहारानुपपत्तेश्च । द्वितीयेऽपि सा किं प्रमारूपा निषिध्यते, भ्रमरूपा वा । नाद्यः । इष्टापत्तेः। न द्वितीयः। उक्तन्यायेनासतः प्रतीतिसिद्धौ सतोऽसत्त्वेनेवारूप्यस्य रूप्यत्वेनेव भ्रान्तित्वादेवासतः सत्त्वेन प्रतीत्युपपत्तेः । नापि तृतीयः। यदसत् तन्न प्रतीयत इतिव्याप्तिज्ञानस्य प्रत्यक्षतावच्छम्भात्राच्छशशृङ्गाद्यत्यन्ताभावस्य प्रत्यक्षत्वापातेनासतोऽसत्त्वासिद्धेः । नापि चतुर्थः । भ्रान्तित्वादेव तदुपपत्तेः । तस्मादुक्तार्थापत्त्योः प्रामाण्याशा मनोरथमात्रेति संक्षेपः । ननु, नासदासीन्नो सदासीत् तम आसीदित्यादिश्रुतेः प्रकृतार्थे प्रामाण्यमितिचेन्न । तस्या व्यवस्थायाः पूर्वमेव प्रतिपादितत्वात् । अन्यार्थपरत्वेनात्र प्रमाणत्वाभावात् । तथाचानिर्वचनीयत्वे किञ्चिदपि प्रमाणं नास्त्येवेति सिद्धम् ॥

अथ कारणं निर्दिशति ॥ नन्दगृहचान्दिनमिति ॥ विज्ञानमानन्दं ब्रह्मेतिश्रुतेः । नन्दशब्दाभिधेयः सर्वान्तरात्मा भगवान्

श्रीपुरुषोत्तमस्तस्य गृहं प्रसगात्मसंघातस्तस्य चन्दी आल्हादनशीलस्तमिति विग्रहः । एष ह्येवानन्दयातीति श्रुतेः । यद्वा, आनन्दज्ञापकत्वान्नन्दस्यानन्दस्य गृहं वेदः, तस्यात्मप्रतिपादकताशक्तिप्रदानेनाह्लादनशीलस्तमिति यावत् । तस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेद इत्यादिश्रुतेः । यद्वा, नन्दशब्दाभिधेयो नन्दगोपस्तस्य गृहं व्रजस्तस्याह्लादनशीलस्तमिति । उपलक्षणं चैतत् । स्वाश्रितानां नन्दोपलक्षितानां सर्वेषामपि स्वपदारविन्दानन्याश्रितानामह्लादनशीलमिति भावः । यद्वा नन्दशब्दाभिधेयो मुक्तजीवसमुदायः । आनन्दी भवतीति श्रुतेः । तस्य गृहं प्राप्यं पदं वैकुण्ठाख्यमाह्लादयति प्रकाशयतीति तथोक्तस्तम् । अथवा श्रीभगवद्विषयकध्रुवास्मृत्या नन्दति मोदते इति नन्दो निदिध्यासनपरिपाकावस्थारूपध्रुवास्मृत्याश्रय आसन्नमोक्षश्चरमजन्मा मुमुक्षुस्तस्य गृहं हृदयम् उत्क्रान्तिसमये चन्दति प्रद्योतयतीति तथोक्तस्तम् । तस्य हैतस्य हृदयाग्रं प्रद्योतते तेनैष आत्मा निष्क्रामतीति श्रुतेः । यद्वा, नन्दं पूर्वोक्तश्रुतिबोध्यं श्रीपुरुषोत्तमं गृह्णाति विषयीकरोतीति नन्दगृहं जीवात्मनां धर्मभूतं ज्ञानं, तं चन्दयतीति नन्दगृहचन्दी तम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते * इति, ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः * तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परमिति श्रीमुखोक्तेः । यद्वा, नन्दगृहशब्देन जीवानां बुद्धिरभिधीयते । तस्य चन्दनशीलो द्योतकस्तम् । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति श्रुतेः ॥

अथ तस्य पूर्णत्वं प्रतिपादयन् स्तौति ॥ अंशिनामिति ॥ अंशा मत्स्यादयोऽवताराः सङ्कर्षणादयो व्यूहाश्च विद्यन्ते यस्य स अंशी तम् । तत्राल्पाल्पतरगुणशक्त्यादीनां यथाकार्यमाविर्भावमात्रेणांऽशत्वोक्तिर्न तु स्वरूपभेदः । परमेश्वरस्यैकत्वेन तत्स्वरूपभे-

दासम्भवात् । एकमेवाद्वितीयमिति श्रुतेः । अन्यथा परमेश्वरानेकत्वप्रसङ्गात् । व्यूहाङ्गिनं ब्रह्मपरमिति * श्रीमदाद्याचार्यभगवत्पादोक्तेः । अस्यैव पदस्य विवरणे अवतारभेदाश्च वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यपादैर्विस्तरतो विवेचिताः । यद्वा, अंशो ह्येष परस्येति श्रुत्युक्तांशशब्देन प्रत्यगात्मान उच्यन्ते । प्रत्यगात्मानः स्वात्मीयभूता अंशा विद्यन्तेऽस्येति तथोक्तस्तम् । सर्वेषां प्रत्यगात्मनामन्तरात्मानमिति यावत् । नित्यो नित्यानां चेतनश्चेतनानामित्यादिश्रुतेः । एतेनांशो नानाव्यपदेशादित्यादिसूत्रं व्याख्यातम् । यद्वा, दन्त्यसकारपाठदर्शने तु अंसोऽत्र स्कन्धरूपाऽवयववाचकः । अत्रयानिर्देशस्यावयविनिर्देशसापेक्षत्वादवयविनोऽध्याहार आक्षेपसिद्धः । एवञ्च गरुडांसो यानरूपो विद्यतेऽस्येति तथोक्तस्तं गरुडयानमित्यर्थः । यद्वा, अंशीति यौगिकोऽयं शब्दः । अंश विभागे इत्यस्माद्धातोः शीलार्थक इन्प्रत्ययप्रयोगाद् व्युत्पन्नः । तथाच तत्तदधिकारानुरूपस्य अर्थधर्मकाममोक्षपुरुषार्थरूपफलस्य तत्तदधिकारिविशेषाय विभंजनशीलस्तमिति विग्रहः । अर्थधर्मकाममोक्षाख्यफलप्रदातारमित्यर्थः । य आत्मदा बलदा रातेर्दातुः परायणमित्यादिश्रुतेः । फलमत उपपत्तेरिति सूत्राच्च । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति श्रीमुखोक्तेश्च । एतेन सूत्रमपि व्याख्यातं बोध्यम् ॥

एवं ब्रह्मस्वरूप लक्षणादिमुखेन निरूप्य गुणान्निर्दिशन् स्तौति ॥ शान्तिकान्तिगुणमन्दिरमिति ॥ शान्त्यादिगुणानाम् अव्यभिचरितनिवासस्थानमिति समुदायार्थः । अयमभिमायः । गुणास्तावद् द्विविधाः— स्वरूपगुणा विग्रहगुणाश्च । अत्र गुणशब्दो गुणसामान्यवाचकत्वाद् गुणसामान्यनिर्देशपरः ।

तत्र शान्तिशब्दः स्वसमानाधिकरणवृत्तिस्वाभाविकामंख्येययावद्-

स्मद्दस्यऽनन्ताचिन्त्यज्ञानशक्तिबलैश्वर्यादिकारुण्यवात्सल्यदयातितिक्षास्वामित्वादिकल्याणगुणगणोपलक्षणार्थः । कान्तिशब्दश्च स्वसमानाधिकरणनिष्ठपूर्वोक्तलक्षणाचिन्त्यासंख्येयदिव्यसौन्दर्यमाधुर्यलावण्यसौगन्ध्यसौस्पर्शादिसद्गुणविग्रहनिष्ठानामुपलक्षणार्थः । एवञ्च शान्तिशब्दोपलक्षितज्ञानशक्त्यादिकारुण्यवात्सल्यादीनां स्वरूपगुणानां तथैव कान्तिशब्दोपलक्षितसौन्दर्यमाधुर्यादीनां विग्रहगुणानां स्वाभाविकाचिन्त्याद्भुतकल्याणरूपाणां मन्दिरं निवासस्थानमिति वाक्यार्थः । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः, आनन्दं ब्रह्मणो विद्वान्, सत्यकामः सत्यसङ्कल्पः, सर्वगन्धः सर्वरस इत्यादिश्रुतिभ्यः । सर्वगुणोपपत्तेश्च । विवक्षितगुणोपपत्तेश्च । सर्वोपेता चेत्यादिसूत्रेभ्यो, ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यऽशेषतः * भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः । समस्तकल्याणगुणात्मकोऽसौ तेजोबलैश्वर्यमहावबोधः । स्ववीर्यशक्त्यादिगुणैकराशिः परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे इत्यादिस्मृतेश्च । गुणानां लक्षणं वेदान्तरत्नमञ्जूषायां द्रष्टव्यमित्यलं विस्तरेण ॥ १ ॥

इति श्रीहयग्रीवाऽनुग्रहोपासकेन श्रीमद्भगवत्प्रियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादाख्येन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे कारणनिर्णयशाखा प्रथमा ॥ १ ॥

## अथ द्वितीया शाखा ।

अथ सविशेषनिर्विशेषवाक्यानामेकवाक्यताप्रकारं दर्शयन् स्तौति ॥

निर्गुणं तदिति वैदिकं वचो-
ऽविद्यया त्वयि विशेषणाऽसहे ॥
वस्तुतोऽखिलविशेषसागरे
नो विरुद्धमिति तावदस्तु मे ॥ २ ॥

निर्गुणमिति ॥ केवलो निर्गुणश्चेत्यादि वैदिकं वचः । तन्निर्गुणमिति ब्रह्मनिर्गुणमिति यदाह तत् त्वयि नो विरुद्धमिति सम्बन्धः । सामञ्जस्यमेवेत्यर्थः । ननु निर्गुणगुणवतोरितरेतरात्यन्तविरोधः प्रत्यक्षादिप्रमाणसिद्धस्तमःप्रकाशवत्, कथमविरोध इति चेत्तत्राह ॥ अविद्यया विशेषणाऽसहे इति ॥ हेतुगर्भितमिदं विशेषणम् । यतो भवतः परब्रह्मणः श्रीवासुदेवस्याविद्याजन्यविशेषणासहत्वाद् अविद्यातत्करणधर्मसम्बन्धानर्हत्वाद् । अत एव विरोधाभाव इत्यर्थः । आविद्यकधर्माश्च क्लेशकर्मविपाकादयः । य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास इत्यादिश्रुतेः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे, कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितुरिति स्मृतेः । एवं निर्गुणवाक्यविरोधः परिहृतः । अथ सविशेषवाक्यान्यपि नो विरुद्धानि । तेषां स्वाभाविकाचिन्त्यानन्तसद्रूपकल्याणगुणशक्त्यादिविशेषप्रतिपादनपरत्वादित्याह ॥ वस्तुतोऽखिलविशेषसागरे इति ॥ वस्तुतः स्वभावेनैवाखिलानां ज्ञानशक्तिबलैश्वर्याद्यनन्तासंख्येयस्वाभाविकविशेषाणां सागरे महार्णवे । यः सर्वज्ञः सर्व-

विदु यस्य ज्ञानमयं तपः, आनन्दं ब्रह्मणो विद्वान्, सत्यकामः सत्यसंकल्पः, विष्णोर्नु कं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजांसि, न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः परमं तमाप, सहस्रधा महिमानः सहस्रः, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः, समस्तकल्याणगुणात्मकोऽसौ, तेजोबलैश्वर्यमहावबोधः, स्ववीर्यशक्त्यादिगुणैकराशिरित्यादिस्मृतिभ्यः । विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्च, सर्वोपेता चेत्यादिन्यायेभ्यश्च । एतेन पराभिमतनिर्विशेषवादो निरस्तो भवति । उक्तशास्त्रबाधात् । अन्यथा तद्विपरीतस्यापि वक्तुं शक्यत्वात् । सिद्धान्ते उभयविधानामपि वाक्यानां नैराकाङ्क्षयान्न बाधशङ्कावकाशः । ननु वाक्यं द्विविधं–विधिनिषेधभेदात् । तत्र विधिवाक्यान्निषेधस्य प्राबल्यम् । तथाच निर्गुणवाक्यानां निषेधरूपत्वेन प्रबलत्वात् तैस्तेषां बाधो युक्त एवेति चेन्न । असद्वा इदमग्र आसीदिति वाक्यस्यापि निषेधत्वाऽविशेषात्, तेन, सदेव सोम्येत्यादिवाक्यानां बाधोऽपि त्वया स्वीकर्तव्यः । तथाचाऽसद्वादापत्तेः । तस्मान्निषेधवाक्यप्राबल्यनियमो नास्ति, प्रत्युत स्वाभाविकश्रुतेरेव प्राबल्यात् । नच निर्गुणवाक्यस्य निर्विशेषज्ञानविधायकत्वेन मोक्षहेतुत्वात्, फलवत्सन्निधावफलं तदङ्गमिति न्यायेन सगुणवाक्यमेव तदनुगुणत्वेन नेयमिति वाच्यम् । सविशेषविषयकज्ञानस्याऽपि मोक्षहेतुत्वसाम्यात् । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमित्यादिश्रुतेर्नोक्तन्यायाऽवतरणाऽवकाशः । किञ्च, भवतां निर्विशेषे किञ्चित् प्रमाणमस्ति ? न वेति वक्तव्यम् । नाद्यः । अनङ्गीकारात् । अन्यथाऽपसिद्धान्तापत्तेः । निर्विशेषभङ्गात् । विषयतापत्तेश्च । तथात्वे च मिथ्यात्वमप्यावश्यकम् । निर्विशेषं मिथ्या, प्रमाणविषयत्वात् । तव मते घटादिवदिति

प्रयोगात्। नान्त्यः। शशशृङ्गसादृश्यापत्तेः। निर्विशेषं ब्रह्म, तुच्छं भवितुमर्हति, सर्वप्रमाणशून्यत्वात्। शशशृङ्गादिवदित्याद्यनुमानात्। ननु स्वानुभूत्येकमानायेत्यभियुक्तोक्तेस्तस्य स्वतः सिद्धत्वान्न प्रमाणान्तरापेक्षेति चेन्न। सर्वमपि वस्तु स्वतः सिद्धमिति वक्तुं शक्यत्वाद्,विप्रतिपत्तियोगाच्च,शास्त्रवैयर्थ्याच्च। नचाऽज्ञाननिवृत्त्यर्थं शास्त्रस्य सार्थक्यमिति वाच्यम्। अज्ञानाविरोधिन्याः स्वतः सिद्धेर्घटादावपि सुवचत्वात्। ननु, साक्षी चेता केवलो निर्गुणश्चेत्यादिवाक्यानां सामान्यगुणनिषेधपरत्वात् कथं विशेषे संकोचः, प्रमाणाऽभावादिति चेन्न। सामान्यस्य विशेषे संकोचो मानसिद्ध एव। तथाहि। न हिंस्यात् सर्वा भूतानीति सामान्यनिषेधस्याग्नीषोमीयं पशुमालभेतेति विशेषशास्त्रेण संकोचदर्शनात्। अन्यथा, साक्षी चेता इत्यत्रैव, साक्षाद्द्रष्टरि संज्ञायामित्यादिमानाद् द्रष्टृत्वचैतन्यादेरपि निषेधे मे माता वन्ध्येतिवद् वाक्यमूकत्वमप्रसङ्गात्। नच, एवं धर्मान् पृथक् पश्यन्नित्यादिना गुणदर्शनस्याऽनर्थहेतुत्वश्रवणाद् हेयत्वमेवेति वाच्यम्। सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्येऽबाधे इति न्यायेन गुणसंगिस्वातन्त्र्यसत्तायोगस्यैव निषेधविषयत्वात्। शिखी विनष्टः पुरुषो न नष्टः, स्वर्गी ध्वस्तः पुरुषो न नष्ट इत्यादिवद् गुणसंगिस्वातन्त्र्यदर्शनस्यैवानर्थहेतुत्वं,न तत्स्वरूपस्येत्यर्थः। अन्यथा आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति मोक्षफलकगुणदर्शनविधानश्रुतेर्बाधापत्तेः। नच राहोः शिर इतिवत् तस्या अपि स्वरूपपरत्वमिति समीचीनम्। श्रुतत्यागाश्रुतकल्पनाया एवाऽन्याय्यत्वात्। स्वाभाविकीत्यादिनाऽत्यादरेण ब्रह्मगुणानां स्वाभाविकत्वेन मोक्षहेतुत्वेन च विधाय पुनस्तन्निषेधे प्रवृत्तायाः श्रुतेरुन्मत्तप्रलापवदनाप्ततमप्रसक्तेः। न हि वह्निजलादेरौष्ण्यशैत्या-

दिकं केनाऽपि निषेद्धुं शक्यम् । तथा प्रकृतेऽपि ब्रह्मणो धर्माश्चतुर्मुखसहस्रेणापि निषेद्धुमशक्याः । स्वाभाविकत्वादेव । अन्यथा स्वाभाविकस्यापि निषेधाभ्युपगमे स्वरूपनिषेधोऽपि वक्तुं सुशकः । स्वाभाविकत्वाविशेषात् ॥

किञ्च ब्रह्मणो निर्विशेषत्वे सविशेषवेदान्तविचार एवायुक्तः । तथाच जिज्ञासाशास्त्रारम्भस्यैव वैयर्थ्यात् । किञ्च ब्रह्मणीतरधर्मारोपार्थमपि केचित् सत्या एव धर्माः स्वीकार्याः । इदंत्वादिना ज्ञात एव शुक्त्यादौ धर्मान्तरारोपदर्शनात् । तदुक्तं—

धर्मारोपोऽपि सामान्यधर्मादीनां च दर्शने ।
सर्वधर्मविहीनस्य धर्मारोपः क दृश्यते इति ॥

ननु अभावरूपा धर्मास्तत्र सन्तीति चेन्न । नाभावत्वं तत्र हेतुरतिप्रसङ्गात् । किन्तु प्रामाणिकत्वमेव । तच्च भावेष्वपि समानम् । तस्मान्न कथमपि तदभिमतनिर्विशेषत्वसिद्धिरिति संक्षेपः ।

एतेनैव यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादमित्यादिश्रुतयो व्याख्याताः । लौकिकदृश्यत्वादिनिषेधेन तद्विलक्षणधर्मविधानपरत्वात् तासाम् ॥

अन्यथा, यः सर्वज्ञ इत्यादि, तस्मादेतन्नामरूपमन्नं च जायते इत्यन्तं तदनन्तरधर्मोक्तिविरोधात् । अदृश्यत्वादिगुणको धर्मोक्तेरिति न्यायाच्च । यस्माद् अखिलमायाकर्मक्लेशाद्यऽस्पृष्टमाहात्म्यदिक्कटाऽचिन्त्याऽनन्ताशेषस्वाभाविकयावदात्मवृत्तिसद्रूपाऽखिलकल्याणगुणसागरस्त्वम् इति । अत एव हेतोः, तावदस्तु मे इति ॥ तावदेव तव स्वरूपं, मे ममौपनिषदस्य सदाविरस्तु इति प्रार्थना । विशेषो नाम गुणरूपशक्तिवैभवादिरूपः । तत्र गुणाश्च ज्ञानदयावात्सल्यकारुण्यसौशील्यादयो रूपं चतुर्भुजद्विभुजसहस्रभुजादिविग्रहः ।शक्तिश्चाघटघटनापटीयस्त्वसामर्थ्यरूपा । वैभव

ऐश्वर्यविशेषाविर्भावः । स च द्विधः— परविभूतिलक्षणोऽवतारविभूतिलक्षणश्चेति संक्षेपः ॥ २ ॥

इति श्रीहयग्रीवानुग्रहलब्धविवेकेन श्रीमद्भगवत्प्रियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे सगुणनिर्गुणवाक्याऽविरोधनिर्णयो नाम द्वितीया शाखा ॥ २ ॥

---

## अथ तृतीया शाखा ।

अथाऽस्मिन् प्रकरणे, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिश्रुतिव्याख्यानपूर्वकं तत्प्राप्तिसाधनेषु शरणागतिरूपोपायं विवेचयन् स्तौति

त्वत्समो यदि ह नास्ति चेतनः
कस्तदाऽधिकगुणाकरः प्रभुः ॥
त्वां प्रयामि शरणं शरण्यकं
पुण्डरीकनयनं सुधानिधिम् ॥ ६ ॥

त्वत्सम इत्यादिना ॥ हेति स्फुटम् । लोके शास्त्रे च यदि त्वत्समश्चेतनो नास्ति तदाधिकगुणाकरः क इत्यन्वयः । चेतनमनूद्य तत्साम्यं निषिध्यते, न चेतनस्वरूपम् । अन्यथा कृतनाशाऽकृताभ्यागमप्रसङ्गः । अत्र त्वच्छब्देन सच्छब्दो व्याख्यातः । तत्र श्रुतौ सच्छब्दः स्वतन्त्रसत्ताश्रयवस्त्वभिधानपरः । स्वतन्त्रसत्ताश्रयमेव निर्दिश्य आसीच्छब्दस्तस्याऽग्रे– इति पदोक्तेन पूर्वकालवाचिपदार्थेनाऽन्वेति । एवकारोऽयोगव्यवच्छेदार्थकः । पार्थ एव धनुर्धर इतिवद् विशेष्यसंबन्धात् । स च पूर्वकालिकसंम्बन्धाभावं व्यवच्छिनत्ति । तथाचैवं वाक्यार्थः । स्वतन्त्रसत्ताश्रयो वासुदेवः परब्रह्माख्यः, अग्रे सृष्टेः पूर्वकाले नासीदिति न, अपि तु आसीदेवेति श्रुत्युक्तसत्पदवाच्यस्त्वमेवेति । एकपदस्याप्यनेनैव व्याख्या ज्ञेया । तस्य मुख्यपरत्वात् । न तु संख्यापरत्वम् । तस्याः सच्छब्दगतैकवचनेनैव प्राप्तत्वात् । अन्यथाऽनुवादपरत्वापत्तेः । अत्र मुख्यत्वं तस्याऽतिशयसाम्यशून्यत्वेन विवृणोति पादद्वयेन । तत्र प्रथमेन अद्वितीयपदं साम्यनिषेधपरमित्याह ॥ त्वत्समो नास्तीति ॥ त्वत्तुल्यो नासीदित्यर्थः । अस्य गोर्द्वितीयोऽन्वेष्टव्य इ-

त्युक्ते, गौरेवानिर्दिश्यते, नाऽश्वो न गर्दभ इति महाभाष्यकारोक्तेः । चेतनपदप्रयोगोऽचेतनस्याऽप्युपलक्षणार्थः । स च कैमुत्यन्यायेन बोध्यः । यदि त्वत्समश्चेतन एव नास्ति तर्ह्यचेतनस्य कः प्रसङ्ग इत्यर्थः । अथाधिकव्यवच्छेदपरान्ययोगव्यवच्छेदार्थकावधारणपदार्थमाह द्वितीयपादेन ॥ कस्तदाधिकगुणाकर इति ॥ गुणानामाकरोऽधिकश्चासौ स चेति विग्रहः । प्रभुः समर्थः । कोऽस्ति, न कोऽपीत्यर्थः । स्वतन्त्रसत्ताश्रयः पूर्वकालीनसत्ताभावव्यावृत्तो मुख्योऽतिशयसाम्यशून्यो भवान् एक एवेति वाक्यार्थः । न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुते. । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इति स्मृतेश्च । यद्वा, एकशब्दश्चेतनानामद्वितीयश्चाचेतनस्यैवकारश्च स्वगतधर्माणां स्वतन्त्रसत्ताऽयोगव्यवच्छेदपरः । तथा च त्रयाणामपि चेतनाचेतनस्वगतधर्माणां तदात्मीयत्वाविशेषेण तदपृथक्सिद्धत्वात् । स्वतन्त्रसत्ताश्रयं त्वत्तोऽन्यद् वस्तुजातं नास्त्येवेति वाक्यार्थः । आत्मा हि परमः स्वतन्त्रोऽधिगुणः यदासीत् तदधीनमासीदिति श्रुतेः ॥

अन्ये तु, सदेव सोम्येतद्वाक्यं सजातीयविजातीयस्वगतभेदनिषेधपरम् । तत्र सजातीयश्चेतनवर्गो, विजातीयश्चाचेतनवर्गः, स्वगताश्च गुणशक्त्यादय इत्याहुस्तच्चिन्तनीयम् । अद्वितीयपदेनैव द्वितीयमात्रनिषेधसिद्धौ एकादिपदानां प्रयोगवैयर्थ्यात् । पक्षेतरस्य कालत्रयेऽपि निषेधं वदन्तोऽस्माभिः प्रष्टव्याः । अद्वितीयपदेन श्रुत्याभिहितद्वितीयाभावः कालत्रयेऽस्ति, न वेति वक्तव्यम् । नाद्यः । स्वोक्तव्याघातात् । अन्त्ये द्वितीयस्य सत्त्वापत्तेश्चेत्युभयथाऽपि पाशारज्जुः । नच नाभावो द्वितीयोऽद्वैतविरोधीति वाच्यम् । अभावत्वाधिकरणत्वादिभावैरविनाभूतेनाभावेनातिशयतोऽप्यद्वैतभङ्गात् । अभावरूपप्रतीतिनिमित्तमभ्युपेत्य वेदान्तानां सखण्डार्थत्वा-

पाताच्च । किञ्च, सच्छब्दस्य को वाऽर्थो भवतोऽभिमेतः । शुद्धो, वोपाहितो, वाऽव्याकृतो वेति । नाद्यः । तस्य पदार्थत्वाऽनभ्युपगमात् । अन्यथा घटवत् तव मते मिथ्या स्यात् । सविशेषत्वापत्तेश्च । द्वितीये ततो माया भिन्नाभिमेताऽभिन्ना वा । भिन्नत्वे च द्वैतापत्तेः । अभिन्नत्वे माया एव ब्रह्मेति सिद्धान्तापत्तेः । नाऽप्यव्याकृतपक्षोऽभ्युपगन्तव्यः । अद्वैतप्रतिज्ञाभङ्गात् । अस्मदिष्टापत्तेश्च । अव्याकृतस्यैव सजातीयादिभेदनिषेधेऽपि नास्मत्क्षतिः । सविशेषत्वाभ्युपगमात् । अव्याकृतं नाम पञ्चानां भूतानां सूक्ष्मावस्था, कर्माविद्यासहिताश्च जीवा, अन्तर्यामीश्वरोऽधिष्ठाता तस्य समुदाय इति यावत् । तस्य चाऽनेकविशेषवत्त्वात् सुतरां निर्विशेषत्वभङ्ग उक्तार्थहानिश्चेति । अन्यथा कर्मजीवादीनां सादित्वाभ्युपगमे कृतनाशाकृताभ्यागमप्रसङ्गः । कर्तुरभावात् सृष्ट्यऽनुपपत्तिप्रसङ्गः । तद्वैचित्र्यहेतुभूतकर्माभावात् । असत्कार्यवादापत्तिप्रसङ्गश्च । भूतसूक्ष्मानभ्युपगमात् । तस्मात् सर्वप्रमाणाविरोधायोक्तसिद्धान्त एव वरीयान् । विस्तरस्त्वाकरे द्रष्टव्यः । अतस्त्वमेव मुमुक्षुभिः शरणत्वेन वरणीय इत्याह शेषार्द्धेन ॥ त्वामिति ॥ त्वामेव शरणं प्रयामीति सम्बन्धः । शरणापत्तिर्नाम साधनफलसम्बन्धादिभिः सर्वात्मभावैर्भगवन्तमेव निश्चित्य तत्रात्मीयभरार्पणमिति । सा षोढा— आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् * रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा * आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिरिति वचनात् । तत्र श्रीपुरुषोत्तमस्य, एष सर्वभूतान्तरात्मेत्यादिश्रुतेः । सर्वान्तरात्मत्वं निश्चित्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्यानुकूलाचाराध्यवसाय आनुकूल्यसङ्कल्पपदार्थ इत्यर्थः । प्रथमोऽङ्गः । चराचराणि भूतानि सर्वाणि भगवद्वपुः * अतस्तस्यानुकूल्यं मे कर्तव्यमिति निश्चय

इति वचनात् । १ । पूर्वोक्तलक्षणानुकूलाद्विपरीतः प्रतिकूलस्तद्वर्जनं द्वितीयः । तथाच वैष्णवे परापवादपैशून्यमनृतं यो न भाषते * अनुद्वेगकरं चाऽपि तोष्यते तेन केशवः । परपत्नीपरद्रव्यपरहिंसासु यो मतिम् । न करोति पुमान् भूप तोष्यते तेन केशवः । न ताडयति नो हन्ति प्राणिनोऽन्यांश्च देहिनः । यो मनुष्यो मनुष्येन्द्र तोष्यते तेन केशव इति सगरं प्रति आर्वोक्तिः । मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः * निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेति श्रीमुखोक्तेः । २ । वात्सल्यादिगुणार्णवः सर्वशरण्यो भगवान् वासुदेवः प्रपन्नानस्मान् रक्षिष्यत्येवेति निश्चयो विश्वासः । रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः * स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशन इति तृतीयः । योगक्षेमं वहाम्यहम्, अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे इति भगवदुक्तेः ३ । यद्यपि सर्वज्ञानशक्त्यादिकारुण्यदयाक्षमादिगुणैकधामा श्रीपुरुषोत्तमस्तथाऽप्यात्मपराङ्मुखैः प्रार्थनाशून्यैरप्रार्थितो गोपायिता न स्यात् । अन्यथा सर्वमोक्षप्रसङ्गात् । शास्त्रसेतुभङ्गापत्तेश्चेति निश्चित्य, श्रीकृष्ण ! रुक्मिणीकान्त गोपीजनमनोहर * संसारसागरे मग्नं मामुद्धर जगद्गुरो । केशव क्लेशहरण नारायण जनार्दन । गोविन्द परमानन्द मां समुद्धर माधवेत्यादिमन्त्रोक्तरीत्या बुद्धेः सदा प्रार्थनाप्रवणत्वं गोप्तृत्ववरणत्वम् । ४ । प्रपत्तव्यस्य हरेः सम्यक्प्रसादहेतुः प्रपत्तिरेवेति निश्चयेन तेन रक्ष्यमाणस्यात्मनोऽहम्ममत्वफलस्वाम्यादीनां भारस्य श्रीभगवत्यर्पणमात्मनिक्षेपः । आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते इति वचनात् । उपरिचराख्याने च आत्मा राज्यं धनं मित्रं कलत्रं वाहनानि च * एतद्भगवते सर्वमिति तत्प्रेक्षितं सदेति । वाल्मीकीये भरतः । राज्यं चाऽहं च

रामस्य धर्मं वक्तुमिहार्हसीति । निर्ममो निरहङ्कार इति भगवदुक्तेश्च । ५ । यद्यदुपायं कुर्य्यात् तचाद्विनश्येत् द्विपर्ययं च प्राप्नुयात् तदा कर्तृत्वाद्यभिनिवेशात्मकगर्वस्य यन्नाशस्तत्कार्पण्यम् । उपाया नैव सिद्ध्यन्ति ह्यपाया विविधास्तथा ॥ इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते इति वचनात् । ६ । एतेषु षट्सु आत्मनिक्षेपो मुख्यः । अङ्गित्वात् । अन्ये च तत्सहकारिणस्तदङ्गभूता इति विवेकः । यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै, तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इत्यादिश्रुतेः । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेति श्रीमुखोक्तेश्च । अस्या विशेषश्च पूर्वाचार्य्यैर्निरूपितः । अथास्याः प्रपत्तव्यस्य स्वरूपादिकं निरूपयति ॥ शरण्यकमिति ॥ शरण्यश्चासौ कश्च तम् । सर्वस्य शरणं सुहृत् । कं ब्रह्म खं ब्रह्मेत्यादिश्रुतेः । अथ रूपं निर्दिशति ॥ पुण्डरीकनयनमिति ॥ पुण्डरीकवदतिसुन्दरे सुकुमारे नयने यस्य स तथा तम् । सत्पुण्डरीकनयनं मेघाभं वैद्युताऽम्बरमिति मन्त्रवर्णात् । एतेन शरण्यस्य निरतिशयसौन्दर्यादिम्पवत्त्वमुक्तं भवति । तमेव विशिनष्टि ॥ सुधानिधिमिति ॥ माधुर्य्यसौन्दर्यलावण्यसौकुमार्यादिगुणा एव सुधा, तस्या निधिराधारो विग्रहो यस्य स तथा तम् । हेयांशशून्यत्वात् ॥ ३ ॥

तमेव विशिनष्टि द्वाभ्यां श्लोकाभ्याम् ।

त्वां विशिष्टगुणमात्मसुप्रियं
दर्शनीयसुखपङ्कजश्रियम् ॥
स्पर्शनीयतनुवल्लरीश्रियं
सेवनीयपदपङ्कजद्वयम् ॥ ४ ॥

त्वां विशिष्टगुणमिति ॥ विशेषेण शिष्टा उत्कृष्टा मोक्षहेतवः स्वरूपावदुपासनीया आनन्दादयो गुणा यस्य तथा तम् ।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति श्रुतेरेवोपास्यत्वं मोक्षहेतुत्वं चाऽवगम्यते गुणानाम् । अनन्ताऽचिन्त्यसद्गुणार्णवमित्यर्थः । अथ वात्सल्यादीन् व्यञ्जयन् विशिनष्टि ॥ आत्मसुप्रियमिति ॥ आत्मानः स्वानन्याश्रिता जीवविशेषाः सुप्रिया यस्य, आत्मनां स्वैकान्तिनां ज्ञानिनां सुप्रियः प्रेष्ठो वा स तथा तम् । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति श्रीमुखोक्तेः । ब्रह्मणे ईशो रमते तस्मिन्नु जीर्णे शयाने नैनं जहात्यहस्सु इति तैत्तिरीयाम्नायात् । तेषां प्रियत्वे हेतुमाह ॥ दर्शनीयमुखपङ्कजश्रियमिति ॥ दर्शनीया अवश्यं द्रष्टव्या मुखपङ्कजसम्बन्धिनी श्रीः शोभा यस्य तम् । भक्ताऽनुग्रहप्रवणनिरतिशयकारुण्यव्यञ्जककमनीयकटाक्षमोचकदयार्द्रस्वभावनयनाश्रितमुखारविन्दश्रियमित्यर्थः । ध्येयगतस्वाभाविकविशेषान्तरमाह ॥ स्पर्शनीयतनुवल्लरीश्रियमिति ॥ स्प्रष्टुमर्हा तनुवल्लर्याः सम्बन्धिनी श्रीः शोभा यस्य तम् । अङ्गप्रत्यङ्गमाधुर्य्यलावण्यसौन्दर्यमार्दवसौकुमार्यादिनिधिमित्यर्थः । किञ्च ॥ सेवनीयपदपङ्कजद्वयमिति ॥ सकामनिष्कामसाधारणैस्तत्तत्स्वाभिलषितपुरुषार्थसिद्धये सेवितुं योग्यं पदद्वयं यस्य तम् । एतच्च नखादिशिखापर्यन्तध्यानस्योपलक्षणार्थम् । एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशः हिरण्यश्मश्रुः, आप्रणखात् सुवर्णः । आनन्दमूर्तिममृतं यद्विभाति । यदात्मको भगवाँस्तदात्मिका व्यक्तिः । किमात्मको भगवान्, ज्ञानात्मक ऐश्वर्यात्मक इत्यादिश्रुतिभ्यः ॥ ४ ॥

अथ शरण्यस्य भगवतो ब्रह्मादिपूज्यत्वेन सर्वोत्कृष्टत्वं व्यञ्जयन्नाह ॥

ब्रह्मरुद्रसुरराजसर्चितं
पर्चितं च रमयाङ्कमालया ॥

**चर्चितं च नवगोपबालया**
**प्रेमभक्तिरसशालिमालया ॥ ५ ॥**

ब्रह्मरुद्रसुरराजसर्चितमिति ॥ ब्रह्मा चतुराननः । रुद्रस्त्रिनयनः । सुरराजो देवेन्द्रः सहस्रनयनः । तैः सर्चितम् । अचर्नध्यानस्तवनादीनां सुष्ठु सर्वोत्तमविषयमित्यर्थः । तेषां तज्जन्यत्वात् तदैश्वर्यभागित्वात् तच्छासनविषयत्वाच्च । यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति श्रुतेः । विष्णुपुराणे ऋषयः । एष ब्रह्मा तथैवाऽय सह रुद्रैस्त्रिलोचनः * सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः । अश्विनौ वसवश्चेमे सर्वे चेमे मरुद्गणाः । साध्या विश्वे तथा देवा देवेन्द्रश्चायमीश्वरः । प्रणाममवणा नाथ दैत्यसैन्यपराजिताः । शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः इति । तत्रैवादितिः । ब्रह्माद्याः सकलादेवा मनुष्याः पशवस्तथा* विष्णुमायामहावर्त्तमोहान्धतमसावृताः । आराध्य त्वामभीप्सन्ते कामानात्मविशुद्धये इत्यादिस्मृतेः । ब्रह्मशिवादिवन्दितादिति श्रीभगवदाद्याचार्य्यपादोक्तेश्च । अथ लक्ष्म्या विशिष्टं विदधदाह ॥ **चर्चित च रमयेति** ॥ रमया लक्ष्म्या चर्चितं नित्यसंबन्धत्वेन सेवितमित्यर्थः । तामेव विनष्टि ॥ अङ्कमालयेति ॥ अङ्कपर्यन्तविलम्बिनी माला यस्याः, तया । श्रियं लोके देवजुष्टामुदारामिति मन्त्रात् । जुष प्रीतिसेवनयोः । ततः कर्तरि निष्ठा । देवं श्रीभगवन्तं जुषते सेवते प्रीणयतीति वा देवजुष्टा तथा ताम् उदाराम् । सर्वपुरुषार्थदानकुशलामिति मन्त्रार्थः । अथ गोप्याः श्रीवृषभानुजाया वैशिष्ट्यं विदधद्विशिनष्टि॥ **चर्चितं च नवगोपबालयेति** । नवा नवीना चाऽसौ गोपबाला चेति तया तया चर्चितम् । तामेव विशिनष्टि **प्रेमभक्तिरसशालिमालयेति** ॥ प्रेमलक्षणया भक्त्या रस्यते अनुभूयते इति प्रेमभक्तिरसो भगवान् वासुदेवः । भक्तिरैनं दर्श-

यति, रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति श्रुतेः। तं शलितुं संवलितुं शीलमस्याः सा। तथाचाऽसौ भगवतो मालेव माला। वल्लवीवदनाम्भोजमालिने नृत्यशालिने इति मन्त्रवर्णात्। चकारो भूमिरूपिणीसत्यभामोपलक्षणार्थः। सत्यभामाप्रियमिति विशेषणं संयोजनीयम्। क्षमादयश्च मेदिन्यां शब्दाद्याश्च यथा गुणाः ॥ ध्रुवाः पङ्कजगर्भाभे त्वयि स्नेहस्तथा मम। रुचिरग्नौ यथा दिव्या प्रभा चैव दिवाकरे। कान्तिश्च शाश्वती चन्द्रे त्वयि स्नेहस्तथा ममेति हरिवंशे श्रीकृष्णोक्तेः। अत्रेदमाकूतम्। उक्तलक्षणो भगवान् श्रीमुकुन्दः श्रेयस्कामैः सदा ध्येय इति सर्वशास्त्रार्थः। स च अनपायिनीभिस्तिसृभिः श्रीगोपीभूमिभिः संपन्न एव। तासां नित्यपत्नीत्वेन नित्यं संबन्धात्। तासु च नित्यैश्वर्याधिष्ठात्री रमा। ईश्वरीं सर्वभूतानां, यशसा ज्वलन्तीमित्यादिश्रुतेः ॥

अनुरूपसौभगा देवी स्मरेमेति श्रीभगवदाद्याचार्य्यपादोक्तेः। देवस्य गायत्रीमन्त्रप्रतिपाद्यस्य सर्वशास्त्रार्थभूतस्य श्रीवासुदेवस्य पत्नी देवीति श्रीपुरुषोत्तमाचार्य्यपादोक्तेः। देवत्वे देवदेहेयं मानुषत्वे च मानुषी ॥ विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम्। राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनि। अन्येषु चाऽवतारेषु विष्णोरेषाऽनपायिनीति श्रीपराशरोक्तेः। पूर्णैश्वर्ययोगेऽपि पत्नीत्वात् तस्यास्तत्पारतन्त्र्यमेवातो नावतारेष्वतिप्रसङ्गशङ्केति विवेकः। केचिदत्र जीवभावमभ्युपगच्छन्ति। तत्तुच्छम्। ईश्वरीं सर्वभूतानामिति श्रुतिबाधात्। अन्ये तु मध्यमाक्षरत्वं भावयन्ति। तथाऽक्षरपदार्थो जीवात्मा, परमाक्षरश्च श्रीपुरुषोत्तमः। अस्यास्तूभयभिन्नत्वान्मध्यमाक्षरत्वं संभाव्यमिति। तदप्यसम्यक्। अश्रौतत्वात्। अत उक्तसिद्धान्त एव श्रेयान्मुमुक्षुभिर्ध्येयः। प्रेमाधिष्ठात्री व्रजस्त्रीशब्दवाच्या वृषभानुतनया श्रीराधिका। राधया

माधवो देवो माधवेन च राधिका * विराजते, इति ऋक्परिशिष्टश्रुतेः । यथा राधा प्रिया विष्णोस्तस्याः कुण्डं तथा प्रियम् * सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभेति पाद्मे कार्तिकमाहात्म्ये स्मृतेश्च । अङ्गे तु वामे वृषभानुजां मुदा विराजमानामिति श्रीभगवदाद्याचार्य्यपादोक्तेः । मुदा निरतिशयप्रेमानन्दमूर्त्या विराजमानां विशेषेण स्वरूपेण विग्रहेण प्रेमकारुण्यादिगुणैश्च राजते दीप्यते इति तथा तामिति श्रीपुरुषोत्तमाचार्य्यपादोक्तेश्च । अत्र केचिदप्रमाणशङ्कामुद्भावयन्ति,ते ह्यन्धाः। उक्तश्रुतिस्मृतिषु सतीष्वपि तेषां दृष्ट्यगोचरत्वात्, दिवान्धोलूकादिवत् । श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते * एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तित इति लक्षणस्य तेषु समन्वयात् । ननु वाक्यानि विविधानि विधिमन्त्रार्थवादादिभेदात् । तत्र विधेर्मुख्यत्वादन्येषां तु स्वार्थे प्रामाण्याभावात् । तथाच मन्त्रार्थवादस्य प्रकृते सत्त्वेऽपि विध्यभावादप्रामाण्यमेवेति चेत् सत्यम् । अर्थवादादीनां सर्वथा स्वार्थेऽप्रामाण्याङ्गीकारे तेषामपि श्रौतत्वाविशेषेणावैदिकत्वापत्तेः । किन्तु विधीनां प्राबल्येऽपि अर्थवादाद्याकाङ्क्षादर्शनात् । यथाऽनिष्टाननुबन्धित्वावबोधाभावे इष्टाऽनुबन्धित्वे ज्ञातेऽपि पुरुषप्रवृत्तिर्न स्यात् । तथैवार्थवादानां प्रयोजनवदर्थविधायिविध्याकाङ्क्षासाम्यात् । यत्रोभयोः श्रवणं तद्वाक्यं पूर्णम्, एकस्य श्रवणे तु इतरस्य कल्पनया पूरणीयं स्यात् । यथा, वसन्ताय कपिञ्जलानालभेत, इत्यत्र विधिवदर्थवादांऽशोऽश्रुतोऽपि कल्प्यते । प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीति यत्रार्थवादः श्रूयते तत्राऽश्रुतोऽपि विध्यंशः कल्प्यते । प्रतितिष्ठन्ति ह वा इत्यादौ श्रुतेः, प्रतिष्ठाकामा रात्रिसत्रमुपेयुरित्यादि । तथा प्रकृतेऽपि मन्त्रादीनां सत्त्वाद्विध्यंशः कल्पनीयः । विधेयं स्तूयते वस्त्विति न्यायात् । किञ्चास्तां तावद्विधिक-

त्वनम् । फलश्रुत्याऽपि विधानं समञ्जसमेव । सर्वं पाप्मं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजतीति श्रुत्यैवाऽश्वमेधो विधीयते। तथा प्रकृतेऽपि, राधया माधव इति नित्यसम्बन्धपरेण वाक्येन, बल्लवीवदनाऽम्भोजमालिने इत्यादिनिरतिशयप्रीतिव्यञ्जनपरेण मन्त्रेणैव तदुपासनमेव विधीयते इति बोध्यम् ॥

वस्तुतस्तु, औपनिषदानां राद्धान्ते शक्तिनिर्णये पृथग्विध्यपेक्षैव नास्ति । स्वतन्त्रोपासनानभ्युपगमात् । शक्तिमत उपासने एव तस्यास्तदपृथक्सिद्धत्वेन तदुपासनाङ्गत्वेन चान्तःपातित्वात् । किन्तु नित्यसम्बन्धमात्रस्यैवापेक्षितत्वात् । तथाच तस्य मन्त्रेण सुस्पष्टमेव प्राप्तत्वान्न विध्यपेक्षागन्धोऽपीति राद्धान्तः । तथाचोक्तशास्त्रार्थस्यानवगमात् तेषामन्धत्वं सुव्यक्तमित्यलं विस्तरेण । किञ्च श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतौ श्रीशब्दः सत्यभामाख्यभूमिवाचकः । तथाच, श्रीयतेऽत्रेति श्रीः सर्वाधारभूता भूमिः । तस्या आधारत्वं प्रत्यक्षप्रमाणेनाऽपि सिद्धम् । कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी * व्रजस्त्रीजनसम्भूता श्रुतिभ्यो ब्रह्मसङ्गत इति मन्त्रे च व्रजस्त्रीशब्दवाच्यायाः श्रीराधिकायाः संग्रहः।तथाचोभयत्रैकैकमुपलक्ष्य, तयोर्मन्त्रयोः प्रवृत्तिरित्यवगम्यते । तस्मादुभयत्र गुणोपसंहारन्यायेन तिसृणां विधानं बोध्यम् । रमासत्यभामाव्रजस्त्रीभिः स्वासाधारणानपायिनीभिः पत्नीभिर्नित्यसम्बन्धो भगवान् श्रीमुकुन्दो वासुदेवः सदा ध्येय इति सिद्धम् । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, भूमा त्वेव विजिज्ञासितव्य इत्यादिश्रुतिभ्यः । सर्वज्ञसर्वशक्तेर्निदिध्यासनसिद्धौ तासामपि तत्रैवान्तर्भावात् । जनेषु सम्भूताः सुप्रसिद्धा याः श्रुतयस्ताभ्यः प्रमाणभूताभ्यः, आभ्यां रुक्मिणीव्रजस्त्रीभ्यां श्रीगोपालाख्यस्य परब्रह्मणः सङ्गतो नित्यसम्बन्ध इति मन्त्रार्थः। यद्वा, श्रुति-

भ्यः प्रमाणभूताभ्यो रुक्मिणीप्रजस्त्रीजनसम्भूताभिः स्वपत्नीभिरनपायिनीभिः, ब्रह्मसङ्गत इति ब्रह्मणः श्रीगोपालाख्यस्य नित्यसम्बन्ध इति तिसृणामेवास्मिन्मन्त्रे संग्रहः। कण्ठरवेणैव, जनसम्भूता इति जनैः सम्भूयतेऽत्रेति व्युत्पत्त्या भूमेर्ग्रह इत्यर्थः ॥ ९ ॥

इति श्रीहयग्रीवानुग्रहलब्धविवेकेन श्रीमद्भगवन्नियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे शरणापत्तिशाखा तृतीया ॥ ३ ॥



## अथ चतुर्थी शाखा ।

अथ तत एव प्रपत्त्यपुरुषोत्तमाद् वस्तुजातस्य पृथक्सिद्धतां निराकुर्वंस्तस्य सर्ववैलक्षण्यं निर्द्धारयति श्रुतिमुखेन—

किञ्च किञ्चिदिह विद्यते न हि
त्वां विनाऽण्वपि तथाऽखिलेश्वर ॥
नेति नेति च निषेधिताश्रय-
स्तद्विशेषविषयोऽपि सम्मतः ॥ ६ ॥

किञ्चेति ॥ अन्यदपि विशेष उच्यत इत्यर्थः । हे अखिलेश्वर विश्वनियन्तः ! एष सर्वेश्वर इति श्रुतेः । इह लोके वेदे च त्वां विना किञ्चदपि वस्तुजातम् । अण्वपि अणुपरिमाणमात्रमपि न विद्यते । हीति निश्चये । सर्वस्यापि चेतनाचेतनस्य जगतस्त्वदात्मकत्व-त्वद्व्याप्यत्व-त्वदाधेयत्वादिभ्य, आत्मीयव्याप्याधेयादेः स्वात्मव्यापकाधारादेः पृथक्सिद्धत्वाभावस्य नियतत्वान्मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, तं सर्वं परादाद्योऽन्यत्रात्मनः सर्वं वेद, न तदस्ति विना यत् स्यान्मया भूतं चराचरमित्यादिश्रुतिस्मृतिभ्यः । त्वत्तः पृथक् स्वतन्त्रसत्तावद् वस्तुजातं नास्तीत्यर्थः । सत्त्वं स्वातन्त्र्यमुदिष्टं तच्च कृष्णे न चाऽपरे * अस्वातन्त्र्यात् तदन्येषामसत्त्वं विद्धि भारतेति भारतवचनाच्च । अथ सर्ववैलक्षण्यं दर्शयति ॥ नेति नेति च निषेधिताश्रय इति ॥ नेति नेतीति निषेधितो यः प्राकृतस्थूलत्वादिस्तदभावस्य वैलक्षण्यस्याश्रयस्त्वमसीति । अथात आदेशो नेति नेति, अस्थूलमनण्वह्रस्वमदीर्घमऽलोहितमस्नेहमच्छायम, अपाणिपादो जवनो ग्रहीता पश्यत्यऽचक्षुः स शृणोत्यऽकर्ण इत्यादिश्रुतिभ्यः । ननु यद्येवं तर्हि सर्व-

धर्मादिशून्यमेव तत्त्वमित्याशङ्क्याह ॥ तद्विशेषविषयोऽपि सम्मत इति ॥ ततो निषेधाद्विशेष आधिक्यं तस्य विषयो भूयस्त्वप्रतिपादनविषय इति शास्त्रस्य सम्मतोऽस्तीति । सर्वस्य वशी सर्वस्येशानः, संसारबन्धस्थितिमोक्षहेतुः । अक्षरात् परतः पर इत्यादिश्रुतिभ्यः । स्वस्वरूपगुणानामियत्ताभावेन तन्निषेधेनैव निषेधशास्त्रस्यापि स्वप्येवान्वय इत्यर्थः । प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति न्यायात् । तथाचाऽयमर्थः । अथात आदेशो नेति नेतीत्यादिश्रुतिः प्रकृतिगतं स्थूलत्वादिकमेतावत्त्वं प्राकृतसम्बन्धमेव प्रतिषेधति, न तु ब्रह्मणः स्वाभाविककल्याणविशेषान् इत्यवगम्यते। यतो, भूयो ब्रवीति । पुनरग्रे भूयस्त्वेन प्रतिपादयति । अन्यथा निषेधानन्तरं भूयस्त्वेन गुणादिप्रतिपादनं न संगच्छेतेति । अथाऽत आदेशो नेतिनेतीत्युक्त्वा, न ह्यस्मादिति नेत्यन्यत् परमस्ति, अथ नामधेयं, सत्यस्य सत्यं, प्राणा वै सत्यं, तेषामेष सत्यम् इत्यादिश्रुत्या उत्तरत्र भूयस्त्वश्रवणात् ॥ ६ ॥

इत्थं प्रपञ्चस्य स्वरूपादिकमुक्त्वा तत्र तद्गुणादीयत्ता निराकृत्य सर्ववैलक्षण्यं च प्रतिपादितम् ॥

अथेतरेतरविरुद्धानामपि धर्माणामीश्वरे अविरोधप्रकारं वर्णयन् भक्तिं प्रार्थयते ॥

स्वल्पअणुत्वसुमहत्त्वभागिनि
सर्वशक्तिबलयोगशालिनि ॥
भक्तिरस्तु मम निश्चला हरे !
कृष्ण केशव महत्तमाश्रये ॥ ७ ॥

स्वल्पअणुत्वसुमहत्त्वभागिनीति ॥ हे हरे स्वाश्रितदोषापहारिन् हरिर्हरति पापानीति स्मृतेः । हे कृष्ण सच्चिदानन्दरूप । कृपि-

भूर्वाचकः शब्दो णश्च निर्वृतिवाचकः * तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते इति स्मृतेः। हे केशव ब्रह्मशिवादिजनक ! ।

क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।

आवां तवाङ्गसम्भूतौ तस्मात् केशवनामवानिति हरिवंशे शिवोक्तेः। त्वयि मम भक्तिरस्तु इत्यन्वयः। भक्तिविषयं भजनीयतत्त्वं विशिनष्टि—

**अणुत्वसुमहत्त्वभागिनीति**॥ अणुत्वादिभजनशीले। तत्राऽणुपरिमाणकजीवान्तरात्मतया स्थितिरणुत्वभागित्वं, महत्परिमाणकाऽऽकाशाद्यन्तरात्मतया चावस्थानं सुमहत्त्वभागित्वम्। यद्वा अणुपरिमाणकाज्जीवादप्यणुत्वादणुत्वभागित्वं, बृहत्परिमाणकाकाशादेरपि महत्त्वात् सुमहत्त्वभागित्वमिति विवेकः। अणोरणीयान्महतो महीयानिति श्रुतेः। किञ्च, अणुत्वमहत्त्वयोरितरेतरविरोधदर्शनात् तत्परिहाराय विशेषणमाह॥ **सर्वशक्तिबलयोगशालिनीति**॥ सर्वे च ते शक्तिबलयोगाश्च तान् शालितुं संवरितुं शीलमस्येति तथा तस्मिन्निति विग्रहः। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः। सर्वोपेता चेति सूत्रात्।

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।

शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।

भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति स्मृतेः। अनन्ताऽचिन्त्यस्वाभाविकशक्त्यादियोगान्न विरोधशङ्कावकाश इति भावः। अथ सदाचारगर्भितविशेषणमाह—

**महत्तमाश्रये इति**॥ महत्तमाः श्रीसनत्कुमारनारदमनुव्यासादयस्तेषामाश्रय आश्रयणीयस्तस्मिन्। यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेत्यादिश्रुतेः। यद्वा, महत्तमो वेदस्तस्य प्रतिपाद्यतयाश्रयस्तस्मिन्। सर्वे वेदा यत्रैकीभवन्तीति श्रुतेः। अथ-

वा, महत्तमा ज्ञानैश्वर्यादयो धर्मास्तेषामाश्रयस्तस्मिन् । यः सर्वविदित्यादिश्रुतेः । अथ भक्तिं विशिनष्टि ॥ निश्चलेति ॥ चलनव्यवहारशून्या ध्रुवा स्मृतिलक्षणा । सत्त्वशुद्धौ ध्रुवा स्मृतिरिति श्रुतेः ॥ ७ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धबोधेन श्रीमद्भगवन्नियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे चतुर्थी शाखा ॥ ४ ॥

## अथ पञ्चमी शाखा।

अथ तत्त्वमस्यादिवाक्यार्थतयाऽनुसन्दधत् स्तौति।

तत्त्वमादिपदवाच्यविष्णवे
जिष्णवेऽखिलगुरो भविष्णवे॥
आत्मनां यमयते प्रतेजसे
नौमि ते मधुरिपो महौजसे॥ ८॥

तत्त्वमादिपदवाच्यविष्णवे इति॥ तच्च त्वं च तत्त्वमौ ते आदी येषां तानि तत्त्वमादीनि पदानि तेषां वाच्यः शक्यः स चाऽसौ विष्णुश्च तथा तस्मै। तत्र सर्वाचिन्त्यानन्तापरिमितज्ञानशक्त्यैश्वर्याश्रयो मुक्तोपसृप्यो मुमुक्षुध्येयो ब्रह्मेशेन्द्रादिवन्दितपादपीठो विश्वजन्मादिहेतुः सर्वान्तरात्मा भगवान् वासुदेवः श्रीपुरुषोत्तमस्तत्पदार्थः। स एव तदात्मकपरतन्त्रसत्ताश्रयक्षेत्रज्ञमत्यगात्मादिशब्दाभिधेयान्तरात्मभूतस्त्वम्पदार्थः। सामान्यसत्ताश्रयोऽसिपदार्थः। आदिना, अयमात्मा ब्रह्म, सोऽहमस्मि, सर्वं खल्विदं ब्रह्मेत्यादीनां सङ्ग्रहः। ननु त्वम्पदस्य प्रत्यगात्मनि जीवे एव शक्तिः सुप्रसिद्धा, कथं तदन्तरात्मपर्यन्तधावनम्। अप्रसिद्धत्वादनुपपन्नत्वादनुपस्थितत्वाच्चेति चेन्न। वैदिकानां सर्वेषामपि शब्दानां ब्रह्मण्येव शक्तत्वात्। तथाहि। यथाऽग्निशब्दः शब्दस्वरूपवाचकोऽर्थवाचकश्च शक्त्यैवोभयत्र शक्तः प्रमाणसिद्धः। अग्नेर्ढक्, इत्यत्र शब्दपरत्वम्। अग्नौ जुहोतीत्यत्रार्थपरत्वं शाब्दिकैरभ्युपगतम्। यथा वा चतुर्मुखत्रिनयनादिशब्दाः, आकाश—वाय्वादिशब्दाश्च तत्तच्चतुर्मुखादिव्यक्तौ तत्तच्छरीरिणि चेतने च तत्तद्भूतविशेषे तत्तदभिमानिनि देवविशेषे च शक्ता एवेति लौकिकप्रसिद्धिः। तथैव चेतनाचेतनवस्तुजातवाचकाः सर्वेऽपि शब्दास्तत्त-

त्पदार्थवाचका अपि तत्तदन्तरात्मभूते परमेश्वरे ब्रह्मणि वासुदेवे अपि शक्ता एवेत्यौपनिषदानां राद्धान्तः । नामानि सर्वाणि यमाविशन्तीत्यादिश्रुतेः । नन्वेव सति यथा घटादिशब्दोच्चारणाज्झटिति कम्बुग्रीवादिमद्वस्तूपस्थितिर्जायते तथा ब्रह्मणोऽप्युपस्थितिर्भवतु, शक्यत्वाविशेषात्र तु तथा प्रतीयते । कथमुक्तसिद्धान्तसंभव इति चेन्न । ब्रह्मज्ञानस्य वेदान्तविचारप्रयोज्यत्वात् । वेदान्तविचाराऽभावे तथाभूतज्ञानाभावो युक्त एवेति भावः । अनेनैवाभिप्रायेण, स ब्रह्मा स शिवः सेन्द्रः, ब्रह्मा च नारायणः शिवश्च नारायणः, सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वं, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्, नारायणात् परो ध्याता ध्यानं नारायणः परः * स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च । उपसंहरते चान्ते संहर्त्ता च स्वयं प्रभुः । एतमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् । ज्योतींषि शुक्लानि च यानि लोके सर्वे लोका लोकपालास्त्रयी च । त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव । त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः । ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च । नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ! इत्यादिश्रुतिस्मृतिपठितानां समानाधिकरणवाक्यानां प्रवृत्तिर्बोध्या । तच्चाग्रे वक्ष्यते । तत्र हेतुमाह ॥ आत्मनां यमयते इति ॥ येन नाना नियन्त्रे । य आत्मानमन्तरो यमयतीति श्रुतेः । नियन्तृत्वे हेतुमाह ॥ प्रतेजसे इति ॥ प्रकृष्टम् आदित्यादितेजसामपि प्रकाशकं तेजो यस्य स तथा तस्मै । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं येन सूर्यस्तपति तेजसेद्ध इति श्रुतेः । अत एव, जिष्णवे इति ॥ सर्वसुरासुरजयनशीलाय । तत्रापि हेतुः—भविष्णव इति ॥ सङ्कल्पमात्रेण भवनशीलाय । सोऽकामयत बहु स्यां प्रजायेय, सत्य

स्यघाऽभवदित्यादिश्रुतेः । अत एव, महौजसे महत् स्वाभाविकमोजो बलं यस्य ॥ तथा तस्मै । स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः । अत एव, मधुरिपो इत्यादिना संबोधयति । मधुकैटभहिरण्यकशिपुरावणशिशुपालादिहन्तः ॥ अत एव, अखिलगुरो इति । ब्रह्मादीनामप्युपदेष्टः । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इति श्रुतेः । त्वदेकप्रयोजनोऽन्यप्रयोजनशून्यश्चाऽहं नौमि ॥ त्वामिति कर्मपदमध्याहृत्य योजनीयम् । तत्र प्रयोजनाकाङ्क्षायामाह ॥ ते इति ॥ तुभ्यं प्रयोजनरूपाय इति । तवैव पुरुषार्थरूपत्वात् । ब्रह्मविदाप्नोति परं, मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे इत्यादिश्रुतिस्मृतिभ्यां मुक्तोपसृप्यव्यपदेशादिति न्यायाच्च ॥ ८ ॥

अथ वाक्यार्थं निरूपयन्नौपनिषदसिद्धान्तमाह ।

ब्रह्मणो भवत आदिरूपा-
ज्जायते यत इदं रमेश्वरात् ॥
तन्नियामकतया तदात्मकं
विश्वमेयममिखिलं प्रचक्षते ॥ ९ ॥

ब्रह्मणो भवत इति ॥ तत्र केचित्, तत्त्वमस्यादिवाक्यानामखण्डार्थनिष्ठत्वमाहुस्तच्च लक्षणप्रमाणायोगात् । तत्र, न तावल्लक्षणोपपत्तिः । तथाहि । किं तावल्लक्षणं निर्भेदार्थनिष्ठत्वं वा, निर्विशेषार्थनिष्ठत्वं वा, एकविशेष्यपरत्वं वा, अपर्यायशब्दानां संसर्गागोचरप्रमाजनकत्वं वा, तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वेति । नाद्यः । भेदाभावविशिष्टरूपस्य तदुपलक्षितस्वरूपस्य वा निर्भेदस्य शब्दबोध्यत्वेऽभिमते निर्घटं भूतलमित्यादिवत् सखण्डार्थत्वापत्तेः । स्वरूपमात्रमात्राभिमते च सखण्डार्थानां सगुणवाक्यानामपि वस्तुतो निर्भेदब्रह्मनिष्ठत्वेनाऽखण्डार्थत्वापातात् । प्रकृष्टप्रकाशादि-

वाक्येष्वव्याप्तेश्च । अत एव, न द्वितीयो, नाऽपि तृतीयः । नील-मुत्पलमित्यादावतिव्याप्तेरिष्टापत्तेः । नाऽपि चतुर्थः । संसर्गशब्दोऽत्र संसर्गसामान्यपरो वा, पदस्मारितपदार्थसंसर्गवाचको वेति । नाद्यः । अप्राप्तयोः प्राप्तिः संयोग इत्यादिसंसर्गलक्षणवाक्येऽव्याप्तेः । नाऽपि द्वितीयः । विषं भुङ्क्ष्वेत्यादिवाक्येऽतिव्याप्तेः । तस्य पदस्मारितपदार्थसंसर्गाप्रमापकत्वात् । नचास्याऽपि द्विषद्भन्ने न भोक्तव्यमिति शास्त्रमूलत्वाच्छ्रुत्यत्वमेव । शास्त्रीयपदस्मारितपदार्थसंसर्गाप्रमापकत्वादिति वाच्यम् । तस्य भुक्तिमूलत्वेनाशास्त्रमूलत्वात् । प्रतिपिपादयिषितपदार्थसंसर्गपरत्वाभ्युपगमे च, चन्द्रप्रश्नादिवाक्यार्थानां प्रश्नहेतुसंशयधर्मित्वेन प्रागेव सामान्यतो ज्ञाततया स्वरूपेणाऽप्रतिपिपादयिषितत्वात् । संसर्गप्रतियोगित्वेन तु प्रतिपिपादयिषितत्वविवक्षायां ससर्गाप्रमापकत्वासंभवात् । किञ्च, शीतोष्णस्पर्शवन्तौ पयःपावकावित्यादौ त्वद्रीत्या संसर्गाप्रतिपादकेऽनेकप्रातिपदिकार्थमात्रपरेऽतिव्याप्तेश्च । अत एव, नान्त्यः । असम्भवात् । सखण्डार्थवाक्ये, श्यामो दीर्घो लोहिताक्ष औपगव इत्यादावतिव्याप्तेः । एतेनैव, धर्मधर्मिभावासहत्वमखण्डार्थत्वमित्यपि निरस्तम् । तुल्ययोगक्षेमात् । नाप्यत्र प्रमाणं दृश्यते । ननु सत्यादिवाक्यमखण्डार्थनिष्ठं, प्रातिपदिकार्थमात्रनिष्ठं वा । लक्षणवाक्यत्वात् । तन्मात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यवत् । तत्त्वमस्यादिवाक्यम् अखण्डार्थपरम्, आत्मस्वरूपमात्रनिष्ठं वा । अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा । सोऽयं देवदत्त इत्यादिवाक्यवदित्याद्यनुमानस्य सत्त्वाप्रोक्तशङ्कावकाश इति चेन्न । आभासमात्रत्वात् । तत्राद्यानुमानम्, अप्रसिद्धविशेषणत्वविरुद्धत्वादिदोषवत्त्वाद् दुष्टम् । तथाहि । प्रत्यक्षादिनाऽरीदमित्थमिति स-

प्रकारकज्ञानस्यैवोत्पत्तेरप्रसिद्धविशेषणत्वं विरुद्धत्वमपि । असाधारणधर्मरूपलक्षणपरवाक्यस्य सखण्डार्थत्वेनैव व्याप्तेः, साध्याऽभावव्याप्तो हेतुर्विरुद्ध इति लक्षणयोगात् ॥

नच स्वरूपलक्षणस्य लक्ष्याभिन्नत्वात् तत्परत्वेनाऽखण्डार्थत्वाविरोधित्वम् । तस्य लक्ष्यमात्रत्वे लक्ष्यलक्षणभावायोगात् । अतिरेकेऽपि यावल्लक्ष्यभावित्वादिनैव स्वरूपलक्षणत्वोपपत्तेश्च ।

ननु लक्षणपरत्वं न हेतुः, किन्त्वपरत्वेऽपि तत्प्रत्यायकत्वमात्रमिति चेन्न । अलक्षणवाक्यस्यापि तात्पर्यभ्रमादिना लक्ष्यप्रत्यायकत्वसंभवेन व्यभिचारात् । किं चन्द्रलक्षणमित्यसाधारणधर्मप्रश्नोत्तरे प्रकृष्टादिवाक्ये व्यभिचाराच्च । नचाखण्डलक्षणवाक्यत्वं हेतुः । असिद्धत्वात् । न हि धर्मे पृष्टे स्वरूपमात्रं वक्तुमुचितम् । न हि प्रश्नविशेष्यविषयकत्वमुत्तरत्वे तन्त्रं, किन्तु तन्मूलसंशयविरोधित्वम् । तस्य स्वरूपमात्रेऽसंभवात् । सत्प्रतिपक्षत्वं च । सत्यादिवाक्यतात्पर्यविषयः, संसृष्टरूपः, संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात् । संमतवत् । वेदान्तजन्या प्रमा, सप्रकारिका । विचारजन्यज्ञानत्वात् । संशयादिविरोधित्वाच्च । कर्मकाण्डविचारजन्यज्ञानवत् । वेदान्तजन्या प्रमा, ब्रह्मनिष्ठप्रकारविषयिका । ब्रह्मधर्मिकसंशयविरोधित्वात् । ब्रह्मविचारजन्यज्ञानत्वाच्च । कर्मकाण्डविचारजन्यनिश्चयवदित्यादिप्रतिरोधात् । दृष्टान्तस्य साध्यवैकल्याच्च । तथाहि । प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यस्याऽखण्डार्थत्वं, न तावन्मुख्यवृत्त्या । लक्षणयाऽपि न तावत् । गङ्गायां घोष इत्यादाविवान्वयाऽनुपपत्त्या वा प्रकाशेन संबन्धस्य प्रकृष्टत्वप्रकाशत्वयोर्वा सत्त्वात् । नचाऽपि, यष्टीः प्रवेशयेत्यादाविव तात्पर्याऽनुपपत्त्या । प्रकृष्टत्वाऽवच्छिन्नप्रकाशस्याऽसाधारणधर्मभूतलक्षणस्य तात्पर्यस्य चन्द्रे समन्वयात् । तत्परस्य भाव-

स्तात्पर्यं, तच्च लक्षणमेवेति भावः । नच, कश्चन्द्र इति स्वरूपमात्रस्य पृष्टत्वादिति वाच्यम् । अस्ति कश्चिचन्द्रशब्दस्य वाच्य इत्यज्ञाने धर्मिज्ञानसाध्याया बुभुत्सायाः, सन्देहस्य चानुपपत्तेः । चन्द्रशब्दस्य प्रातिपदिकत्वानिश्चयेन सुविभक्तिप्रयोगायोगाच्च । चन्द्र इत्यनूद्य, क इति प्रश्नायोगाच्च । न ह्यज्ञातमनुवादार्हम्। ननु असंकीर्णं चन्द्रस्वरूपमज्ञातमेवेति चेन्न । चन्द्रस्वरूपद्वयाभावात् । तदेव स्वरूपमसंकीर्णत्वेन न ज्ञातमितिचेन्न । असंकीर्णत्वस्य व्यावर्तकविशेषव्याहृत्ति(?)विशेषयोरन्यतररूपत्वेन प्रश्नस्य विशिष्टपरत्वापातात् । तथाच—

सामान्यतो न ज्ञातोऽपि धर्मी चन्द्रो यदा तदा ।
न बुभुत्सा न सन्देहो नानुवादश्च युज्यते ॥
तस्माचन्द्रस्येतरस्माद्भेदको धर्म एव हि ।

दृष्टस्तस्मात् प्रकृष्टादिवाक्यं नाखण्डगोचरमिति वाक्यविदुक्तेः। एव प्रतिवचनस्य प्रकृष्टादिविशिष्टेतात्पर्याभावे तात्पर्यतो यः कश्चिचन्द्र इत्येव बोधनात् । अतात्पर्यविषयस्य प्रतीतस्य च त्यक्तत्वात् । वस्तुतो यस्य कस्याऽपि चन्द्रत्वं स्यात् ।तात्पर्येऽखण्डेऽय चन्द्र इति लक्षणलक्ष्यरूपोद्देश्यविधेयविभागाभावेन तात्पर्यतो यत्किञ्चिदित्येव बोधनात् । तेन बुभुत्सानिवृत्त्यभावात्, कश्चन्द्र इति प्रश्नस्योत्तरं च न स्यात् । सर्वेषामपि वाक्यतात्पर्यजन्यज्ञानानां वस्तुगत्या परस्परभिन्नतत्तत्प्रातिपदिकार्थविषयत्वेऽपि प्रकारभेदाऽभावेन तेन तेन भिन्नभिन्नप्रकारकतत्तत्सन्देहनिवृत्तिश्च न स्यात् । तस्मात् कश्चन्द्र इति वचोभङ्गयाऽसाधारणधर्मरूपलक्षणपरमिदं वाक्य, तथैवोत्तरं चेति सङ्क्षेपः । नाऽपि द्वितीयानुमानस्य प्रामाण्यम् । अप्रसिद्धविशेषणबाधप्रसतिपक्षत्वादिदोषयोगात् । प्रकृष्टादिवाक्योक्तरीत्या सत्यादिवाक्येऽपि बुभुत्साद्यऽनुपपत्त्या ब्रह्मस्वरूपमात्रप्र-

श्नोत्तरत्वस्यासिद्धेश्च । किञ्च, यदि चोत्तरजन्यज्ञानं निष्प्रकारकं स्यात् तर्हि तेन सप्रकारकसन्देहनिवृत्तिर्न स्यात् । यदि चोत्तरं प्रश्नादधिकविषयं न स्यात् । तर्हुत्तरमेव न स्यात् । अन्यथा प्रश्न एवोत्तरं स्यात् । किं करोति ? किमानेयम् ? इत्यादिप्रश्नोत्तरेष्वऽध्ययनं करोति, गामानयेत्यादिषु व्यभिचाराच्च ॥

यदुच्यते न्यायदीपावल्यां सत्यादिवाक्यार्थो ब्रह्म, प्रातिपदिकार्थमात्रम् । तन्मात्रप्रश्नोत्तरवाक्यार्थत्वादित्यनुमानमपि तुच्छम् । एकप्रातिपदिकार्थप्रश्नोत्तरत्वेनाऽखण्डार्थत्वासिद्धेः ।

स्वार्थो द्रव्यं तथा लिङ्गं संख्याकर्मादयोऽपि च ।
नामार्थपञ्चकं प्राहुराद्यं त्रिकमथापरे ॥

इति वैयाकरणमते, त्वदेकदेशिभिः प्राभाकरादिभिश्च शक्तिः स्वीकृता । जातिविशिष्टायां व्यक्तौ शक्तिरिति तार्किकमते च प्रातिपदिकार्थस्यैव विशिष्टत्वात् । जातावेव शक्तिर्व्यक्तिस्तु लक्ष्येति भट्टानां, तत्र मते च ब्रह्मप्रातिपदिकस्य यौगिकत्वेन तदर्थस्य विशिष्टत्वात् ।

ननु सत्यादीनां विशिष्टार्थपरत्वेऽपि लक्षणया अखण्डार्थनिष्ठत्वाऽभ्युपगमान्नोक्तदोषयोग इति चेन्न । लक्षणाया अनुपपत्तेः । तथाहि । कतमा वाऽत्र लक्षणा—जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था वेति विवेचनीयम् । नाद्या । गङ्गायां घोष इत्यत्र यथा शक्यत्यागेनाऽगङ्गारूपस्तीरादिर्वाक्यार्थस्तथा सत्यादिपदार्थत्यागेनाऽसत्यजडपरिच्छिन्नरूपो वाक्यार्थः स्यात् । नाऽपि द्वितीया । शक्यवद्विशिष्टार्थत्वापत्तेः । नाऽपि चरमा । विशेषणत्यागेन विशेष्यमात्राङ्गीकारे सत्यादीनां को वाऽर्थ, इत्यग्राप्यनिश्चयात् । सत्यत्वादीनां त्यागेऽपि सच्चिदपरिच्छिन्नं ब्रह्मेति त्रैविध्यस्यावश्यम्भावात् । शब्दैकांशार्थाङ्गीकारे सर्वांशवाचकतासम्बन्धाभावेऽपि तदंशमात्रवा-

चकृतामन्वन्वस्याप्यकामेनाऽपि त्वया स्वीकरणीयत्वात् । सर्वपदानामेकार्थपरत्वे पर्यायत्वापत्तेश्च । तथाऽभ्युपगमे चैकपदेनैवार्थसिद्धौ पदान्तरवैयर्थ्याच्च । ननु सत्यत्वादिविशिष्टशबलब्रह्मवाचिनां पदानां शुद्धे ब्रह्मणि लक्षणाङ्गीकारान्न पर्यायत्वापत्त्यादिदोषावकाश इति चेन्न । अनृताऽस्वप्रकाशपरिच्छिन्नरूपे ज्ञानत्वे सत्यत्वादेरयोगात् । योगे वा तस्यैवानृतादिव्यावृत्तत्वं स्यान्न तु शुद्धस्य । तस्मात् सत्यत्वादीनां शुद्धादन्यत्रासम्भवात् सत्यादिवाक्यस्य लक्षणया अखण्डार्थत्वे च शुद्धे तदसिद्धेः पर्यायत्वमसङ्गः पदान्तरवैयर्थ्यं दुर्वारमेव ॥

किञ्च सत्यादिपदलक्ष्यं वस्तु पदान्तरवाच्यं, न वा । आद्ये सविशेषत्वापत्तेः । द्वितीये लक्ष्यत्वासिद्धेः । लक्ष्यत्ववाच्यत्वयोः समानाधिकरणत्वनियमात् । यत्र लक्ष्यत्वं तत्र वाच्यत्वम् । गङ्गायां घोष इति तीरे यथोभयोः सत्त्वम् । यत्र वाच्यत्वं नास्ति तत्र लक्ष्यत्वमपि नास्ति, गगनकुसुमादौ यथोभयाभाव, इत्यन्वयव्यतिरेकाभ्यां लक्षणाया अप्रसिद्धत्वात् । ननु सत्यादयः शब्दा असत्यादिव्यावृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्तीतिचेन्न । ब्रह्मस्वरूपमात्रस्य श्रुतिं विनाऽपि प्रागेवाविद्याद्यधिष्ठानत्वादिना ज्ञातस्य पुनरपि ब्रह्मविदाप्नोति परमिति पूर्ववाक्येन च सत्यादिशब्दैः सत्यत्वादिविशिष्टतया व्यावृत्तिविशिष्टतया च ज्ञातत्वेन तज्ज्ञानस्य व्यावृत्तिज्ञानसाध्यत्वासंभवात् । व्यावृत्तिज्ञानस्यैव च धर्मिज्ञानसाध्यत्वेन वैपरीत्यापाताच्च । किञ्च, व्यावृत्तयः सत्या, मिथ्या वा । आद्ये व्यावृत्त्यानामपि सत्यत्वापत्तेः । व्यावहारिकव्यावृत्त्येभ्यः पारमार्थिकव्यावृत्त्यसिद्धेः । इतरव्यावृत्तिवैशिष्ट्यापत्त्याऽद्वैतभङ्गात्, सविशेषत्वापत्तेश्च । द्वितीये चाऽत्यन्ततुच्छस्य शशशृङ्गादेरिव व्यावृत्तित्वासंभवात् । तुच्छस्य यदि स्वयं किञ्चिदपि पदार्थत्वं

स्यात् तर्हि तथात्वमपि स्यात्। तत्तु नास्त्येव। नच व्यावृत्तिः स्वरूपमेवेति वाच्यम्। स्वरूपस्य लोके शास्त्रे चात्यन्ताऽप्रसिद्धत्वेन तत्ताऽसंभवात्। आत्माश्रयदोषप्रसङ्गाच्च। व्यावृत्त्यभ्युपगमस्यैव वैयर्थ्यात्। किञ्च, स्वरूपस्य तथात्वे सविशेषत्वापत्तेर्दुर्वारत्वात्। अभेदे सति भेदनिर्वाहकत्वं विशेषणत्वमिति लक्षणसमन्वयात्। किञ्च व्यावर्त्यमसदादिशब्दवाच्यं सद्विलक्षणमसद्विलक्षणं वा। आद्ये सद्विलक्षणस्य वस्तुत्वेऽद्वैतभङ्गात्। अवस्तुत्वे व्यावृत्तिवैयर्थ्यात्। द्वितीये ब्रह्मण्यतिप्रसङ्गात्। व्यावृत्तव्यावर्त्ययोरैक्यापत्तेः। किञ्च, व्यावृत्तयो ब्रह्मणो भिन्ना अभिन्ना वा। आद्ये द्वैतापत्तेः। द्वितीये पूर्वोक्ताऽसंभवात्माश्रयादिदोषामसक्तेः। किञ्च, व्यावृत्तिर्ब्रह्मणि कल्पिता? यथार्था वा?। नाद्यः। कल्पितस्य व्यावृत्तित्वासंभवात्। अन्यथा ब्रह्महत्यादौ कल्पितेनाऽपि धर्मत्वेनाऽधर्मव्यावर्तकत्वापत्तेः। शूद्रादौ कल्पितेनापि ब्राह्मणत्वेन शूद्रत्वादिव्यावृत्तिप्रसङ्गाच्च। शूद्रे यज्ञाद्यधिकारापत्तिः। ब्राह्मणे च शूद्रत्वेन तद्धनने ब्रह्महत्याद्ययोगश्च स्यात्। द्वितीये अद्वैतसिद्धान्तभङ्गादित्यलं विस्तरेण॥

किञ्च सत्यादेर्विशेष्यमात्रपरत्वे वाक्यस्योद्देश्यविधेयविभागाभावेन यत्किञ्चिदित्येव बोधनाद् ब्रह्मबुभुत्सानिरस्त्यसंभवात् सामान्यस्य पूर्वमेव प्राप्तत्वाद् विशेषानङ्गीकाराच्च। तस्मात् सत्यादिवाक्यानामखण्डार्थनिष्ठत्वं भ्रान्तिकल्पितमेवेति सिद्धम्॥

तत्त्वमस्यादिवाक्यानामखण्डार्थनिष्ठत्वानुमानस्यापि आभासमात्रत्वमेव। उक्ताप्रसिद्धविशेषणत्वबाधमतिरोधामयोजकमतिकृलतर्कपराहत्यादिदोषयोगात्। ननु, सोऽयमित्यत्र किं वा तद्देशकालादिविशिष्टस्यैतद्देशकालादिवैशिष्ट्यं बोध्यते, एतद्देशकालादिविशिष्टस्य तद्देशकालादिवैशिष्ट्यं विशिष्टयैक्यं वा। नाद्यः।

एतत्कालादिविशिष्टस्य प्रत्यक्षत्वेनानुपदेश्यत्वात्। तत्कालादेरपि इदानीं सत्त्वापत्तेश्च। न द्वितीयः। एतत्कालादेस्तदानीं सत्त्वापातात्। नान्त्यः। विशेषणभेदे विशिष्टभेदायोगात्। विशिष्टस्य विशेषणविशेष्यसंबन्धरूपत्वे विशेषणभेदेन पदार्थान्तरत्वे विशेष्यभेदेन विशेषणभेदेनाऽपि तद्भेद आवश्यकः स्यात्। तस्मात्, सोऽयमिति वाक्यं लक्षणयाऽखण्डार्थपरं, तथा तत्त्वमस्यादिवाक्येप्यनुपपत्तिमनुसंधाय लक्षणयाऽखण्डार्थपरत्वं बोध्यमिति चेन्न। अस्तु तावदनुभवकाल एव तत्ता, तथापि बाल्ययौवनयोरिव श्यामरक्तरूपयोरिव तदेतत्कालरूपयोस्तत्तेदंतयोः परस्परमनन्वयेऽपि एकविशेषणविशिष्टे इतरस्य व्यावृत्तावपि एकविशेष्यवर्तित्वं तावदस्ति। अन्यथा कालद्वयासंबन्धितया पदार्थस्य क्षणिकत्वापत्तेर्देशद्वयसंबन्धस्य कालभेदेनानुभवात्। सोऽयमिति पदद्वयं च तत्तेदंतयोरेकवर्तित्वबोधने शक्तम्। समानाधिकरणत्वात्। भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्। नच विशेष्यस्य तत्तेदंतान्वयपरत्वेऽप्यस्य वाक्यस्य न विशिष्टान्वयपरत्वमित्येतावता अखण्डार्थत्वमिति वाच्यम्। नीलमुत्पलमित्यादेरप्यखण्डार्थत्वापातात्॥

एवञ्च—

कालद्वयेन योगस्य क्रमेण स्थायिवस्तुनि।
नैल्यरक्तत्ववत् सत्त्वात् तदुक्तौ का विरुद्धता॥
विशेष्यधर्मसंसर्गपरश्चापि विशेषिते।
तत्परत्वेऽप्यखण्डार्थं स्याच्चेत् सर्वं तथा भवेदिति वाक्यात्॥

एतेन विशेष्यस्य कालद्वयसम्बन्धेनैव क्षणिकत्वानापत्तेर्विशिष्टस्य तत्सम्बन्धो नापेक्षित इति निरस्तम्। मयाऽपि विशेष्य एव कालद्वयसम्बन्धोक्तेः। नच तत्ताया अतीतत्वमात्रेण तत्पद-

स्य लक्षणा। घटो नष्ट इत्यादावित्रातीतत्तारूपस्वार्थत्यागात्। अन्यथा तत्तादेरतात्पर्यविषयत्वेन सोऽयमित्यनेन देवदत्तस्य कालद्वयसम्बन्धो न सिद्ध्येत्। तस्मादेकविशेषणविशिष्टे विशेषणान्तराऽन्वयावबोधकमपीदं वाक्यं विशेष्यस्य क्रमिकधर्मद्वयान्वयधीपरत्वात् सखण्डार्थपरमेव। किञ्च, त्वदुपन्यस्ते पक्षत्रयेऽपि न दोषः। तत्तादेरतीतत्वेऽपि पदेऽन्विततया ज्ञातत्वमेव। तात्पर्यविषयभूतेतरान्वयधीत्वस्य तत्तारूपत्वस्य विशेषणत्वस्य सम्भवात्। नच विधेयान्वय्येव विशेषणम्। शब्दो नित्य इत्यादौ शब्दत्वादावव्याप्तेः। नाऽपि विधेयान्वयकाले सदेव विशेषणम्। दण्डी भविष्यति, दण्डी नास्तीत्यादावव्याप्तेः। गृहे नष्टे काकादावतिव्याप्तेश्च। तस्मात् पक्षत्रयेऽपि न दोषः। किञ्च, नानेन वाक्येन देवदत्तस्वरूपमात्रं बोध्यते। तस्य प्रत्यक्षत्वात्। किन्तु ऐक्यादिविशेषितमेव। अपि च, सोऽयं देवदत्त इत्यत्र प्रत्यभिज्ञा तावन्नाखण्डार्थविषया। तत्र शब्दवृत्तेर्लक्षणाया अयोगात्। तत्तेदंतादेरभेदस्य च प्रकारस्योल्लेखानुभवाच्च। तदनुल्लेखे प्रत्यभिज्ञाया अभिज्ञातो विशेषो न स्यात्। तथाच शाब्दप्रत्यभिज्ञाया अपि स्वप्रत्यभिज्ञावगतस्यैवापरं प्रति बोधनात्। तस्माद् दुष्परिहरं साध्यवैकल्यम्। किञ्च, तत्त्वमसीत्यस्याभेदविशिष्टे, तदुपलक्षिते वा तात्पर्यं चेदुक्तरीत्याऽभेदरूपसंसर्गबोधनेन सखण्डार्थत्वमेव। सार्वज्ञादेः प्रकारत्वेनानुप्रवेशात्। चैतन्यमात्रपरत्वं चेत् तस्य स्वप्रकाशस्य नित्यसिद्धतयोपदेशवैयर्थ्यम्। वाक्यात् प्राक् चैतन्याऽज्ञाने उक्तरीत्या बुभुत्सैव न स्यात्। सामान्ये ज्ञाते विशेषजिज्ञासेति न्यायात्। तस्या धर्मिज्ञानसाध्यत्वात्। भेदभ्रमश्च न स्यात्। अधिष्ठानज्ञानाभावात्। महावाक्येन भेदभ्रान्तिनिवृत्तिश्च न स्यात्। भ्रमकालज्ञाताधिष्ठानादधिकाबोधनात्। तावन्मात्रस्याऽज्ञा-

न्तरवाक्येनैव लक्षणया शुद्धचैतन्यबोधनात् ।

किञ्च, महावाक्ये पदानेकपदवैयर्थ्यं च स्यात् । एकेनैव पदेन लक्षणया बोधनात् ।

किञ्च, तत्त्वमस्यादिवाक्यस्य त्वदभिमतभागत्यागलक्षणयाऽपि सर्वथाऽखण्डार्थनिष्ठत्वं दुर्निरूप्यमेव । सोऽयं देवदत्त इत्यादिदृष्टान्तवैषम्यात् । तथाहि । सोऽयं देवदत्त इति दृष्टान्ते तत्तेदन्तापदार्थयोर्देशकालसम्बन्धयोरितरेतरविरुद्धयोरनित्यत्वेन हेयत्वं, पिण्डमात्रस्य च शक्यैकदेशस्य रूपाद्यनेकविशेषवत्त्वात्, पिण्डशब्दवाच्यत्वात्, प्रत्यक्षप्रमाणविषयत्वाच्चोपादेयत्वम् । हेयोपादेययोरुभयभागयोः कथञ्चित् सम्भवाद् भागत्यागलक्षणा कल्प्यते । प्रकृते तु धर्मधर्मिणोः स्वाभाविकसम्बन्धस्य शास्त्रसिद्धत्वात् । स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः । अविनाशी वाऽरे आत्माऽनुच्छित्तिधर्मा, न हि द्रष्टुर्दृष्टेर्विपरिलोपोऽविनाशित्वादित्यादिश्रुतेश्च कथं हेयत्वम् । तथैव लक्ष्यभागस्य च सर्वविशेषशून्यत्वादवाच्यत्वात् प्रमाणविरहत्वाच्च कथमुपादेयत्वम् । एवं हेयोपादेययोरुभयोरपि भागयोरसिद्धत्वाल्लक्षणायाः सर्वथाऽप्यनुपपत्तेरेव तत्त्वमस्यादिवाक्यं, न लक्षणयाऽखण्डार्थपरम् । वाक्यत्वात् । ज्योतिष्टोमादिवाक्यवत् । अखण्डार्थं, न लक्षणावृत्तिविषयम् । अवाच्यत्वात् । यन्नैवं तन्नैवम् । सोऽयं देवदत्त इत्यादिवाक्यवदित्याद्यनुमानाद् दृष्टान्तवैषम्यसिद्धिः । किञ्च, न ह्यत्यन्तादरेण यावदात्मस्थचिद्धर्मान् स्वाभाविकत्वेन स्वयमेव प्रतिपाद्य भूयस्तन्निषेद्धुं क्षमा सर्वज्ञा भगवती श्रुतिः । अन्यथोन्मत्तजल्पितमेव श्रुतिवचनम् । तथात्वे श्रुतेरनाप्तत्वापत्तेः । भगवद्धर्माणां मोक्षहेतुत्वापरिच्छिन्नत्वप्रतिपादनाच्चाऽपि निषेधानर्हत्वम् । तथाचामनन्ति तैत्तिरीयाः । एषा आनन्दस्य मीमांसा भवतीत्युपक्रम्य

मनुष्यानन्दप्रभृति चतुर्मुखानन्दावसानमानन्दं प्रपञ्च्य तस्य प-रिच्छिन्नत्वं परिच्छिन्नाश्रयत्वं च निर्णीय तदुत्तरं, यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह * आनन्दं ब्रह्मणो विद्वान्न बिभे-ति कुतश्चनेति मन्त्रेण ब्रह्मण आनन्दलक्षणैकगुणस्यापरिच्छिन्न-त्वं, स्वरूपवद्वेदनाविषयत्वं, तदुपासकस्य विद्वत्त्वं, सर्वभयनिवृत्ति-रूपमोक्षासाधारणसाधनत्वं च प्रतिपादितं तथाभूतस्याऽपि गुण-स्य मिथ्यात्वयोगे मोक्षविधायकशास्त्रस्य बाधो नालोच्यते देवा-नाम्प्रियैः पण्डितम्मन्यैः । न हि स्वाभाविकधर्माः केनाप्युन्मत्तेन विवेकिना तर्कबलान्निषेद्धुं शक्याः । अग्निजलादीनामौष्ण्यशैत्या-दिवत् । नैषा मतिस्तर्केणापनेया, तर्काप्रतिष्ठानात् । अचिन्त्याः खलु ये भावा न ताँस्तर्केण योजयेदित्यादिश्रुतिस्मृतिसूत्रेभ्यः ॥

ननु ब्रह्मधर्माणां श्रुतिसिद्धत्वेऽपि, केवलो निर्गुणश्चेति नि-षेधश्रुतिप्राबल्याद् बाध इतिचेन्न । पूर्वमेव मयुक्तत्वात् । किञ्च, तत्त्वमस्यादिवाक्यलक्ष्यं वस्तु पदान्तरवाच्यं, न वेति । नाद्यः । द्वैतापत्तेः । अवाच्यत्वोक्तिप्रतिज्ञाहानेः । न द्वितीयः । अप्रमाणक-त्वेन तुच्छत्वात् । तत्त्वमस्यादिवाक्यलक्ष्यं, मिथ्या । अवाच्यत्वात् । शशशृङ्गवत् । यन्नैवं तन्नैवम् । सर्वज्ञब्रह्मवदित्यनुमानात् । नच त-स्याऽपि लक्ष्यत्वादिति वाच्यम् । अनवस्थापत्तेः । किञ्च, सम्ब-न्धाभावादपि लक्षणा दुर्निरूप्या । शक्यसम्बन्धो लक्षणेति सर्व-वादिसंमतत्वात् । अत्र को वा सम्बन्ध इति वक्तव्यम् । नच यद्यपि संयोगसम्बन्धादेर्निर्विशेषे ब्रह्मण्यनुपपत्तेरितरया द्वैताप-त्त्या सिद्धान्तभङ्गप्रसङ्गात्, तथाऽपि शाखाचन्द्रन्यायेन कल्पित-सम्बन्धाभ्युपगमाल्लक्षणासिद्धिरिति वाच्यम् । दृष्टान्तवैषम्यात् । शाखाचन्द्रसम्बन्धस्य कल्पितत्वोक्तिः प्रमाणशून्या । बालभाषितत्वा-त् । चन्द्रशाखयोः सम्बन्धिनोः सविशेषत्वात् प्रत्यक्षप्रमाणसि-

द्दृत्वाच्च तत्सम्बन्धस्यापि चन्द्रकरनिकरैः शाखया सह प्रत्यक्षेणैव सिद्ध्या तत्र कल्पितत्वभावना ह्यनुन्मत्तः को वा कुर्यात् । दार्ष्टान्ते तु सम्बन्धिनोः सर्वप्रमाणाविषयतया तत्र सम्बन्धकल्पनायाः शशशृङ्गायमाणत्वाद् दृष्टान्तवैषम्यासिद्ध्या लक्षणानुपपत्तेस्तादवस्थ्यम् । तत्त्वमस्यादिवाक्यं, न परोक्तलक्षणावृत्तिमत् । सम्बन्धानुपपत्तेः । शशशृङ्गस्तीक्ष्णाग्र इत्यादिवाक्यवदित्यलं कुतर्कनिरासैः ॥

इतरे तु, एकमेव स्वाभाविकानन्तसार्वज्ञ्यादिधर्माश्रयं ब्रह्म ह्यनादिनिरुपाधिना जीवभावमापद्यते । तत्त्वमस्यादिनोपदिष्टाभेदज्ञानाच्च मुच्यते । तथाचौपाधिकभेदनिवृत्तिफलकमभेदविषयज्ञानं वेदान्तैरुपदिश्यते । औपाधिको भेदो, वस्तुतोऽभेद इति वेदान्तशास्त्रार्थ इत्याहुः।तत्तुच्छम् । असम्भवेन विकल्पासहत्वात्।तथाहि किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीव, उताच्छिन्न एवाणुरूपोपाधिसंवलितो ब्रह्मप्रदेशविशेष, उतोपाधिसंयुक्तं ब्रह्मस्वरूपमुतोपाधिसंयुक्तचेतनान्तरम्, अथोपाधिरेवेति विवेचनीयम् । नाद्यः । ब्रह्मणोऽच्छेद्यत्वात् ।अन्यथा निरवयवश्रुतिव्याकोपात्। जीवस्यादिमत्त्वापत्तेः।तदजत्वशास्त्रबाधाच्च।एकस्य द्वैधीकरणं हि छेदनम् । तथाच जीवानां तत्राप्यसंख्येयत्वाभ्युपगमेनासंख्येयखण्डं ब्रह्मैव स्यात् । नाऽपि द्वितीयः । ब्रह्मण एव प्रदेशविशेषे उपाधिसंबन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः । किञ्चोपाधौ गच्छति सति उपाधिना स्वावच्छिन्नब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ च स्याताम् । आकर्षणे चाऽच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात् । निरवयवस्य ब्रह्मण आकर्षणाऽसंभव इति तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात् । अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां जी-

वानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसंधानं स्यात् । प्रदेशभेद दप्रतिसंधाने चैकस्यापि स्वोपाधौ गच्छति सति, स एवाऽहमिमं प्रतिसंधानं न स्यात् । नाऽपि तृतीयः । ब्रह्मस्वरूपस्यैवोपाधिसंबन्धेन जीवत्वापातात् । तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात् सर्वेषु च देहेषु एक एव जीवः स्यात् । नाऽपि चतुर्थः । ब्रह्मणोऽन्य एव जीव इति जीवगतभेदस्यौपाधिकत्वं परित्यक्तं स्यात् । नाऽपि चरमः । चार्वाकपक्षाभ्युपगमप्रसङ्गात् । किञ्चोपाधिना ब्रह्मणः सार्वज्ञादिधर्मा आच्छादिताः स्वरूपं वा । नाद्यः असम्भवात् । तथाहि । सार्वज्ञादयः स्वाभाविका धर्मा, औपाधिका वा । औपाधिकत्वे उपाधिः सत्त्वमसत्त्वं वा । सत्त्वेऽपि ब्रह्मभिन्नत्वमभिन्नत्वं वा । भिन्नत्वेऽपि स्वप्रयुक्तत्वमन्यप्रयुक्तत्वं, ब्रह्मप्रयुक्तत्वं वेति । नाद्यः । आत्माश्रयात् । नाऽपि ब्रह्मप्रयुक्तत्वम् । अन्योन्याश्रयात् । नाप्यऽन्यप्रयुक्तत्वम् । अनवस्थानात् । अभिन्नत्वे चौपाधिकभेदसिद्धान्तभङ्गात् । उपाधिर्ब्रह्मेति सामानाधिकरण्यघटितप्रतीत्यापत्तेश्च । नाप्यसत्यः । परमतप्रवेशापत्तेरनङ्गीकाराच्च । स्वाभाविकत्वपक्षे तेषां स्वरूपभिन्नत्वमभिन्नत्वं वा, भिन्नाऽभिन्नत्वं वा । अत्यन्तभेदे शास्त्रविरोधः । एवं गुणान् पृथक् पश्यन्नित्यादिनिषेधश्रवणात् । नाप्यभिन्नत्वम् । ब्रह्मणा तेषां सामानाधिकरण्यापत्त्या, आनन्दं ब्रह्मणो विद्वानिति व्यधिकरणश्रुतिव्याकोपात् । नाऽपि चरमः । स्वाभाविकभिन्नाभिन्नानामावरणासम्भवात् । अस्मन्मतप्रवेशाच्च । अन्यथा स्वरूपस्यावरणापत्तेः । स्वरूपावरणाभ्युपगमपक्षे तु सार्वज्ञादिहानेः । किञ्चोपाधेरपि सत्त्वानित्यत्वाभ्यामनिवृत्तिप्रसङ्गात् । किञ्चोपाधिः सहेतुको, निर्हेतुको वा । नाद्यः । अनवस्थानात् । न द्वितीयः । मुक्तस्यापि पुनर्बन्धप्रसङ्गात् । किञ्च,

वन्ध्याभ्युपगमे अनिर्मोक्षमसङ्गः । जगदान्ध्यापत्तेश्च । द्वितीये तद्गुणानां परिच्छिन्नत्वेनाऽकिञ्चित्करत्वापातात् । तस्माद् दुरुपपादोऽयमौपाधिकभेदवाद इति संक्षेपः ॥

अन्ये तु—सर्वशास्त्रस्य शुद्धभेदपरत्वमङ्गीकुर्वाणास्तत्त्वमस्यादिगतसमानाधिकरणानां वैयधिकरण्यं लक्षणया प्रतिपादयन्ति । तदसमीचीनम् । सर्ववेदान्तव्याघातात् । सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिनिन्दाश्रवणाच्च । तार्किकादिमतप्रवेशाच्च । अभेदश्रुतीनामर्थवादत्वं मीमांसकैरपि स्वीकार्यत्वात् । तथात्वे च सर्वं वेदान्तशास्त्रं दत्ततिलाञ्जलि स्यात् । किञ्चाऽभेदश्रुतीनां स्वार्थत्यागे भेदश्रुतीनां चापरेण स्वार्थत्यागात् सर्वस्याऽपि वेदस्य नाशप्रसङ्गात् । मायावादसाम्यापत्तेरित्यलं विस्तरेण ॥

अपरे तु—चेतनाचेतनं वस्तुजातं परं ब्रह्मविशेषणभूतं तदुभयविशिष्टं सार्वज्ञाद्यनन्ताचिन्त्यापरिमितकल्याणगुणगणाकरं जगदुदयविलयाद्यभिन्ननिमित्तोपादानकारणं ब्रह्म वेदान्तशास्त्रस्य विषयभूतमित्याहुः । तदशोभनम् । चेतनादेर्विशेषणत्वासिद्धेः । तथाहि । व्यावर्त्तकत्वं तावद्विशेषणत्वम् । यथा रामो दाशरथिरित्यादिप्रयोगे रामशब्दो भार्गवबलरामरघुनाथेषु त्रिष्वपि शक्तस्तन्मात्रोच्चारणे त्रयाणामप्युपस्थितिः समाना । दाशरथीति शब्देन द्वाभ्यां व्यावृत्तो रघुनाथपरत्वेन संगृह्यते । तथाचात्र भार्गवबलरामौ व्यावर्त्यौ, दाशरथिशब्दो विशेषणभूतो व्यावर्त्तकः, श्रीरघुनाथश्च तेन व्यावृत्त इति । तथात्वे च व्यावर्त्तकस्य व्यावर्त्त्यव्यावृत्तसद्भावात् साफल्यमिति सर्वविदुषां प्रक्रिया । प्रकृते तु चेतनाचेतनात्मकविशेषणरूपयोर्व्यावर्त्तकयोः सतोः, व्यावृत्तरूपे विशेष्यत्वेनाभ्युपगते ब्रह्मणि च सत्यपि व्यावर्त्यस्यान्यस्याभावाद् विशेषणोक्तेर्निष्फलत्वमेवेति । चेतनाचेतनब्रह्मेत्येतेभ्यो भन्-

तामपि तत्त्वान्तरानभ्युपगमात् । व्यावृत्तव्यावर्त्यसापेक्षत्वनियमाद्व्यावर्त्तकस्य व्यावर्त्याभावे सति व्यावर्त्तकासिद्धौ कुतो विशिष्टस्य सम्भावनाऽपीति ॥

नाऽपि विशेष्यरञ्जकविशेषज्ञानहेतुत्वं विशेषणत्वम् ।
स्वरूपसत्त्वमात्रेण न हि किञ्चिद्विशेषणम् ।
स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणमितिलक्षणवचनात् ।
यथा—
अतसीपुष्पसङ्काशंपीतवाससमच्युतम् ।

ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयमित्यत्र अतसीपुष्पविशेषणशब्दजन्यज्ञानेन गोविन्दपदार्थो रज्यते, ध्यातृबुद्धावुपस्थाप्यते । प्रकृते तथात्वाभावाच्चेतनाचेतनयोरेकतरस्य ज्ञानेन विशेष्यभूतस्य ब्रह्मणो रञ्जकत्वाभावात् । उपस्थापयितृत्वस्यासम्भव एव । अन्यथाऽहमर्थतया ज्ञातजीवरूपचेतनस्य देहरूपेण ज्ञाताऽचेतनस्य च पुंसो ब्रह्मज्ञानोपस्थितिप्रसङ्गः। तस्मादापातरमणीयमेवेदं विशिष्टवादिमतमिति भावः ॥

ननु स्वाभाविकभेदाभेदवादोऽपि दोषबाहुल्यादनुपपन्न एव । तथाहि। ईश्वरः स्वरूपेणैव देवासुरनरतिर्यगादिभेदेनावस्थित इति तदात्मकत्ववर्णनं क्रियते । तथा सत्येकमृत्पिण्डारब्धघटशरावादिगताम्युदकाहरणादिसर्वकार्य्याणि यथा तस्यैव भवन्ति एवं सर्वजीवगतसुखदुःखादिकं सर्वमीश्वरगतमेव स्यात् । घटशरावादिसंस्थानाऽनुपयुक्तमृद्द्रव्यं यथा कार्यान्तराऽनन्वितम् । एवमेव सुरासुरपशुमनुजादिजीवत्वानुपयुक्तेश्वरांशः सार्वज्ञ्यसत्यसंकल्पत्वादिगुणाकर इति । नच स एवेश्वर एकांशेन कल्याणगुणाकरः, स एवान्येनांशेन हेयगुणाकर इति युक्तम् । द्वयोरंशयोरीश्वरत्वाविशेषात् कस्तेन लाभः । एकस्यैवैकांशेन नित्यदुःखित्वम्, अंशान्तरेण सुखि-

त्वमपि नेश्वरत्वाय कल्पते । यथा देवदत्तस्यैकस्मिन् हस्ते चन्दनागरुपङ्कलेपकेयूराद्यलङ्कारः, एकस्मिन् हस्ते मुद्गरादिपातो ज्वालाप्रवेशश्च, तद्वदीश्वरस्यैव स्यादिति ब्रह्माज्ञानवादादपि महापापीयानयं पक्षः । अपरिमितदुःखस्य पारमार्थिकत्वाऽभ्युपगमात् । संसारिणामनन्तत्वेन दुस्तरत्वादिति चेन्न । महाभ्रान्तिपरिकल्पितत्वादस्या आशङ्कायाः । स्वरूपभेदस्य स्वाभाविकत्वाङ्गीकारेणोक्तदोषगन्धसंस्पृष्टवातलेशस्पर्शाभावात् । यद्यस्माभिरभेदः स्वरूपेणाङ्गीकृतः स्यात् तर्हि दोषकल्पनावकाशः । स तु नास्त्येवेत्यर्थः । किञ्च, अहो मनीषा पूर्वपक्षारोपकाणां, यस्मात् स्वमयुक्तस्य वज्रस्य स्वासिद्धान्तपर्वते पातो नालोचितः । श्रीमद्भिः सर्वज्ञत्वादिकल्याणगुणाढ्ये श्रीवासुदेवे चेतनाचेतनयोर्वैशिष्ट्यस्वीकारात् । तथाहि । सार्वज्ञ्यादिविशिष्टस्य चेतनाचेतनयोर्विशेषणत्वमभिमतं, केवलस्य वा । न द्वितीयः । निर्विशेषत्वानभ्युपगमात् । इतरथा सार्वज्ञ्यादीनामव्याप्यवृत्तित्वापत्तेः । परमतप्रवेशाच्च । किञ्च, सार्वज्ञ्यादिविशिष्टस्य भिन्नत्वे चेतनाचेतनविशिष्टस्य च भिन्नत्वे, विशिष्टद्वयसिद्ध्या विशिष्टाद्वैताऽभ्युपगमभङ्गात् । चेतनादिविशिष्टप्रदेशस्य सार्वज्ञ्यादिहीनतापत्तेश्च । तथात्वे च तवोक्तिवज्रपातात् । तथाहि । यथा कस्यचिदेकदेशे चन्दनाऽगरुलेपनं देशान्तरे क्षारकर्दमादिलेपनं तत्परिहासार्थं बालिशैर्लीलया क्रियते तथा प्रकृतेऽपि परमेश्वरस्यैकदेशे मङ्गलगुणगणादिविविधभूषणयोगो, देशान्तरे सर्वदोषसम्पन्नजीवादियोगोऽतो महानीभत्सित एव श्रीमद्भिः सिद्धान्तोऽङ्गीकृतः स्यात् । नाद्यः । विशिष्टवैशिष्ट्यापत्त्या विशिष्टसिद्धान्तभङ्गात् ॥

किञ्च सार्वज्ञ्यादिसमस्तकल्याणगुणाढ्यस्यैव यदि चेतनादिवैशिष्ट्याऽभ्युपगमोऽभिप्रेतस्तर्हि सर्वरत्नभूषणाऽऽयुधादिदिव्यालङ्कारसम्पन्न-

स्य पुंसोऽतिजीर्णबीभत्सवस्त्रादिवेष्टनवत् सर्वदिव्यगुणगणाद्यलङ्कृतस्य भगवतः परब्रह्मण उपर्यपरिमितदुःखाद्यवच्छिन्नजीवादिवैशिष्ट्यमभ्युपगतं स्यात् । तस्मान्मायावादादपि महादुष्टोऽयं पक्षः । तत्र सर्वज्ञत्वादिविशिष्टस्य भेदाङ्गीकारात् । अत्र तु उत्तमगुणभूषणस्यैव पाप्मावच्छिन्नवैशिष्ट्याङ्गीकारात् । किञ्च, तत्र कल्पितत्वाभ्युपगमात् कदाचिन्निवृत्तिसम्भावनाऽपि, अत्र तु कदाचिदपि कथमपि निवृत्तिमनोरथस्याप्यसम्भवः । यावदात्मवृत्तित्वाङ्गीकारेण वज्रलेपायितत्वान्महद्दुष्टत्वादुपेक्षणीय एव विद्वद्भिरिति सङ्क्षेपः ॥

तथा नास्मत्पक्षे त्वदुक्तदोषकल्पनावकाशः । तथाहि । न तावत् सिद्धान्ते सौभरिभेदवत् स्वावतारभेदवद् वा परमेश्वरस्य जीवादिरूपो भेदो, येनोक्तदोषः कल्प्येत । अपि तु स्वरूपेणैव भेदः । तदात्मकत्वतदधीनसत्ताकत्वादिभिश्च अपृथक्सिद्धत्वादभेद इत्यभिप्रायवानाह ॥ ब्रह्मणो भवतः इति ॥ भवतो ब्रह्मणः, अखिलमिदं चेतनाचेतनरूपं विश्वं जायते इति सदेव नामरूपव्यक्तिं भजते । नामरूपे व्याकरवाणीति, नामरूपाभ्यां व्याक्रियते इत्यादिश्रुतेः । सृष्टेः प्रागपि कार्यस्य त्वयि बीजेऽङ्कुरादेरिव सद्भावात् । सत्त्वाच्चावरस्येति न्यायात् । एतेनासत्कार्यवादिनो वैशेषिकादयो निरस्ताः । असत उत्पत्तेरसम्भवात् । असतः सम्भवः कुत इति स्मृतेः । अन्यथा तिलेभ्य इव सिकताभ्योऽपि तैलमुत्पद्येत । अग्नेरपि अङ्कुरं, जलादेरपि दाहः । तस्मादज्ञानविजृम्भितोऽयमसत्कार्यवादो विद्वद्भिरुपेक्षणीयः । एतेन मन्त्रे भेदस्य सत्त्वोक्त्या स्वाभाविकत्वं, सामानाधिकरण्योक्त्या चाऽभेदस्यापि तथात्वम् । तथाच स्वाभाविकभेदाभेदाश्रयं ब्रह्म वेदान्तविषयभूतमिति सिद्धम् ॥ एतदुक्तं भवति ॥ निखिलानि तावदौपनिषदानि वाक्यानि ।

तत्र, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, एको ह वै नारायण आसीत्, तत्त्वमसि, अयमात्मा ब्रह्मेत्यादीनि अभेदवाक्यानि । नित्योनित्यानां चेतनश्चेतनानामेको बहूनां, पृथगात्मानं प्रेरितारं च मत्वा, भोक्ता भोग्यं प्रेरितारं च मत्वा, प्रधानक्षेत्रज्ञपतिः, अक्षरात् परतः परः, भेदव्यपदेशाच्चान्यः, अधिकं तु भेदनिर्देशादित्यादीनि भेदवाक्यानि । तं सर्वं परादाद्योऽन्यत्रात्मनः सर्वं वेद इत्यादीनि भेदनिषेधपराणि । अस्थूलमनण्वित्यादीनि च स्थौल्यादिनिषेधविषयकाणि च दृश्यन्ते । न तेषामितरेतरबाध्यबाधकभावो युक्तः । तुल्यबलत्वात् । ननु कथं तुल्यबलत्वम् । नच श्रौतत्वहेतुरत्र साधक इति वाच्यम् । अर्थवादानामपि स्वार्थे प्रामाण्यापत्तेः । श्रौतत्वाविशेषात् । तस्माद्भेदवाक्यानां प्रत्यक्षमानसिद्धविषयकत्वेनानुवादपरत्वात् । अग्निर्हिमस्य भेषजमित्यादिवाक्यवत् स्वार्थहीनत्वेन श्रुतिनिन्दितभेदविषयकत्वाच्च दुर्बलत्वम् । अभेदवाक्यानां तु प्रमाणान्तराप्राप्ततया तादृशभेदविषयकत्वाद्, उपक्रमादिषड्लिङ्गोपेतत्वाच्च प्राबल्यमितिचेन्न । असंभवात् । तथाहि । न तावद्भेदवाक्यानामनुवादपरत्वम् । जीवेश्वरभेदस्य प्रत्यक्षाविषयत्वात् । जीवेशयोः प्रतियोग्यनुयोगिनोः प्रत्यक्षागोचरतया तद्भेदस्यापि प्रत्यक्षत्वाङ्गीकारो बालिशमात्र एव । भेदप्रत्यक्षस्य प्रतियोग्यनुभूतिपूर्वकत्वनियमात् । तस्मात् स्वरूपासिद्धोऽयमनुवादपरत्वमिति न प्रामाण्यपदारोहणार्हः । नाऽपि श्रुतिनिन्दितभेदविषयकत्वरूपस्यापि द्वितीयस्य हेतोः प्रामाण्यार्हत्वं निपुणैरङ्गीक्रियते । निन्दायाः पृथक्स्थितिप्रवृत्तियोग्यरूपभेदविषयकत्वेन नैराकाङ्क्ष्याद् आभासत्वसाम्ययेन । यदुक्तम् । अभेदवाक्यानामुक्तहेतुभ्यां प्राबल्यम् । तदप्यापातरमणीयम् । तयोरपि हेत्वाभासत्वात् । प्रथमः सिद्धान्ते प्रत्यक्षप्रमाणस्य सन्मात्रानुभू-

तिग्राहित्वेनाभिन्ननिर्विशेषसन्मात्रानुभूतेः प्रत्यक्षप्राप्तत्वाद् अभेदवाक्यानां तदनुवादपरत्वस्य वक्तुं सुशकत्वात् । अभेदवाक्यानि न स्वार्थपराणि । प्रत्यक्षप्राप्ताभिन्नानुभूतिपरत्वेनानुवादरूपत्वात् । अग्निर्हिमस्य भेषजमित्यादिवाक्यवदित्यनुमानरुद्धोऽयं हेतुरिति । नाऽपि द्वितीयो हेतुः प्रामाण्याऽर्हः । आभासत्वसाम्यात् । भेदवाक्यानामपि षड्लिङ्गोपेतत्वेनाव्यभिचारित्वात् । ननु कोऽयं भेदः स्वरूपं वा, धर्मो वा । नाद्यः । स्वरूपत्वाऽविशेषेण भेदस्यापि स्वरूपवत् प्रतियोगिनिरपेक्षव्यवहारापत्तेः । भिन्नो घट इत्यादीनां पर्यायत्वं च स्यात् । हस्तः कर इत्यादिवत् । नाऽपि धर्म इति वक्तुं शक्यम् । तथात्वे च स्वरूपाद्भेदोऽप्यवश्यं भावी । अन्यथा स्वरूपमेव स्यात् । भेदे च तस्यापि भेदस्तद्धर्मस्यापि, इत्यनवस्थाप्रसङ्गः । धर्मविशिष्टवस्तुग्रहणे भेदग्रहः । भेदग्रहणे च धर्मविशिष्टवस्तुग्रह इत्यन्योन्याश्रयापत्तेश्च । तस्माद्भेदस्यैवासिद्धेः कुतस्तद्विषयकवाक्यानां प्राबल्यस्य मनोरथत्वमिति चेन्न । उक्तविकल्पाऽसहत्वस्य तव पक्षेऽपि साम्यात् । तथाहि । अभेदः स्वरूपं वा, धर्मो वा । नाद्यः । स्वरूपवदभेदस्यापि ग्रहापत्त्या, अयं घटः, अयं पट इत्यादिप्रतीतिविषयाणां घटादीनामलीकत्वापत्तेः । सर्वप्रत्यक्षाणामपि सन्मात्रनिर्विशेषाऽनुभूतिग्राहकत्वाविशेषत्वे घटाद्यनुभवेनैव सत्तानुभवापत्त्या वेदान्तविचारो दत्ततिलाञ्जलिः स्यात् । किञ्च, सर्वासु प्रतिपत्तिषु सन्मात्रस्यैव प्रत्यक्षविषयत्वे तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु कथं न स्मर्यन्ते । अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वाद्, विशेषाभावाच्च स्मृतिवैलक्षण्याभावप्रसङ्गात् । प्रतिसंवेदनं विशेषाऽभ्युपगमे च प्रत्यक्षस्य विशिष्टवस्तुविषयत्वमेवाङ्गीकृतं स्यात् । सर्वेषां सं-

वेदनानामेकविषयत्वे एकेनैव संवेदनेनाशेषग्रहणापत्तेश्च । किञ्च
सन्मात्रस्य रूपादिमत्त्वाभावेन सर्वथाऽपि न प्रत्यक्षविषयत्वम् ।
चक्षुरादीनां रूपादिधर्मविशेषवद्वस्तुग्राहकत्वनियमात् । नाप्यभे-
दस्य धर्मत्वं वक्तुमर्हम् । त्वदुत्प्रेक्षितदोषाणामनवस्थादीनामत्रापि
तौल्याद् द्वैतापत्तेः । निर्विशेषत्वप्रतिज्ञाहानेरपसिद्धान्ताच्च । व-
स्तुतस्तु भेदो जातिवद् धर्मविशेष एव । गोत्वादिवत् प्रतीत्यपेक्ष-
या वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वान्नोक्तदोषावकाशः । सं-
वेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि व्यवहार-
हेतुत्वं भवद्भिरभ्युपेतं भेदस्याऽपि सम्भवत्येव । तस्मान्नानवस्था-
दिदोषलेशयोग इति संक्षेपः । तत् सिद्धं भेदविषयकाणामभेदवि-
षयकाणां तुल्यबलत्वं सर्वेषामपि वाक्यानां स्वार्थसिद्धये भिन्ना-
ऽभिन्नं ब्रह्म सूत्रकृतामभिमतम् । तस्मात् तद्घटकसूत्राणि निर्मितवा-
न्, अंशो नानाव्यपदेशादन्यथा चाऽपि दाशकितवादित्वमधीयत
एके, उभयव्यपदेशात् त्वहिकुण्डलवदित्यादीनि । अतश्चैवं वाक्या-
र्थः । अभेदवाक्यैर्जगद्ब्रह्मणोः सामानाधिकरण्यं निरूप्यते । सा-
मानाधिकरण्यं तावद् द्विविधं यथार्थमयथार्थं च । तत्रायथार्थमपि
द्विविधम्—अध्यासो बाधश्च । तत्राध्यासो नाम प्रमाणबलादन्यत्रा-
ऽन्यस्योपासनाद्यर्थं तत्ताविधानम् । यथा, नाम ब्रह्मेत्युपासीतेतिश्रुत्या
नामादिष्वतद्वस्तुषु प्रतीकेषु ब्रह्मत्वेनोपासनाविधानम् । बाधितत्वं च
उत्तरविरोधिज्ञानविषयत्वम् । यथा स्थाणुरेव चौरः, स्थाणु-
ज्ञानाच्चोरस्य बाधितत्वात् । उभयोरप्येतयोः सामानाधिकरण्यल-
क्षणहीनत्वेन गौणत्वादयथार्थत्वम् । यथार्थं त्रिविधं—कार्यकारण-
व्याप्यव्यापकविशेषणविशेष्यात्मात्मीयादिभेदात् किं चात्र सा-
मानाधिकरण्यं विवक्षितमिति विवेचनीयम् । न तावदध्यासः ।
विरुद्धत्वात् । प्रयोजनाभावेन प्रतीकादिवदत्र प्रमाणाभावाच्च ।

नाऽपि बाधः । ज्ञानाबाध्यत्वात् । अन्यथा शुक्तिरूप्यवदाकाशादेरपि बाधापत्तिः । तस्याश्चाऽदृष्टचरत्वात् । अनुपपन्नत्वाच्च नाऽपि विशेषणविशेष्यता । तदनुपपत्तेः पूर्वमेवोक्तत्वात् । परिशेषात् कार्यकारणभावव्याप्यव्यापकभावात्मात्मीयभावादिरूपमेवात्र सूत्रकृतामभिमेतमित्याभिप्रायेणाह ॥ अखिलं विश्वं तदात्मकमेव प्रतीयते इति ॥ स एव भवानेव आत्मा यस्य तत्तदात्मकम् । यद् यदात्मकं तत्तत्सामानाधिकरण्यनिर्देशार्हम् ॥ पिण्डजीववत् । ऐतदात्म्यमिदं सर्वमित्यादि, एष सर्वभूतान्तरात्मा, सर्वव्यापी सर्वभूतान्तरात्मेत्यादिश्रुतेः । आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति न्यायात् । इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः * वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव चेत्यादिस्मृतेश्च । एतेनात्मात्मीयभावसामानाधिकरण्यमुक्तम् । तत्र हेतुमाह ॥ तन्नियामकतयेति ॥ भवतस्तन्नियामकत्वात् । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषाऽस्माद् वातः पवते भीषोदेति सूर्य इत्यादिश्रुतेः । एतेन तस्य स्वातन्त्र्योक्त्या विश्वस्य तदायत्तस्थितिप्रवृत्त्यादिसिद्ध्या सामानाधिकरण्यार्हत्वमपि निरूपितम् । यद् यदायत्तस्थितिप्रवृत्तिकं, तत् तस्य सामानाधिकरण्यार्हमिति व्याप्तिराम्नाता छन्दोगैः प्राणेन्द्रियसंवादे, न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राण एवैतानि सर्वाणि भवतीत्यादिश्रुतिभिः । अथ कार्यकारणभावसामानाधिकरण्यं दर्शयन्नाह ॥ यतो भवत इदं जायते इति ॥ स्पष्टार्थः । यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुतेः । यच्छब्दस्य सामान्यत्वेन विशेषसापेक्षत्वात् तद्विशेषशङ्कावारणायाह ॥ ब्रह्मण इति ॥ निरातिशयबृहत्तमस्वरूपगुणादेः, बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म, बृहन्तो गुणा अस्मिन्निति ब्रह्मेत्यादिश्रुतेः ।

बृहत्त्वाद् बृंहणत्वाच्च तस्माद् ब्रह्मेति कथ्यते इति स्मृतेश्च । तत्र हेतुमाह ॥ आदिपूरुषादिति ॥ पूरुषस्य हिरण्यगर्भस्यादिरादिपूरुषस्तस्यादिति विग्रहः । आदिश्चासौ पूरुषश्चादिपूरुषस्तस्मादिति वा । पूर्वमेवाहमासं तत्पुरुषस्य पुरुषत्वमिति श्रुतेः । ननु ब्रह्मादिशब्दानां योगरूढिभ्यामन्यत्रापि क्वचिद्दर्शनाद्व्यभिचार इत्याशङ्क्याह ॥ रमेश्वरादिति ॥ रमाया लक्ष्म्या ईश्वरः पतिः रमेश्वरस्तस्मात् । श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेः । परेश्वरादिति वा पाठः । तथाच पराणामीश्वरकल्पानां परिच्छिन्नैश्वर्यवतां ब्रह्मशिवेन्द्रादीनामीश्वरः ॥ तथा तस्मात् । तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतमिति श्रुतेः ॥ जायते इति ॥ बीजादङ्कुर इव सदेव प्रादुर्भवति । जनी प्रादुर्भावे इति धातुपाठात् । अतो जगतामुपादानत्वादुपादानोपादेययोः सामानाधिकरण्यस्य सूपपन्नत्वात् । एतेनैव, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यादिश्रुतयो व्याख्याताः ॥

किं चोपादानस्य लक्षणमित्यपेक्षायामाहुरेके । भ्रमाधिष्ठानत्वं तत्त्वमिति चेन्न । उपादाने मृदादौ भ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठाने च शुक्त्यादौ मुपादानत्वस्य च व्यवहारादर्शनात् । मृज्ज्ञानेन घटादिबाधादर्शनात् । पारिणामिकोपादानत्वस्य चानुपादानत्वे पर्यवसानात् । तन्मतस्य रूपान्तरापत्तिर्विवर्त्तः । सत्यरूपान्तरापत्तिस्तु परिणामः । रूपान्तरापत्तिमात्रमुपादानत्वम् । तत्र ब्रह्मणो विवर्तरूपाविशेषेणापि सूपपन्नम् । निर्विकारश्रुतिस्तु तात्त्विकविकाराभावाभिप्रायिका । ब्रह्म चाज्ञातप्रपञ्चरूपेण विवर्तत्वेऽज्ञानमपि परिणामित्वेनोपादानान्तर्गतम् । रूप्यमपि शुक्तिविवर्त्तत्वाद्, अज्ञानपरिणामत्वाच्चोभयोपादानकमिति चेन्न । तथापि मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयम् । सत्यत्वे कार्यस्यापि कारण-

स्वभावतया सत्यत्वप्रसङ्ग इति वदता सत्यस्यासत्यरूपापत्तेर्निषेधात्। स्वभावत्यागप्रसङ्गाच्च।

किञ्च, सत्यस्यासत्यरूपतापत्तौ तदापत्तियोग्यतारूपधर्मोऽप्यवश्यं स्वीकार्यः। सर्वसामर्थ्यशून्यस्य तथात्वासंभवात्। अतिप्रसङ्गाच्च। तथात्वे च निर्विशेषसिद्धान्तप्रतिज्ञाभङ्गात्। नाऽपि रूपान्तराऽभेदधीविषयत्वमुपादानत्वमिति लक्षणं संभाव्यम्। तत्त्वंपदार्थयोः क्षीरनीरयोः खण्डगोत्वयोश्चोपदानोपादेयभावप्रसङ्गात्।

नच कार्याभेदधीविषयत्वमुपादानत्वमिति वक्तुं योग्यम्। सदृशे वस्तुनि सन्निहितेऽपि कार्याभेदभ्रमसम्भवेनातिव्याप्तेः।

ननु मायोपादनम्, ईश्वरो निमित्तं, शुद्धं ब्रह्माधिष्ठानमितिचेन्न। अभिन्ननिमित्तोपादानासिद्ध्या त्वन्मते तदर्थस्य प्रकृतिश्चेत्यधिकरणादेर्बाधापत्तेः। श्रुतिसूत्रविरोधाच्चेति संक्षेपः।

ननु चिदचिद्विशिष्टं ब्रह्मोपादानम्। तथाचोपादानश्रुतीनां स्वार्थे प्रामाण्यान्न कोऽपि दोषः। नच विशिष्टस्योपादानत्वे परिणामोऽपि अवश्यम्भावी। तथात्वे च निर्विकारश्रुतिव्याकोपाद्सामञ्जस्यमिति वाच्यम्। विकारस्य विशेषणगतत्वान्निर्विकारश्रुतीनां विशेष्यपरत्वान्नोक्तदोषलेशसम्बन्धावकाश इतिचेन्न। असम्भवात्। तथाहि। विशिष्टस्यब्रह्मत्वं भवतामभिमतं, न वेति विवेचनीयम्। आद्ये भवता, अंशो नानेति सूत्रभाष्ये विशेषणस्यांशत्वाङ्गीकारेणांशतः परिणामापत्तेर्दुर्वारत्वात्। निर्विकारश्रुतिबाधस्य तादवस्थ्याच्चासम्भवः। द्वितीये ब्रह्मोपादानत्वप्रतिज्ञाभङ्गात्। शुद्धविशिष्टयोर्भेदापत्त्या परमतप्रवेशाच्च। विशिष्टाभ्युपगमबाधाच्चासम्भव एव। किञ्च, विशिष्टब्रह्मणो मुक्तगम्यत्वं भवतामभिमतं, न वा। नाद्यः। विकारिणो मुक्तोपसृप्यत्वे मुक्तानामपि सविकारत्वापत्तेः। स च महानिष्टः। द्वितीये किं वा मुक्तगम्यं ब्रह्मेति वक्तव्यम्। न तावद्वि-

शेषणशून्यम् । मायावादमतप्रवेशात् । अनभ्युपगमाच्च । गत्यन्तराभावाच्चाऽसम्भव एव । तस्माद्विशिष्टब्रह्मोपादानवादो महादोषवत्त्वादसम्भव एवेति संक्षेपः ॥

अन्ये तु– ब्रह्म जगतो निमित्तकारणमेवेति दुराग्रहेण ब्रह्मण उपादानत्वं नाङ्गीचक्रुः । तत्तुच्छम् । बहु स्यां प्रजायेय, सच्च त्यच्चाऽभवत्, स्वयमात्मानमकुरुतेत्यादिश्रुतिविरोधेनौपनिषद्बहिर्भूतत्वात्, तार्किकादिमताभ्युपगमाच्च । किञ्च, ब्रह्मणो जगन्निमित्तमात्राङ्गीकारपक्षे कारणविज्ञानेन सर्वकार्यविज्ञानं, यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति श्रौतप्रतिज्ञाभङ्गप्रसङ्गो दुर्वारः । न हि निमित्तज्ञानेन कार्यविज्ञानं सम्भवति । अन्यथा कुलालादिविज्ञानेनाऽपि मृण्मयादिविकारजातस्य विज्ञानं स्यान्न तु तदस्ति । सर्वानुभवविरोधात् । अपि च, ब्रह्मण उपादानत्वाभावे कार्ये व्याप्त्यभावात् तस्य परिच्छिन्नत्वापत्तिरप्यावश्यकी । तस्मादुपेक्षणीयोऽयं पक्षः श्रेयोऽर्थिभिरिति । वस्तुतस्तु विक्षेपोपसंहारार्हात्माश्रिताचिन्त्यासाधारणशक्तिविशेषनियन्तृत्वमुपादानत्वं, परापरक्षेत्रक्षेत्रज्ञादिपदार्थभूतस्वस्वाभाविकसूक्ष्मावस्थापन्नानां तत्तद्गतसद्रूपकार्याणां च स्थूलतया प्रकाशकत्वमिति फलितार्थ इति श्रीदेवाचार्यपादोक्तेः।यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात् केशलोमानि यथा पृथिव्या ओषधयः सम्भवन्ति तथाऽक्षरात् सम्भवतीह विश्वमित्यादिश्रुतेः। व्याख्याता चैषा श्रीसुन्दरभट्टपादैः । तथाहि । यथोर्णनाभेरूर्णाप्रसारणाकुञ्चनार्हतालक्षणशक्तिमत ऊर्णाविर्भावतिरोभावौ तदप्रच्युतस्वरूपतयैव भवतः । यथा च पुरुषात्प्रमयात् तन्मात्रशक्तिमतः केशलोमानामुत्पत्तिमात्रकार्यसिद्धिः । यथा च भूमेस्तथाभूतशक्तिमत्या ओषधीनां जन्ममात्रं तथा सर्वकार्योत्पादनार्हलक्षणाचिन्त्यानन्तसर्वशक्तेरक्षरपदार्थाद् ब्रह्मणो विश्वं

संभवतीति । यदा स्वस्वाभाविकाल्पाधिकसातिशयशक्तिमद्योऽचेतनेभ्य स्तत्तच्छक्त्यनुसारेण स्वस्वकार्यभावापत्तावपि अप्रच्युतस्वरूपत्वं प्रत्यक्षप्रमाणसिद्धं, तर्ह्यचिन्त्यसर्वाचिन्त्यविश्वाख्यकार्योत्पादनार्हशक्तिमतो भगवत उक्तरीत्या जगद्भावापत्तावप्यप्रच्युतस्वरूपत्वं किमशक्यमिति । तथा भारते भीष्मः । प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः * तद्वद् भूतानि भूतात्मा सृष्टानि ग्रसते पुनरिति । वैष्णवे च—प्रधानं पुरुषं चाऽपि प्रविश्यात्मेच्छया हरिः * क्षोभयामास संप्राप्ते सर्गकाले व्ययाऽव्ययाविति शक्तिविक्षेपसंहरणस्य परिणामशब्दवाच्यत्वाभिप्रायेण क्वचित् परिणामोक्तिः । स्वरूपपरिणामाभावश्च पूर्वमेव निरूपितः । शक्तेः शक्तिमतोऽपृथक्सिद्धत्वात् । तदभिप्रायेण सूत्रकृद्भिरपि सूत्रितम् । आत्मकृतेः परिणामादिति । अन्यथा विकारित्वप्रसङ्गात् । सतो ब्रह्मण उपादेयत्वात् प्रपञ्चस्यापि सत्त्वमिति । तच्च पूर्वमेवोक्तम् ॥

ननु प्रपञ्चो मिथ्या । दृश्यत्वात् । जडत्वात् । परिच्छिन्नत्वाच्च । शुक्तिरूप्यवदित्यादिना मिथ्यात्वसिद्ध्या कथं सत्यत्वमिति चेन्न । पक्षहेत्वादीनां दुर्निरूप्यत्वेनाऽऽभासमात्रत्वादुक्तप्रयोगस्य । तथाहि । प्रपञ्चरूपोऽयं पक्षः प्रमितो, न वा । नाद्यः । प्रमितस्य निह्नोतुमशक्यत्वात् । ननु प्रपञ्चस्य प्रत्यक्षगोचरत्वेऽपि सत्त्वानधिकरणत्वान्मिथ्यात्वं वक्तुं शक्यमेवेतिचेन्न । तव मते सर्वविशेषहीनस्य शुद्धस्य ब्रह्मणोऽपि सत्त्वानधिकरणत्वाभ्युपगमात् तत्राऽतिव्याप्तेः । शुद्धं ब्रह्म, मिथ्या । सत्त्वानधिकरणत्वात् । तव मते प्रपञ्चवदिति प्रयोगात् । नाऽपि द्वितीयः । शशशृङ्गस्तीक्ष्णाऽग्रः, शृङ्गत्वात् । हरिणशृङ्गवत् । खपुष्पं गन्धहीनमित्यादिप्रयोगवद् बालभाषितमेव । सिद्धसाधनस्य। नाऽपि साध्यसिद्धिः । साध्यरूपं मिथ्यात्वं, सत्यं वा, तुच्छं वा । नाद्यः। मिथ्यात्वस्य सत्यत्वे-

ऽद्वैतभङ्गात् । नान्त्यः । मिथ्यात्वस्य मिथ्यात्वे मपक्षस्य सत्यत्वापत्तेः । यथा केनचिल्लौकिकेनोक्तं देवदत्तो मृतः, परेण चाप्तेन निर्णयपूर्वकं तदभाव उक्तः । आप्तवाक्याद्देवदत्तमरणस्य मिथ्यात्वे तस्य सत्यत्वसिद्धिस्तद्वत् सिद्धसाधनतापत्तेश्च । मिथ्यात्वस्याऽत्राध्यत्वे अद्वैतहानिः, बाध्यत्वे जगतः सत्यत्वमित्युभयथाऽपि पाशारज्जू इत्यर्थः । अथ हेतवोऽपि दुर्निरूप्याः । तथाहि । दृश्यत्वं नाम, किं वृत्तिव्याप्यत्वं फलव्याप्यत्वं वा, उभयव्याप्यत्वं वा । नाद्यः । ब्रह्मण्यतिव्याप्तेः । तत्र पक्षे ब्रह्मणोऽपि वृत्तिव्याप्यत्वसाम्यात् । ननु शबलस्य च तथात्वाऽभ्युपगमान्नोक्तदोष इतिचेन्न । असम्भवात् । तथाहि । तदव्यक्तमाह हीति सूत्रभाष्ये, अव्यक्तं, परं ब्रह्म इन्द्रियाग्राह्य निरूप्य, अपि च संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रभाष्ये च, अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति इत्यादिना परस्यैव पश्यतेः क्रियायाः कर्मत्वस्वीकारेण तद्बाधात् । अन्यथा तत्रोदाहृतश्रुतिस्मृतीनां ततस्तु तं पश्यति निष्कलं ध्यायमान इति, ज्योतिः पश्यन्ति युञ्जाना, योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमित्यादीनां बाधाच । किञ्च उक्तश्रुत्यादीनां यदि शुद्धविषयकत्वं नाङ्गीक्रियते तर्हि शुद्धस्य ज्ञानाभावे तादवस्थ्ये तदाच्छादकमूलाज्ञानस्याप्यनिवृत्त्या अनिर्मोक्षप्रसङ्गात् । शबलज्ञानस्य मोक्षासाधकत्वाभ्युपगमात् । परात्परं पुरिशयं पुरुषमीक्षते इत्यादिना परात् परस्यैव ब्रह्मणो दर्शनक्रियाकर्मत्वश्रवणाच्च तद्बाधोऽपि दुष्परिहरः । नाऽपि फलव्याप्यत्वम् । अतीन्द्रियेष्वपञ्चीकृतभूतेषु चोदनैकवेद्यधर्मादौ तव मते साक्ष्येकवेद्ये सुखादौ तदभावेनाव्याप्तिप्रसङ्गात् । तेषां सत्यत्वापत्तेः । सुखादयो धर्मादयश्च सत्याः । फलव्याप्यत्वराहित्यात् । ब्रह्मवदिति प्रयोगात् । नाप्युभयव्याप्यत्वं तत्त्वम् । विशेषस्य

सामान्यानतिरेकेण वृत्तिव्याप्यत्वाभ्युपगमादेव दृश्यत्वसिद्ध्या ब्रह्म- ण्यतिव्याप्तिप्रसङ्गस्य दुर्वारत्वादिति सङ्क्षेपः ॥

नाऽपि जडत्वं हेतुत्वपदमारोढुमर्हति । आभासत्वाविशेषात् । तथाहि । किं तावज्जडत्वम् । अज्ञातृत्वं वा, अज्ञानत्वं वा । नाद्यः । तव मतेऽन्तःकरणस्य ज्ञातृत्वेन तत्राव्याप्तिप्रसङ्गात् । शुद्धब्रह्मणोऽप्यज्ञातृत्वाभ्युपगमेनातिव्याप्तिप्रसङ्गाच्च । शुद्धं ब्रह्म मिथ्या । अज्ञातृत्वात् । आकाशादिवदित्याभाससाम्यात् । नच कल्पितज्ञातृत्वं शुद्धेऽपि स्वीक्रियते इति वाच्यम् । कल्पितेन हेत्वभावेनातिव्याप्त्यनुद्धारात् । शुद्धत्वभङ्गात् । शुद्धाशुद्धविभागासिद्धेश्च । नाप्यन्त्यः । वृत्तिज्ञाने तदभावेनाव्याप्तेः । ब्रह्मणि अतिव्याप्तेश्च । तथाहि । आत्मज्ञानं सविषयं, न वेति । आद्येऽपि स्वविषयं, परविषयं वा । नाद्यः । स्ववृत्तिविरोधेन परैरनभ्युपगमात् । नच स्वकर्मकत्वाऽभावेऽपि स्वव्यवहारजननयोग्यत्वलक्षणं स्वविषयत्वमस्ति । तत्स्वभावस्य स्फुरणस्य तद्व्यवहारजनकतया तद्विषयत्वमिति चित्सुखोक्तेरिति वाच्यम् । घटादावपि एतदन्यस्य ज्ञप्तिकर्मत्वस्याभावात् । न हि घटादावपि तदाकारवृत्तिस्तत्रातिबिम्बितचैतन्यं वा ज्ञप्तिः । तां च प्रति कर्मत्वं तत्कारकविशेष्यत्वं वा, तज्जन्यावरणाभिभवरूपातिशययोगित्वं वेति युक्तम् । ज्ञानैक्ये सति दुःखादौ शुक्तिरूप्यादौ वोक्तरूपज्ञप्तिकर्मत्वाभावापातात् । ब्रह्मणोऽपि चरमवृत्तिविषयस्योक्तरूपां ज्ञप्तिं प्रति उक्तरूपकर्मत्वापाताच्च । किन्तु वृत्त्यभिव्यक्त घटाधिष्ठानचैतन्यं ज्ञप्तिः । नच तस्य घटादावपि व्यवहारादन्यत् कृत्यमस्ति । इयाँस्तु विशेषः । केवलघटादिः स्वान्यज्ञप्तिकर्मा, चैतन्यं स्वस्वरूपकर्मेति । द्वितीये परविषयत्वे चासम्भवः । मोक्षे परस्याभावाङ्गीकारात् । त्वन्मते वर्तमानस्यैव विषयत्वात् । वह्निरासीदित्याद्यनुमितावपि साक्षि-

ज्ञाने मोक्षसुषुप्त्योरतीतविषयोल्लेखरूपोपप्लवापाताच्च । नाऽपि निर्विषयत्वम् । ज्ञानत्वहानात् । यज्ज्ञानं तत् सविषयमेव । सप्रतियोगिकाभावादौ सविषयकेच्छादौ घटादिज्ञाने च सविषयत्वस्वभावदर्शनात् । नच कदाचित् सविषयमात्रेण ज्ञानत्वमिति वाच्यम् । मोक्षे आनन्दप्रकाशाभावापाताच्च । अर्थप्रकाशकत्वरूपज्ञानस्वभावाभावे घटादेरपि ज्ञानत्वापाताच्च । ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादिति विवरणोक्तिभङ्गाच्च । किञ्चात्मस्वरूपज्ञानं प्रमा, भ्रमो वा । नाद्यः । तद्वेद्यस्याविद्यादेस्तात्त्विकत्वापातात् । प्रमाणाजन्यत्वाच्च । न द्वितीयः । दोषाजन्यत्वात् । स्वभावतो द्वयहीनं चेत् स्वभावतो ज्ञानमपि न स्यादिति संक्षेपः । नाऽपि परिच्छिन्नस्य हेतुभावः । आभासत्वाविशेषात् । परिच्छिन्नत्वं तावत् त्रिविध— देशकालवस्तुभेदात् । नाद्यद्वितीयौ । आकाशरूपदेशस्य कालस्य चाऽपरिच्छिन्नत्वेन तत्राव्याप्तेः । आकाशवत् सर्वगतश्च नित्यः, सदेव सोम्येदमग्र आसीत्, अथ मर्त्योऽमृतो भवति, यत्र त्वस्य सर्वमात्मैवाभूत्, यावन्न विमोक्ष्ये अथ सम्पत्स्य इत्यादिश्रुतिभिः सदा सर्वत्र कार्यदर्शनादित्यादियुक्त्या धर्मिग्राहिणा साक्षिणा च तथात्वावगमात् । किञ्चानृतादौ ब्रह्मात्यन्ताभावान्योन्याभावयोः सत्त्वात् तत्रातिव्याप्तेः। ब्रह्म मिथ्या, अनृतान्योन्याभावप्रतियोगित्वात् । तत्र मते घटाद्यन्योन्याभावप्रतियोगिघटादिवदित्यनुमानात् । नन्वऽनृतादौ ब्रह्मात्यन्ताभावाऽन्योन्याभावयोर्मिथ्यात्वात् तत्र ब्रह्मसंसर्गस्य चाऽभिन्नत्वान्नोक्तदोषावकाश इति चेन्न । तथात्वे मिथ्यात्वाभिन्नत्वसंसर्गयोस्तात्त्विकत्वापत्त्या तद्विया पारमार्थिकस्यैवावश्यप्रकामेनापि त्वयाङ्गीकार्यत्वात् । सन्दिग्धानैकान्तस्य दुर्वारत्वाद्, अप्रयोजकत्वाच्च । नाऽपि तृतीयः । ब्रह्माभिन्नत्वस्य तात्त्विकस्य प्रपञ्चेऽप्यभावात् । ब्रह्मण्यपि अनृतव्यावृत्ति-

रत्यदिरहितं, तथा तस्य तथाऽनुमातुं अशक्यत्वात् । कल्पितस्य तु आत्मन्यपि भावादिति संक्षेपः । किञ्चाऽस्य दृष्टान्तविकलत्वमपि सुव्यक्तम् । शुक्त्यादेः पक्षान्तःपातित्वेन तत्प्रयोगस्याभासमात्रत्वात् । नच माऽस्तु शुक्त्यादेर्दृष्टान्तभावः । व्यतिरेकिदृष्टान्तस्य ब्रह्मणः सत्त्वान्नोक्तदोषावकाश इति वाच्यम् । विकल्पासहत्वात् । तथाहि शुद्धस्य ब्रह्मणो दृष्टान्तभावो विशिष्टस्य वा । नाद्यः । सर्वप्रमाणाविषयस्य ब्रह्मणः शशशृङ्गकल्पत्वेन दृष्टान्तानर्हत्वात् । प्रमाणविषयत्वे शुद्धत्वहानेः । अद्वैतभङ्गाच्च । नाऽपि द्वितीयः । विशिष्टस्य पक्षान्तःपातित्वात् ।

तस्मात् पक्षसाध्यहेतुदृष्टान्तानां दुर्निरूप्यत्वेनापातरमणीयत्वादाभासमात्रत्वमुक्तानुमानस्येत्यलं कुतर्कनिरासैः ॥ ९ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धबोधेन श्रीनियमानन्दाऽनुगेन श्रीपुरुषोत्तमप्रसादाख्येन विरचिते सविशेषनिर्विशेष-
श्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे
तत्त्वमस्यादिवाक्यार्थशाखा
पञ्चमी ॥ ५ ॥



## अथ शाखा षष्ठी ।

इत्थं संप्रदायगतसिद्धान्तमुक्त्वा श्रीभगवज्जन्मादि निरूपयन् स्तौति ।

जन्मकर्मगुणरूपयौवने
दिव्यमेव कवयो वदन्ति ते ॥
श्रौतवाद उपलभ्यते तथा
निर्विशेषचिति मङ्गलालये ॥ १० ॥

जन्मेत्यादिना ॥ ते तव भगवतः श्रीमुकुन्दस्य वासुदेवस्य जन्मकर्मगुणरूपयौवनम् । अत्र द्वन्द्वैक्यसमासोऽनुसन्धेयः । कवयो दिव्यमेव वदन्तीति संबन्धः । तत्र जन्म- श्रीरामकृष्णनृसिंहहयग्रीवाद्यनेकाविर्भावविशेषैरजहद्गुणशास्त्रयादिना प्रकटीभवनम् । कर्माणि जगत्सृष्ट्यादीनि, साधुपरित्राणम्, असाधुनिग्रहरूप, गोवर्द्धनोद्धरणादि, महाशिवमहेन्द्रादिनिरोधादिकं, नवनीतचौर्य-रासक्रीडादिकानि च । गुणा ज्ञानादयो, वात्सल्यादयश्च । रूप द्विभुजचतुर्भुजसहस्रशीर्षादिभिराकृतिविशेषः । यौवन यूनो भावो युवत्वमिति यावत् । एतच्च लावण्यमाधुर्यसौन्दर्यसौकुमार्यादीनां विग्रहवृत्तिगुणानामुपलक्षणम् । एवकारोऽयोगव्यवच्छेदार्थः । दिव्यमेवेति, न, अपि तु दिव्यमेवेत्यर्थः । अन्ययोगव्यवच्छेदार्थको वा । तेन प्राकृतभावव्यावृत्तिरनुसेया । कवयो तुम्बुरादयः । कविमनीषीति श्रुतेर्भगवतः कवित्वे मानत्वात् । तथाच, जन्म कर्म च मे, दिव्यमेव यो वेत्ति तत्त्वतः ॥ त्यक्त्वा देह पुनर्जन्म नैति मामेति सोऽर्जुन । पश्य मे पार्थरूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि चेति श्रीमुखोक्ते । बहुवचनान्नामरूपेत्रा

संग्रहः । तथाच नारदपञ्चरात्रे, नित्यासाधारणानेकलोकरक्षापरिच्छदे * सच्चिदानन्दरूपाय वरेण्याय नमो नमः । नित्यज्ञानबलैश्वर्यभोगोपकरणाय च। अच्युतायाविकाराय तेजसां निधये नमः। क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्तये इत्यादिवचनात् । समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः * तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् । समस्तशक्तिरूपाणि तत् करोति जनेश्वर । देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया। जगतामुपकाराय न सा कर्मनिमित्तजा इति वैष्णवपुराणवचनाच्च । न चैतावदेवात्र प्रमाणमपि तु वेदोऽपि तथैव वदतीत्याह ॥ श्रौतवाद उपलभ्यते तथेति ॥ श्रौतवादे श्रुतीनां निर्णये उपनिषत्कदम्बेऽपि तथा पूर्वोक्तजन्मादिदिव्यत्वकथनमुपलभ्यते, दृश्यते इति यावत् । यद्वा, त्वयीत्यध्याहृत्य तथा कथ्युक्तिरूपनिर्णयाऽनुसार एव वेदवादस्त्वय्युपलभ्यते इत्यन्वयः । वादो नाम बुभुत्साफलवादिवशगः। तथाहि । अजायमानो बहुधा व्यजायत इति जन्मविषये निर्णयः । अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते, अथैनमाहुर्नित्यकर्मेति नित्यं ह्येषाऽसौ कुरुत इत्यादौ कर्मविषये । तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजनं वासः, आदित्यवर्णं तमसः परस्तात्, यदा पश्यः पश्यते रुक्मवर्णम्, अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः, ईशानो भूतभव्यस्य,स एवाद्यः स ईश्वरः, सच्चिदानन्दरूपाय कृष्णायाऽक्लिष्टकारिणे, तमेकं गोविन्दं सच्चिदानन्दविग्रहम्, अयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूमम्, आप्रणखात् सुवर्णः, तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम्। चिदानन्दभुजं ज्ञानसुखैकपदकाङ्गुलिम् । आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकम्। ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन्नित्यादिरूपविषये ।

यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, सत्यकामः सत्यसंकल्पः, स्वाभाविकी ज्ञानबलक्रिया चेति गुणविषये, गोपवेषमभ्राभं तरुणं, सर्वगन्धः सर्वरस इति रूपशुचियौवनादिगुणविषये प्रमाणमिति विवेकः । वेदं विशिनष्टि ॥ निर्विशेषचितीति ॥ निर्गतः प्राकृतविशेषो यस्मात् तस्य निर्विशेषस्य चितिश्चयनं संचयो यत्र स निर्विशेषचितिः । मङ्गलस्य श्रीभगवत्स्वरूपादेः प्रतिपादकतया आश्रयत्वाद् आलयः । स चाऽसौ मङ्गलालयश्च तस्मिन्निति विग्रहः । तं त्वौपनिषदं पुरुषं पृच्छामः, सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतिभ्यः । अत्र केचिद् भगवदीयगुणानां मायिकत्वमज्ञानविजृम्भितत्वं कल्पयन्ति तत्तुच्छम् । स्वाभाविकश्रुतिव्याकोपात्, पूर्वमेव विस्तरशो निरस्तत्वाच्च ॥

अपरे तु, सर्वगुणात्मकमेव ब्रह्म विजानीयात् ततो ब्रह्म सदा गुणाऽऽत्मकम् । गुणानां च विशेषोऽस्ति, न विभेदः कथञ्चनेति श्रुतिमाश्रित्य गुणगुणिनोर्भेदं न सहन्ते । तच्चिन्त्यम् । असमीचीनत्वात् । तथाहि । सर्वगुणात्मकं ब्रह्मेति वाक्यस्थपदस्य, को वा विग्रहो विवक्षितः— तत्पुरुषो, बहुव्रीहिर्वेति विवेचनीयम् । आद्ये षष्ठीनिर्दिष्टस्य स्वरूपभेदस्यावश्यम्भावित्वात् । द्वितीये, सर्वे गुणा एव आत्मा स्वरूपं यस्येति विग्रहे गुणा एव ब्रह्मेति, नान्यद् ब्रह्मस्वरूपमिति सिद्धान्तापत्तेः, सामानाधिकरण्यापत्तेश्च । यस्य *ज्ञानमयं तपः, आनन्दं ब्रह्मणो विद्वान् पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी*त्यादि—व्यधिकरणश्रुतिव्याकोपाच्च । किञ्च गुणाऽभिन्नं ब्रह्मेति पक्षे गुणानामसंख्येयत्वं भवद्भिरपि स्वीकृतम् । तथात्वे स्वरूपस्यैव नानात्वभावः । एको ह वै नारायण इत्यादिश्रुतिव्याकोपात्तेश्च । अपिच, गुणाभिन्नरूपाङ्गीकारमते गुणा एव

स्वरूपं वा, स्वरूपमेव गुणा इति वा विवक्षितः । नाद्यः । गुणभिन्नस्वरूपाभावप्रसङ्गात् ! तच्च पूर्वमेव दूषितम् । नाऽपि द्वितीयः । स्वरूपस्यैव गुणत्वे निर्गुणवादापत्तेः । गुणे गुणासंभवात् । अन्यथाऽनवस्थापत्तेश्च । ननु पूर्वोक्तशास्त्रमानाद्भेदाभावेऽपि विशेषस्य सत्त्वाचोक्तदूषणयोग इतिचेन्न । अनुपपन्नत्वात् । किंस्वरूपत्वाद्विशेषः । गुणत्वेन प्रत्यायकयोग्यत्वमितिचेन्न । तर्हि भेदपर्यायत्वमेव, पृथक्प्रतीत्यर्हत्वमेव भिन्नत्वम् । अपिच, स्वरूपवृत्तियों विशेषो भवद्भिरङ्गीकृतः स स्वरूपादभिन्नो, भिन्नो वेति विवेक्तव्यम् । आद्ये स्वरूपासिद्धेः । द्वितीये गुणशक्त्यादीनामपि धर्मत्वसामान्यादेकस्य भिन्नत्वाङ्गीकारेऽन्येषां चाभिन्नत्वेऽर्द्धजरतीयन्यायप्रसङ्गात् । किञ्च, उक्तलक्षणविशेषस्य प्रत्यायकोऽपि स्वयमेवाऽन्यो वा । नाद्यः । आत्माश्रयदोषप्रसक्तेः । नाऽपि द्वितीयः । अनवस्थादोषप्रसक्तेः । तस्मादसमीचीन एवैष पक्ष इत्यलं विस्तरेण । वस्तुतस्तु गुणगुणिनोर्भिन्नाभिन्नत्वमेव । गुणानां पुण्यात्मकत्वेन तदात्मीयत्वात् । आत्मीयस्य स्वस्वरूपवृत्तिपरतन्त्रसत्तावत्त्वेऽपि स्वतन्त्रसत्ताऽयोगात् । तस्मात् परतन्त्रसत्त्वयोगात् स्वरूपेण भिन्नत्वाद् भिन्नाऽभिन्नत्वमिति राद्धान्त इत्यलं पल्लवनेन ॥ १० ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीभगवत्प्रियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे जन्मादितत्त्वनिर्णयशाखा षष्ठी ॥ ६ ॥

## अथ सप्तमी शाखा ।

अथ सर्वजीवनिकायस्य सर्वास्वपि बन्धमोक्षाद्यवस्थासु भवानेव गतिरिति प्रतिपादयन् स्तौति ॥

नित्यमुक्तजनतासुसेवितो
यज्जीवदयया ऽक्षगोचरः ॥
देशकालगुणवस्तुतो बृहन्
यन्नवीमि भवानमायया ॥ ११ ॥

नित्यमुक्तजनतेत्यादिना ॥ को वा जीवास्तेत्यपेक्षायामाहुरेके– ज्ञानेच्छाप्रयत्नाद्याश्रयाः प्रतिदेहं भिन्ना विभवो द्रव्यविशेषा इति । ननु यद्येवं तर्हि चैत्रचरणलग्नकण्टकादिजन्यदुःखानुभूतिकालेऽन्येषामपि सर्वेषामात्मनां कुतो वेदनानुभवाभावः । सर्वात्मनां सर्वगतत्वेन चैत्रशरीरान्तर्भावाविशेषादितिचेन्न । यस्य शरीरे कण्टकवेधादि तस्यैव वेदनानुभवो, नान्येषामिति व्यवस्थाभ्युपगमादिति । तत्तुच्छम । सर्वात्मसन्निधावेकस्यैवानुभवो, नान्येषामिति नियन्तुमशक्यत्वात । नच यददृष्टोत्पादकं यच्छरीरं तत्तु तदीयमिति नियमः । अदृष्टस्याप्युक्तन्यायेन नियमासिद्धेः । यदा हि तददृष्टोत्पादनाय केनचिदात्मना संयुज्यते मनस्तदैवान्यैरपि मनोयोगस्याविशेषात कथमिव कारणसाधारणे क्वचिदेवादृष्टोत्पत्तिर्नान्यत्रेति । ननु मनःसंयोगस्य साधारण्येऽपि, अहमिदं फलं प्राप्नुयामिति अभिसंधिरदृष्टोत्पादककर्मानुकूलकृतिश्चेत्येवमादि व्यवस्थितमिति, तत एवाऽदृष्टनियमो भविष्यतीतिचेन्न । अभिसंध्यादीनामपि साधारणमनःसंयोगाविष्पादकतया व्यवस्थित्यसिद्धेः । ननु स्वकीयमनःसंयोगोऽभिसंध्यादिकारणमिति मनःसंयोग एवासाधारणो भविष्यतीतिचेन्न । नित्यं सर्वत्य-

संयुक्तं मनः कस्यचिदेवेति नियन्तुमशक्यत्वात्। नचाऽदृष्टविशेषादात्मविशेषेण मनसः स्वस्वामिभावसिद्धिरिति वाच्यम्। तस्याऽप्यऽदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः। नच आत्मनां विभुत्वेऽपि तेषां प्रदेशविशेषा एव बन्धभाज इत्यात्मान्तराणां चैत्रशरीरे तत्प्रदेशविशेषाभावात् सुखदुःखादिव्यवस्था भविष्यतीति वाच्यम्। यस्मिन् प्रदेशे चैत्रः सुखाद्यनुभूय तस्माद्देशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते सति तस्यापि तत्र सुखादिदर्शनेन शरीरान्तरे आत्मान्तरप्रदेशविशेषस्याप्यन्तर्भावात्। तस्माद्विभुवह्वात्मवादे व्यवस्था दुरुपपादैव॥

किञ्च, सुषुप्त्यभावप्रसङ्गश्च। एकस्मिन्मनसि लयेऽन्यैर्मनोभिरात्मसंयोगस्य सत्त्वात्। एवं विभुपरिमाणकबहुजीवात्मवादिनां मनसोऽणुत्वमभ्युपगच्छतां तार्किकादीनां मते दोषाः प्रपञ्चिताः॥

विभ्वात्मवादिनां मनसोऽपि वैभवमङ्गीकुर्वतां मीमांसकानामपि मते तथैव दोषाश्चिन्तनीयाः। सर्वैर्मनोभिः सर्वेषामपि जीवात्मनां संयोगादेरविशेषात्। किन्तु यथा तेषाम् आत्मभिः सर्वेषां संयोगस्तथा सर्वैरपि चक्षुरादिभिरिन्द्रियैः साकमपि मनःसंयोगसाम्याच्छ्रावणस्पार्शनादिज्ञानानां युगपदुत्पत्तिप्रसङ्गो दोषविशेषस्तन्मते चिन्तनीयः। दुग्धादिभिर्द्रव्यैर्मनोयोगस्य युगपद्भावात्। नच श्रावणादिज्ञाने श्रवणादिभिरिन्द्रियैः शब्दादियोगस्यासाधारणहेतुत्वान्मनोभिर्विषयसन्निकर्षेऽपि ज्ञानानुत्पत्तिः सुशकेति वाच्यम्। मनसामिन्द्रियैर्नित्यसंयोगस्य सत्त्वेन इन्द्रियविशिष्टमनसां विषयसन्निकर्षाविशेषात्। किञ्च, अस्तु वा कयाचित् कूटकल्पनया सुषुप्त्यादौ वाह्यश्रावणादिज्ञानानुत्पत्तिः। मनोविषयसंयोगसत्त्वेऽपि तत्रेन्द्रियसन्निकर्षाभावात्। तथापि शब्दादिभिर्मनसां नित्यसंयोगस्य दुर्वारत्वेन शब्दादित्वावच्छिन्नशब्दादिमात्र-

विषयकमानसप्रत्यक्षानुभवस्य त्वन्मतेऽसम्भावितत्वाद् अलं विस्तरेण ॥

ननु माऽस्तु आत्मनो बहुत्वं, मनसो विभुत्वं च, पूर्वोक्तयुक्तिभिर्व्यवस्थाऽनुपपत्तेः किन्तु, एक एव विभुरात्मा समस्तैरेवान्तःकरणोपाधिभिरवच्छिन्नो घटाद्यवच्छिन्नाकाशवद् भिन्नतया प्रतीयते । स्वस्वोपाधिसंयुक्ताश्च स्वीयसुखदुःखादिविषयकानुभूतयः । उपाधीनां तत्सुखादिसांकर्याभावे नियामकत्वात् सर्वव्यवस्थोपपत्तेरिति चेन्न । सर्वगताद्वितीयात्मवादे उपाधीनां विभुत्वं वा, अणुत्वं वा, मध्यमपरिमाणत्वं वेति विवेचनीयम् । नाद्यः । सर्वस्याप्यावृतत्वेन जगदान्ध्यप्रसङ्गो दुर्वारः । प्रकाशकाभावात् । गत्याद्यनुपपत्तेश्च । मुक्तोपसृप्यस्याभावप्रसङ्गाच्च । ब्रह्मविदाप्नोति परं, मुक्तोपसृप्यव्यपदेशात्, मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे, बहवो ज्ञानतपसा पूता मद्भावमागता इत्यादिशास्त्रबाधाच्च ॥

नाऽपि द्वितीयः । उपाधौ गच्छति सति तदवच्छिन्नस्याऽद्वितीयस्य चिन्मात्रस्य सर्वगतत्वात् । तेन सह गत्याद्यनुपपत्त्या घटे गच्छति तदवच्छिन्नाकाशस्य गत्यनुपपत्तिवद् गमनाऽनुपपत्तेः पदे पदे बन्धमोक्षौ स्याताम् । अनाद्युपाध्यवच्छिन्नस्याकस्माच्छास्त्रोक्तज्ञानाद्यऽसाधारणसाधनकदम्बं विनैव मुक्तिः । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः, तदा देवमविज्ञाय दुःखस्यान्तं निगच्छतीत्यादिश्रुतिबाधाच्च । नित्यमुक्तस्य शुद्धबुद्धाद्वितीयनिर्विशेषचिन्मात्रस्याकस्माद् बन्धप्रसङ्गात्, तद्विषयकजिज्ञासाशास्त्रारम्भवैयर्थ्याच्च । उक्तन्यायेन मुक्तस्यापि पुनर्बन्धासम्भवाच्च । पादादिवेदनादेः शिरसि गतसुखस्य च युगपदऽनुभवाऽनुपपत्तेश्च । अत्र दोषविशेषाश्च सिद्धान्तजाह्नव्यां श्रीदेवाचार्यपादैः प्रपञ्चितास्तत्रैव द्रष्टव्याः मुमुक्षुभिः । नोत तृतीयः । उपाध्यणुत्वनिश्चायितजीवात्माणुत्व-

मिति सिद्धान्तविरोधात् । चाक्षुषत्वापत्तेश्च । किञ्च पूर्वोक्तदोषाणामपि तादवस्थ्यं दुर्वारम् । एकस्यैव सर्वोपाध्यवच्छिन्नत्वात् । सर्वोपाधिप्रयुक्तानां सुखदुःखानां सर्वैरनुभवितुं शक्यत्वेन विशेषनियामकाभावात् सुखदुःखादेः साङ्कर्यस्यावश्यम्भावात् । सर्वकर्मार्जितपुण्यपापैरेकस्य योगाद् भोगस्यापि तेनैवैकेन भोक्तव्यत्वादित्यलं विस्तरेण ॥ किञ्च, भवतां मते अवच्छेदकस्योपाधेः सत्यत्वं वा, मिथ्यात्वं वेति वक्तव्यम् । नाद्यः । द्वैतापत्त्या सिद्धान्तभङ्गप्रसङ्गात् । सत्यस्य ज्ञाननाश्यत्वाऽभावेनानिर्मोक्षप्रसङ्गाच्च । परमतप्रवेशापत्तेश्च । न द्वितीयः । अनुपपन्नत्वात् । अन्यथा स्वप्नरज्ज्वा जाग्रदवस्थायां राजकारागृहप्रवृत्तिचोरादेर्बन्धनापत्तिर्दुर्वारा । तस्याऽदृष्टश्रुतगोचरत्वात् । प्रमाणशून्यत्वाच्छ्रुतियुक्तिविरुद्धत्वात् पापीयानयं पक्षोऽनादरणीयः श्रेयोऽर्थिभिः ॥

ननु स्यादेतद्, उपाध्यवच्छिन्नजीवात्मवादे पूर्वोक्तदोषप्रयोगव्यवस्थानुपपत्त्यादि, किन्तु प्रतिबिम्बवादे तदभावात् स एवाऽङ्गीकार्यः । तथाहि । बिम्बस्थानीयं ब्रह्म, जलस्थानीयेऽन्तःकरणाद्युपाधौ प्रतिबिम्बितं सज्जीवभावमापद्यते । उपाधेश्चाविद्याकल्पितत्वात् तत्प्रयुक्तो भेदः । यथा सूर्यस्य जलपूरितघटेषु तत्र तत्र प्रतिबिम्बाद्भेदो, घटोपाधिकृतो भेदश्च । तत्रैकस्मिन् चाल्यमाने घटजले तद्गतस्यैकस्यैव प्रतिबिम्बस्य कम्पादियोगो, नान्येषां प्रतिबिम्बानाम् । एकस्मिंश्च घटनाशे तद्गतस्यैकस्यैव प्रतिबिम्बस्य बिम्बभावापत्तिर्नान्येषां तथैकस्मिन्नन्तःकरणे सुखदुःखाद्यात्मना परिणामे सति तद्गतस्यैकस्यैव चेतनप्रतिबिम्बस्य तत्तत्सुखदुःखाद्यनुभवो नान्येषां प्रतिबिम्बानाम् । तथाचैकस्मिन्नेवोपाधौ तत्त्वमस्यादिवाक्यजन्यजीवब्रह्मैक्यज्ञानान्नाशापन्ने तस्यैव ब्रह्मभावापत्तिलक्षणो मोक्षो, नान्येषामिति सर्वाऽपि सुखदुःखभो-

गगनाङ्कयोरन्यतरस्योपपत्तिर्न्द्वयोरन्यतरस्योपपत्तिश्च सुवचेति चेन्न । दृष्टान्तवैषम्येण अनुपपन्नत्वात् । यथा सूर्यरूपस्य विम्बस्य जलादिरूपोपाधेश्च रूपवत्त्वात् सावयवत्वात् परिच्छिन्नदेशवर्तित्वेन सदेशत्वाच्च प्रतिबिम्बभावो युक्तो वक्तुम् । प्रकृते बिम्बस्य ब्रह्मणो नीरूपत्वान्निरवयवत्वात् । सर्वगतत्वाच्च, उपाधेरपि नीरूपत्वनिरवयवत्वाभ्यां प्रतिबिम्बभावस्य सर्वथैवासामञ्जस्यं विचारणीयं मनीषिभिर्देवाना हितकारिभिः । नच नीरूपनिरवयवयोरपि रूपाकाशयोः प्रतिबिम्बदर्शनान्नानुपपत्तिप्रसङ्ग इति वाच्यम् । सावयवद्रव्याश्रितस्यैव रूपस्य सूर्यचन्द्रादिप्रभामण्डलयुक्तस्यैवाकाशस्य रूपावयवसम्पन्ने एव जलादौ द्रव्यविशेषे स्वसजातीये प्राकृते प्रतिबिम्बोपलब्धेरतो नोक्तदोषस्योद्धारः । उक्तयुक्तेराभासमानत्वेनाप्रयोजकत्वात् । वस्तुतस्तु रूपस्य स्वाश्रयद्रव्यतादात्म्येनापृथक् सिद्धत्वात् तथैवाकाशस्यापि पञ्चीकरणद्रव्यत्वेन रूपावयववत्त्वात् केवलयोस्तयोः प्रतिबिम्बभावो नास्त्येव । गुणिपृथग्भूतरूपस्य अव्याकृताकाशस्य च दृष्टिगोचरत्वाभावात् । तत्प्रतिबिम्बः सर्वथाऽनुपपन्नः । इतरथा निरवयवनीरूपस्यापि शब्दादे रसादौ, रसादेः कालादौ च प्रतिबिम्बभावो दृश्येत न तु तदस्ति । तथा प्रकृतेऽपि अनुमेयम् । ननु नीरूपनिरवयवशब्दस्यापि प्रति॰वनिरूपप्रतिबिम्बदर्शनात्, तथा प्रकृतेऽपि सम्भावनीय इति चेन्न । अनुपपत्तिसाम्यात् । व्यञ्जकतया सन्निधानमात्रेण ध्वनिधर्माणामुदात्तादिस्वराणां वर्णेष्वारोपोपपत्तेर्ध्वनेर्वर्णप्रतिबिम्बोपाधित्वकल्पनायाः निष्प्रमाणकत्वात् । प्रति॰वनिरपि न पूर्वशब्दप्रतिबिम्बः । पञ्चीकरणप्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वनेरेवाकाशशब्दत्वेन तत्प्रतिबिम्बशब्दत्वायोगात् । वर्णरूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबि-

न्यः। वर्णाभिव्यञ्जकध्वनिनिमित्तकप्रतिध्वनेर्मूलध्वनिवदेव र्णाभिव्यञ्जकत्वेनोपपत्तेः। किञ्चास्मिन् पक्षेऽपि स्वानन्तं स्वमात्रिहितस्य चैतन्यप्रदेशस्यान्तःकरणे प्रतिविम्बरूपस्य च्यतया तत्र तत्राऽन्तःकरणस्य गमने विम्बभेदात्। ... स्याऽपि भेदावश्यम्भावेनावच्छेदवादे इव क्षणे क्षणे बन्धमोक्षाव वश्यम्भाविनौ, कृतनाशाकृताभ्यागमप्रसङ्गश्च। ननु सिद्धान्ते उपाधेरणुत्वानङ्गीकारात्, तथात्वे च तस्य सावयवत्वे सिद्धे नोक्तदोषावकाश इतिचेन्न। स्वोक्तिविरोधात्। तथाहि। तद्गुणसारत्वात् तद्व्यपदेश इत्यस्य सूत्रस्य व्याख्याने, अणुविषयिकाणां श्रुतीनाम् उपाधिपरिमाणपरत्वेन व्याख्याय, जीवगताऽणुत्वपरिमाणं निराकृतम्। तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः। तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो, न स्वत इति भाष्यात्। यदि तासां जीवपरिमाणपरत्वमभ्युपेयते तर्हि विभ्वेकात्मवादोदत्ततिलाञ्जलिः स्यात्। अथवा ऽणुत्वविषयिकाः श्रुतयः स्वाभ्युपगतसिद्धान्तयोगक्षेमाय तदुपाधिबुद्धिपरिमाणपरा विवक्षिताश्चेत् तर्हि उपाधेरणुत्वं तत्र श्रीमुखेनैव सिद्धम्। अन्यथोक्तभाष्यस्योन्मत्तप्रलापत्वापत्तेः। श्रुतीनां बाधापत्तेश्च। ननु यद्यज्जन्यं तत्तत्सावयवम्। यन्नैवं तन्नैवम्। ब्रह्मवदित्यन्वयव्यतिरेकाभ्याम्। उपाधेः सावयवत्वमेवेति चेन्न। तस्यानादित्वस्य त्वयैव स्वीकृतत्वेन जन्यत्वासिद्धेः। जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा * अविद्या तच्चितोर्योगः षडस्माकमनादय इति वचनात्। अन्यथोक्तबाधात्। किञ्चोपाधेर्जन्यत्वाङ्गीकारे तदवच्छिन्नानां जीवानामपि जन्यत्वेन कृतनाशाकृताभ्यागमप्रसङ्गस्य दुर्वारत्वात्। किञ्च जीवस्य सादित्वे निर्हेतुकबन्धाङ्गीकारे मुक्तस्यापि भूयः संसारित्वापत्तिः। निर्हेतुकत्वाविशेषात्। प्रलये प्रलये निर्हेतुकमुक्तिप्र-

सङ्गावेति संक्षेपः। किञ्चाऽन्तःकरणादिरूपोपाधिः प्रतिबिम्बासाधारणीभूतो हेतुः, सत्यो वा, मिथ्या वेति विवेचनीयम्। नाद्यः। द्वैतापत्तिमसङ्गात्। अद्वैतसिद्धान्तभङ्गात्। अनिर्मोक्षमसङ्गात्। अपसिद्धान्तात्। परमतप्रवेशाच्च। नाऽपि द्वितीयः। असम्भवात्। अन्यथा मृगमरीचिकाजलेऽपि सूर्यादिप्रतिबिम्बभावो दृग्गोचरः स्यात्। न तु तदस्ति। मकृतेऽपि सर्वथानुपपत्तिरेवेत्यर्थः॥

ननु, एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचन्द्रवत्। आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्। उपमासूर्यकादिवदित्यादिश्रुतिसूत्रसिद्धत्वात् प्रतिबिम्बवादस्य। तदनङ्गीकारे चोक्तशास्त्रबाधापत्तिस्तत्राप्यनिष्टतमेति चेन्न। उपमासूर्यकादिवदित्यादिसूत्रेण प्रतिबिम्बवादं पूर्वपक्षीकृत्य, अम्बुवदग्रहणात्तु तथात्वमिति सूत्रेण सूत्रकृद्भिरेव निजमुखेन निषेधादिति स एवास्माकं समाधानम्। वस्तुतस्तु पूर्वोक्तश्रुतिसूत्रयोरन्तर्यामिदोषाऽसंस्पर्शप्रतिपादनपरत्वान्नोक्तदोषयोगसम्भावनावकाशः। श्रुत्यर्थस्तु, एकधा च बहुधा महश्यते यत्र यत्र तत्र बिम्बेत्यस्मिन् श्लोके वक्ष्यते। किञ्च तवाभिमतं बिम्बभूतं ब्रह्म उपाध्यनन्तर्गतं तदन्तःस्थं वा। नान्त्यः। अन्तःस्थस्य मत्स्यकूर्मादेरिव प्रतिबिम्बाऽदर्शनात्। नाद्यः। तव पक्षे ब्रह्मणोऽविद्यादिबहिःस्थत्वाऽसम्भवात्। तदभ्युपगमे च सदेशत्वापत्तेः, परिच्छिन्नत्वमसङ्गश्च। तथात्वे च मिथ्यात्वं दुर्वारम्। ब्रह्म मिथ्या, सदेशत्वात्। आकाशादिवत्। परिच्छिन्नत्वाच्च घटादिवदिति प्रयोगात्। अवच्छेदपक्षेऽपि कृत्स्नस्यावरणे जगदान्ध्यापत्तिः, एकदेशावरणे सदेशत्वाद्युक्तदूषणयोगेन मिथ्यात्वं च। पूर्ववत् साम्यं, जीवानामितरेतरभोगसांकर्यं चेति। नाप्येकजीववादस्य सम्यक्त्वम्। प्रमा-

णाभावात् । ननु, पुरत्रये क्रीडति देव एकः, एको देव सर्वभूतेषु गूढ इत्यादिश्रुतेरेकैकजीववादपरत्वदर्शनात् । तथाचैक एव जीवः । अन्येषामाभासमात्रत्वात् स्वप्नदृष्टानेकजीववदितिचेन्न । एकत्वे शुकादिमोक्षप्रतिपादकशास्त्रबाधात् । तथात्वे तवाभिमतजीवैकत्वश्रुतेरपि वैयर्थ्याविशेषात् । गुरुशिष्यादिव्यवहारानुपपत्तेश्च । तथाहि । उपदेष्टुर्गुरोर्निश्चिताद्वैतवत्त्वं, न वा । नाद्यः । अद्वैतज्ञानवतः पुंसो द्वैतदर्शनात्मकशास्त्रप्रणयनासम्भवात् । द्वितीये प्रतारकत्वापत्तेः । अन्धपरम्परान्यायापत्तेश्च ॥

किञ्च शुकादीनां यदि मुक्तिर्नासीत् । तर्हि ममापि न भविष्यतीति विश्रम्भेण कस्यापि मुमुक्षोः श्रवणादिमोक्षसाधने निःशङ्का प्रवृत्तिर्न स्यात् । नच शास्त्रप्रामाण्याद्भविष्यतीति वाच्यम् । शुकादिमोक्षशास्त्रवैयर्थ्यवदस्यापि शास्त्रस्य वैयर्थ्यं स्यादेवेति शङ्कासम्भवात् । श्रवणादिमोक्षसाधनबोधकं शास्त्रं व्यर्थम् । अर्थवादत्वात् । शुकादिमोक्षप्रतिपादकशास्त्रवत् । मयाऽऽचरितं श्रवणादि मोक्षसाधनं व्यर्थम् । मोक्षासाधकत्वात् । शुकाद्यनुष्ठितसाधनवदित्यनुमानात् । यदि त्वदभिमतसर्वज्ञानां गौडपादादीनां मुक्तिर्नासीत् तर्हि तदुपदेशात् तव मोक्षः कथं भविष्यतीति त्वमेव विचारय ॥

पूर्वोक्तश्रुत्यर्थस्तु पुरत्रये जाग्रदाद्यवस्थावच्छिन्नदेहत्रये एक एव जीवात्मा, न त्ववस्थाभेदाज्जीवभेदः । कृतनाशाकृताभ्यागमप्रसङ्गादिति प्रथमवाक्यार्थः । एको देव इत्यादिवाक्यं ब्रह्मविषयकम् । सर्वव्यापित्वान्तरात्मत्वादीनां ब्रह्मासाधारणलिङ्गानां जीवे कथमप्यसम्भवात् । तस्मादप्रामाण्यमेवैकजीववादस्य अंशो नानाव्यपदेशादिति निर्णयशास्त्रात् । औपाधिकभेदवादे तु कायव्यूहस्थले योगिनः सर्वदेहेषु भोग ॰ ॰ . सर्वदेहेषु तत्सुखाद्यनु-

भवापत्तेः । ब्रह्मण एव जीवत्वेन नित्यमुक्तत्वादिश्रुतिव्याकोपाच्च । एकस्यानेकदेहेषु प्रत्यक्त्वपराक्त्वासम्भवाच्च । न चान्तःकरणभेदस्यात्र नियामकत्वमिति वाच्यम् । योगिनः कायव्यूहानामन्तःकरणभेदेऽपि प्रत्यक्त्वपराक्त्वादर्शनात् । प्रत्युताहमित्येव सर्वत्र प्रतीतिदर्शनाच्चेति प्रतिबिम्बावच्छेदयोर्विशेषदूषणानां चोक्तत्वादेव ॥

इतरे तु, जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुत्यर्थमजानन्तः स्वकपोलकल्पनया तामाभासपरतया वर्णयन्त आभासवादं कल्पयन्ति । मायाभास ईश्वरः, अविद्याभासो जीव इति । तत्तुच्छम् । प्रतिबिम्बानुपपत्तिवदस्यापि तथात्वात् । उक्तदोषाणामत्रापि तुल्यत्वात् । आभासश्छायापर्यायविशेषः । ब्रह्मणश्च छायानर्हत्वात् । अच्छायमिति श्रुतेः । श्रुत्यर्थस्तु सर्वेषामपि क्षेत्रज्ञानां ब्रह्मणश्चिच्छक्तिरूपत्वेन तदात्मीयत्वसामान्यात् । तारतम्याभावेऽपि कश्चित् सुकृतप्रधानं चेतनविशेषं, माया भगवदीया ज्ञानरूपा शक्तिः । माया वयुनं ज्ञानमिति कोषात् । यद्वा, मायापरिणामभूतशमदमविवेकादियुक्तत्वात् कार्यकारणाऽभेदविवक्षया ज्ञाने मायाशब्दप्रयोगः । भगवत्स्वरूपगुणादिविषयकोपासनरूपा विद्येति यावत् । विद्ययाऽमृतमश्नुते इति श्रुतेः । तस्या मोक्षकारणभूताया अपि सकामाधिकार्यनुष्ठिताया आभासः फलं तत्प्रसादजन्यपरिच्छिन्नैश्वर्यं, तेनाभासशब्दाभिधेयेनैश्वर्येण ईशं ब्रह्मरुद्रेन्द्रादिपदारोहणार्हं करोति । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, अस्य देवस्य मीढुषो दया विष्णोरेव भवद्ये हविर्भिर्विदद्ध रुद्रो रुद्रीयमहित्वमिति बह्वृचः । सोऽब्रवीद् वरं वृणीष्व अहमेव पशूनामधिपतिरसानीति श्रुतेः । ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ॥

वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् । मापुरादित्यवर्णं तं पुरुषं तमसः परम् । तत्रार्थनामसन्नो वरेषु तान् छन्दयन् श्रीभगवानात्मानं दर्शयित्वा ह्युवाच । येन यः कल्पितो भागः स तथा मामुपागतः * प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् । युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तानिति शुश्रुम । मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत् स्वयम् । ततस्तस्य वरान् प्रीतो ददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव चेति मोक्षधर्मे राजधर्मे च । विश्वरूपो महादेवः सर्वमेधे महाक्रतौ * जुहाव सर्वभूतानि स्वयमात्मानमात्मना । महादेवः सर्वयज्ञे महात्मा हुत्वात्मानं देवदेवो बभूव । विश्वाँल्लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासा इति । नारसिंहे च । ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा * स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादत इति । वैष्णवे च । ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् * प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रतेति स्मृतिभ्यश्च । एतेनैव, हिरण्यगर्भः समवर्तताऽग्रे, आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत, एको हि रुद्रो न द्वितीयाय तस्थुः, यो देवानां प्रभवश्चोद्भवश्च, शिव एव केवलः, इन्द्रो मायाभिः पुरुरूप ईयते इत्यादयः श्रुतयोऽपि व्याख्याताः । तासां भगवदाराधनजन्यप्रसादोन्मुखतत्संकल्पलभ्यपरिच्छिन्नैश्वर्ययोगविधानपरत्वात् । तथाभूतैश्वर्यस्य मायाजन्यत्वात् तद्योगेन ईशशब्दाऽभिधेयं करोतीत्यर्थः । सर्वेष्वपि लोकपालेषु ब्रह्मरुद्रादिष्वीशशब्दप्रयोगस्य तत्र तत्र दर्शनात् ॥

किञ्च, कञ्चिच्चेतनविशेषं जीवं करोति अविद्या चेति । अत्र अविद्या नाम अनादिपुण्यात्मकं कर्म । विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इति श्रुतेः ।

अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते इति स्मृतेश्च । तस्या आभासः फलं देवतिर्यङ्मनुष्यादिदेहः स्वर्गनरकादिप्राप्तिसुखादिप्राप्तिस्तेन जीवं करोति, तद्भोगार्हदेवादिशरीरयुक्तं करोति । माया चाऽविद्या च स्वयमेव भवतीति तयोर्भगवद्विभूतित्वेनानादित्वात् । ननु यदि मायाशब्दो भगवद्रुपासनवाचकस्तर्हि तस्यानादित्वं कथमिति चेन्न । कार्यकारणयोरभेदविवक्षया न विरोध इति ज्ञेयम् । तत्र कार्यरूपेण जन्यत्वेऽपि कारणात्मना चानादित्वाभोक्तदोषाऽवकाश इति भावः । तथाचोक्तं श्रीकाश्मीरिचरणैः । सेवज्ञानां सर्वेषामपि भगवतो ब्रह्मणश्चिच्छक्तित्वेनाविशेषाज्ज्ञानादितारतम्यप्रकाशनात्मकेन मायाभासेन पुण्यादिकर्मरूपाविद्याभासेन च स्वाभासेन जीवेशौ जीवं मनुष्यादि, ईशं ब्रह्मरुद्रेन्द्रादि करोति भासयति, ज्ञानशक्त्यैश्वर्योपचारेणेति जीवेष्वेव ज्ञानादितारतम्येनोभयविधसंज्ञेति तात्पर्यार्थः । अन्यथा परमेश्वरस्यैव श्रीपुरुषोत्तमस्य मायाकार्यत्वाभ्युपगमे सर्वो वेदान्तो दत्ततिलाञ्जलिः स्यात् । यः सर्वज्ञः सर्ववित्, तद्दु नात्येति कश्चन, तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं, न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिकदम्बबाधात् । किञ्च, जीवस्वरूपस्यापि जन्यत्वाऽभ्युपगमे, न जायते म्रियते वा विपश्चित्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इत्यादिश्रुतिव्याकोपः । कृतनाशाकृताभ्यागमप्रसङ्गः । सृष्ट्यादिव्यवस्थाभावप्रसङ्गश्च । तस्मादुक्तसिद्धान्त एव वरीयान् । तमीश्वराणामिति श्रुत्यैव परिच्छिन्नैश्वर्यवत्त्वं सादित्वं च, परतन्त्रत्वं च बहुवचनप्रयोगेणैव सिद्धम् । स्पष्टं श्रूयते चान्यत्र । एको ह वै नारायण आसीन्न ब्रह्मा नेशान इत्यादिना प्रागभाव-

तियोगित्वं, नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते इत्यादिना जन्यभावश्रुतेः। नारायणादिशब्दाभिधेयस्य श्रीपुरुषोत्तमस्येश्वरेश्वरस्य तु कुत्रापि प्रागभावादिप्रतियोगित्वाश्रवणान्न तत्र परकार्यत्वादिशङ्कावकाश इति। यद्वा, जीवेशशब्दावत्र समष्टिव्यष्टिविधानपराविति केचित्। स वै शरीरी प्रथमः स वै पुरुष उच्यते, हिरण्यगर्भः समवर्त्तताग्रे इत्यादिश्रुत्या तस्यापीश्वरकोटौ वक्तुं शक्यत्वाद् इत्याहुः। तदपि बोध्यम्। अलं विस्तरेण। दृष्टिसृष्टिवादस्याग्रे निरस्यमानत्वात्॥

वस्तुतस्तु, देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणो ज्ञानस्वरूपो ज्ञाताऽहमर्थरूपः परमेश्वरायत्तस्वरूपस्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिदेहं भिन्नोऽनन्तव्यक्तिर्बन्धमोक्षार्हश्चेतनपदार्थ इति सिद्धान्तजाह्नव्यां श्रीदेवाचार्यपादोक्तेः प्रत्यगात्मात्रानुसन्धेयः।

तत्र, भूतचतुष्टयमेवात्मेति लोकायतिकाः॥ १॥ देह एवात्मेति चार्वाकाः॥ २॥ देहातिरिक्तस्तत्परिमाणक इति दिगम्बराः॥ ३॥ इन्द्रियाण्येवात्मेति तदनुयायिनः॥ ४॥ मन एवात्मेत्यन्ये॥ ५॥ क्षणिकविज्ञानमेवात्मतत्त्वमिति योगाचार्याः॥ ६॥ ज्ञानाकारानुमेयः क्षणिकबाह्यार्थ एवात्मतत्त्वमिति सौत्रान्तिकाः॥ ७॥ क्षणिकबाह्यार्थ एवेति वैभाषिकाः॥ ८॥ शून्यमेवात्मतत्त्वमिति माध्यमिकाः॥ ९॥ तद्व्यावृत्त्यर्थं देहेन्द्रियेत्यादि प्रतिविशेषणम्। तथाच प्रयोगाः। भूतचतुष्टयं नात्मा, कार्यत्वात्। घटादिवत्॥ १॥ देहो नात्मा, भौतिकत्वात्। घटादिवत्॥ २॥ इन्द्रियाणि नात्मा, करणत्वात्। कुठारादिवत्॥ ३॥ मनो नाऽऽत्मा, अन्तःकरणत्वात्। बाह्यकरणवत्॥ ४॥ बुद्धिर्नात्मा, अन्तःकरणत्वात्। मनोवत्॥ ५॥ देहपरिमाणक आत्मा न, सावयवत्वात्। देहादिवत्॥ ६॥ क्षणिकविज्ञानं नात्मा, क्षणिक-

त्वात् । शब्दादिवत् ॥ ७ ॥ क्षणिकवाह्यार्थो नात्मा, भौतिकत्वात् । घटादिवत् । ॥ ८ ॥ शून्यं नात्मतत्त्वं, जडत्वात् । आकाशवत् ॥ ९ ॥ प्राणो नात्मा, वायुत्वात् । बाह्यवायुवदित्यादयः । तस्माद्वा एतस्मादात्मनो, मनोमयादन्योऽन्तरात्मा विज्ञानमय इति श्रुतेश्च । पञ्च भूतात्मके देहे देही मोहतमोवृतः * अहं ममेति चेत्युचैः कुरुते कुमती रतिम् । आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते । आत्मन्यात्ममयं भावं कः करोति कलेवरे इति स्मृतेश्च । पूर्वोक्ततार्किकमतेऽतिव्याप्तिवारणाय ज्ञानस्वरूप इति । मायावादेऽतिव्याप्तिवारणाय– ज्ञातेति । यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव, अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति, अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मा पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुषः, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्, न हि श्रोतुः श्रुतेः, न हि मन्तुर्मतेः, न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् । विज्ञातारमरे केन विजानीयात्, जानात्येवायं पुरुषः, ज्ञोऽत एव, कर्त्ता शास्त्रार्थवत्त्वादित्यादिश्रुतिसूत्रेभ्यः । ननु ज्ञानाख्यधर्मस्य स्वरूपज्ञानतोऽत्यन्तसाजात्यात् कथमिवाधाराधेयभावः । जले क्षिप्तस्य जलान्तरस्याधाराधेयभावादर्शनादिति चेन्न । विषमदृष्टान्तत्वात् । जलयोर्द्रव्यत्वाद्भेदाऽनुपलब्धिरिष्टापत्त्या । अत्यन्तसाजात्यात् । परन्तु भेदस्य सावयवद्रव्यत्वेन तत्रात्यनुमेयत्वात् । अन्यथा वृद्धिह्रासानुपपत्तेः । प्रकृते तु धर्मत्वधर्मित्वयोरुच्छेदकत्वान्नोक्तदोषावकाशः । मणिद्युमण्यादिष्वाधाराधेयभेदस्य प्रसक्षोपलभ्यत्वाच्च । प्रकृष्टप्रभावान् सूर्य इत्यादिप्रतीतेश्च । नच मण्याद्यवयवेष्वेव प्रभात्वव्यवहारः । सूर्यस्यावयवा एव विशीर्यमाणा लोके व्याप्नुवन्तीति वाच्यम् । कालान्तरे द्रव्यना-

शमसङ्गात् । नच तत्रावयवान्तरोत्पत्तिः कल्पनीयेति वाच्यत् । प्रमाणाभावात् । प्रभातद्वतोर्भेदस्य च प्रमाणसिद्धत्वात् । रामेणाऽनुगता सीता भास्करेण प्रभा यथेति सर्वज्ञश्रीवाल्मीक्युक्तेः । अन्यथा रजतादिसंपुटनिहितायाः कस्तूरिकाया अवयवनाशे कालान्तरे सर्वस्या अपि अनुपलब्धिप्रसङ्ग इत्यलं विस्तरेण ॥

तस्माद्यथा सूर्यतत्प्रभयोस्तैजसत्वाविशेषेऽपि सूर्यत्वप्रभात्वावच्छिन्नतयाऽधाराधेयभावोऽत्र प्रत्यक्षादिप्रमाणसिद्धस्तथा प्रकृतेऽपि उभयोर्ज्ञानत्वसामान्येऽपि धर्मत्वधर्मित्वावच्छिन्नतया तथात्वस्य सामञ्जस्यात् । एतेन बुद्धिवृत्तिप्रतिबिम्बितचेतनस्य ज्ञानत्वोपचार इति निरस्तम् । प्रतिबिम्बानुपपत्तेः पूर्वमेवोक्तत्वात् । किञ्च, वृत्तौ जडात्मिकायां यदि ज्ञानस्योपचारस्तर्हि तेनाज्ञाननिवृत्तिर्दुर्वारा । औपचारिकस्यापि कार्यकारित्वे, आदित्यो यूप इति श्रुत्या सूर्यत्वेनोपचरितादपि यूपात् तमोजाड्यादिनिवृत्तिप्रसङ्गात् । तत्स्वरूपमाह । अहमर्थरूप इति । अहमर्थ एव रूपं यस्य सः । अहं जानामीच्छामीत्यादिप्रत्ययेभ्यः, अहं वै त्वमसि देवते, सोऽहं ब्रह्मास्मीत्यादिश्रुतेः । अस्य विशेषार्थो, ज्ञातताऽपि न च भाति चेतनेऽहम्प्रतीतिविषय इति श्लोकेनाऽग्रे वक्ष्यते । एतेनैव कर्तृत्वमपि निरूपितम् । विज्ञानं यज्ञं तनुते इत्यादिश्रुतेः । नचात्र विज्ञान शब्दो बुद्धिपर इति वाच्यम् । बुद्धेर्जडत्वात् । अन्यथा घटादावपि कर्तृत्वं सम्भावनीयं देवानाम्प्रियेण । जडत्वाविशेषात् । विस्तरार्थः सिद्धान्तसेतुकायां द्रष्टव्यः । एतावता जीवेशयोः साधारण्यं व्याख्यातम् ।

इदानीं वैलक्षण्यद्योतनाय परमेश्वरायत्तस्वरूपस्थितिप्रवृत्तिक इति विशेषणम् । परमेश्वरस्य श्रीपुरुषोत्तमस्यायत्ता अधीनाः स्वरूपस्थितिप्रवृत्तयो यस्य सः । स्वरूपं च स्थितिश्च प्रवृत्तिश्चेति ता इति द्वंद्वः ।

# विज्ञापनम् ।

## बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देयं इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहिते खण्डानि ३ । द्वितीयभागः तृतीयकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ ८ ०
वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचित) खण्डानि ३ ३ ०
टुप्टीका खण्डानि ४ ४ ०
पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति ख० १ ०
व्याकरण मिताक्षरा । श्रीमदन्नम्भट्टप्रणीता खण्डानि १० १० ०
रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ ३ ०
भेदधिक्कार. व्याख्यासहित. श्रीमदप्पयदीक्षितकृ । उपक्रम पराक्रमसहितः खण्डे २ २ ०
बोधसारो नरहरिकृत. तच्छिष्यदिवाकरकृतटीकया स० ख० १० ०
ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता खण्डे २ २ ०
दैवज्ञकामधेनु. अर्थात् प्राचीनज्योतिषग्रन्थ. खण्डानि ३ ३ ०
श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् ।
गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्यया समेतम् खण्डानि १५ १५ ०
तत्त्वशेखर. । श्रीभगवल्लोकाचार्यप्रणीत । तथा—तत्त्वत्रयचुलुक संग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । १ ०
श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम् । यतीन्द्रमतदीपिका च । श्रीगोविन्दाचार्यसूनु-श्रीनिवासाचार्यकृता । सकलाचार्यमतसंग्रहश्च । खण्डे २ २ ०
गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायी-व्याख्या । १ ०
आश्वलायनसूत्रप्रयोगदीपिका । श्रीविद्वद्वरमंचनाचार्यभट्ट-विरचिता । १ ०
काव्यालंकारसूत्राणि । पण्डितवरवामनविरचितवृत्तिसमेतानि कामधेनुसमाख्यव्याख्यासहितानि । १ ०
श्रुत्यन्तसुरद्रुमः । श्रीपुरुषोत्तमप्रसादविरचितः । १ ०

# BENARES SANSKRIT SERIES,

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, Ph. D.

*No. 136*

---

# श्रुत्यन्तसुरद्रुमः ।

सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्यारूपः ।

विद्वद्वरश्रीपुरुषोत्तमप्रसादविरचितः ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसम्प्रदायविदुषा रत्नगोपालभट्टेन संशोधितः ।

## SEUTYANTASURADRUMA

BY

ŚRÎ PURUSHOTTAMA PRASADA,

EDITED BY RATVA GOPÂL BHATTA.

*Fasciculus II.*


BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.*

AND SOLD BY H. D. GUPTA

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1907

# सूचीपत्रम् ।

| | रु० | |
|---|---|---|
| गणपाठः | ० | ४ |
| गोलप्रकाशः | २ | ८ |
| गंगालहरी | ० | १ |
| गुरुसारणी | ० | ४ |
| जातकतत्त्वम् | [illegible] | १२ |
| तत्त्वदीपः | ० | १ |
| तर्कसंग्रहः | ० | १ |
| दत्तकमीमांसा | ० | ८ |
| धर्मशास्त्रसंग्रह | ० | १ |
| धातुपाठ ( शिला -) ) | ० | २ |
| धातुरूपावली | ० | २ |
| परिभाषापाठः | ० | [illegible] |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ |
| प्रथम परीक्षा | ० | २ |
| प्रथमपुस्तक हिन्दी | ० | १ |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ |
| मनोरमा शब्दरत्नसहिता ( [illegible] ) | ७ | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० |
| लक्षणावली | ० | २ |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० |
| वसिष्ठसिद्धान्तः | ० | १ |
| विष्णु सहस्रनाम | ० | १ |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० |
| शब्दरूपावली | ० | १ |
| शृङ्गार सप्तशती | १ | ८ |
| समासचक्रम् | ० | १ |
| समासचन्द्रिका | ० | १ |
| सरस्वतीकण्ठाभरणम् | ३ | ० |
| सांख्यचन्द्रिका टिप्पणीसहिता | ० | ८ |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | २ | ८ |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ८ |
| उपसर्गवृत्ति | ० | १ |
| क्षेत्रकौमुदी | ० | ६ |
| क्षेत्रसंहिता | २ | ० |

स्वरूपसम्बन्धिन्यौ स्थितिप्रवृत्ती इति वा विग्रहः । सर्वत्र स्वर्गनरकादिदेशेषु सर्वदा गर्भजन्ममरणबाल्ययुवजराद्यवस्थासु बन्धमोक्षयोश्च सर्ववस्तुविषयकज्ञानक्रियादौ च स्वातन्त्र्यशून्य इत्यर्थः । ननु यदीश्वरस्यैव सर्वथा प्रयोजककर्तृत्वाभ्युपगमस्तर्हि वैषम्यनैर्घृण्यादिदोषप्रसक्तिर्दुर्वारा । पुण्यापुण्यफलभोक्तृत्वयोगप्रसङ्गश्चेति चेन्न । वैषम्यादीनां कर्मसापेक्षत्वान्न तत्र योग इति ब्रूमः । वैषम्यनैर्घृण्ये न सापेक्षत्वात् इति सूत्रात् । यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवतीति वाजसनेयाम्नायाच्च । नाऽपि, तत्रपुण्यापुण्ययोगशङ्कावकाशः । अस्पृष्टदोषस्वभावत्वात् । स कारयेत् पुण्यमथाऽपि पापं, न तावता दोषवानीशिताऽपीति श्रुतेः । ननु तर्हि कर्मण एव प्रयोजकत्वमङ्गीकार्यं, किमीश्वरेण । गौरवप्रसक्त्वादित्येवं । तस्य जडत्वात् । जडस्यापि प्रयोजकत्वादियोगाङ्गीकारे घटादावतिप्रसङ्गो दुर्वारः । जडत्वसाम्यात् । यदि तस्य सर्वज्ञानशक्तियोगाङ्गीकारस्तर्हि परमेश्वर एव स्यात् । संज्ञामात्रेणैव भेदोऽवशिष्येत । स चास्माकमभीष्ट एव । तच्च नास्त्येव । कर्मणां क्षणिकत्वयोगस्य त्वयाऽपि स्वीकारात् । नच कर्मणः प्रलये नाशात् कथं तत्सापेक्षत्वमिति वाच्यम् । कर्मणामनादित्वात् । अन्यथा सृष्ट्यभावप्रसङ्गात् । कृतनाशाकृताभ्यागमप्रसङ्गाच्च । न कर्माविभागादितिचेन्नानादित्वादिति सूत्रात् । तत्सिद्धं पुण्यादिप्रयोजकत्वेऽपि पुरुषोत्तमस्य निर्दोषत्वमिति । ननु यद्येवं तर्हि शास्त्राचार्योपदेशस्य तदुक्तसाधनानुष्ठानस्य च वैयर्थ्यापत्तिः । प्रत्यगात्मना परप्रयोज्यत्वाभ्युपगमादिति चेन्न । उपदेशशास्त्रादेर्भगवदायत्तस्वरूपस्थितिप्रवृत्त्यादिविषयकज्ञानशून्याधिकारिकत्वान्न कश्चिद्दोषावकाशः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति, एष एव साधु क-

यं कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष एवाऽसाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते । अज्ञो जन्तुरनीशश्च आत्मनः सुखदुःखयोः * ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वेत्यादिश्रुतेः । परात्तु तच्छ्रुतेरिति सूत्रात् । अश्वमेधपर्वणि व्यासः—'युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मनः * न हि कश्चिदयं मर्त्यः स्ववशः कुरुते क्रियाः । ईश्वरेण प्रयुक्तोऽयं साध्वसाधु च मानवः । करोति पुरुषः कर्म तत्र का परिदेवना । मोक्षधर्मे प्रह्लादः— यदि स्यात् पुरुषः कर्ता शक्रस्यात्मश्रेयसे ध्रुवम् * आरम्भास्तस्यसिद्धेयुर्न तु जातु पराभवेत् । अप्रियस्य च निर्वृत्तिरनिर्वृत्तिः प्रियस्य च । लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः । अनिष्टस्याभिनिर्वृत्तिरिष्टसंवृत्तिरेव च । अप्रयत्नेन पश्यामः केषाञ्चित्तत्स्वभावतः । प्रतिरूपतराः केचिद् दृश्यन्ते बुद्धिमत्तराः । विरूपेभ्योऽल्पबुद्धिभ्यो लिप्स्यमाना धनागममिति । श्रीभगवद्गीतायां च— बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः * भवन्ति भावा भूतानां मत्त एव पृथग्विधा इति स्मृतिभ्यश्च ॥

ननु यदुक्तं मत्यगात्मनां परमेश्वरपारतन्त्र्यं, तदयुक्तम् । तस्य दुःखहेतुत्वात् । सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेदिति निषेधात् । स स्वराड् भवतीत्यादिश्रुतेः । अत एवानन्याधिपतिरिति सूत्राच्च । मुक्तोऽपि दुःखी स्यात् । चेतनत्वे सति परतन्त्रत्वात् । राजसेवकवदित्यनुमानाच्चेतिचेन्न । सर्वत्रापि शास्त्रे मुक्तस्य दुःखसाहित्यनिरतिशयानन्दविधायके; प्रियाप्रिये न स्पृशतः, आनन्दीत्यादिश्रुतिभिर्बाधस्य सुगमत्वात् । सोपाधिकत्वाच्चोक्तहेतोः । उपाधिश्च दुष्कर्मयोगस्वज्ञानितत्वमुख्यादियोगश्च । यत्र दुःखं तत्र कर्मयोगो, वैमुख्यं चेति साध्यव्यापकत्वम् । यत्र पारतन्त्र्यं तत्र कर्मयोगानियमः । मुक्तेषु

भगवत्परतन्त्रेषु व्यभिचारात् साधनाव्यापकत्वमिति लक्षणसमन्वयः । अन्यथा वानरादीनामपि सुखित्वं स्यात् । स्वातन्त्र्याविशेषात् । न तु तदस्ति । अपि तु परमदुःखमेव प्रत्यक्षसिद्धमिति भावः । किञ्चेश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखीत्यादिना स्वतन्त्रभावस्यासुरकोटिसंनिवेशस्मरणात् । पूर्वपठितश्रुतिमन्त्रे अपि कर्माधीनात्मपारतन्त्र्यनिषेधपरे । नाऽन्यो भगवद्व्यतिरिक्तोऽधिपतिर्यस्य स तथोक्तः । अन्यथाऽनधिपतिरित्येवोक्तं स्यात् । किञ्च, स्वेनान्तरात्मना ब्रह्मणा राजते इति स्वराडिति श्रुतिरपि नोक्तार्थपरा, अपि तु ब्रह्मात्मकत्वाभिधानपरैवेत्यलं विस्तरेण । वस्तुतस्तु भगवत्पारतन्त्र्यं प्रत्यगात्मस्वरूपमेव । न हि स्वरूपनाशो मोक्षः । तथात्वे च कस्यापि पुरुषस्य मोक्षार्थे जिज्ञासायां प्रवृत्तिर्न स्यात् । अप्रमाणकत्वाच्च । पुरुषोत्तमपारतन्त्र्यं तु श्रुतिस्मृतिशतसिद्धम् । यदासीत् तदधीनमासीत् । ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् * जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचरम् । मत्तः सर्वं प्रवर्त्तते । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेत्यादिभिः । किञ्च, एष सर्वभूतान्तरात्मेत्यादिना तस्य ब्रह्मात्मकत्वप्रतिपादनेन तन्नियम्यत्वस्य तत्स्वरूपत्वात् स्वरूपापत्तिरेव मोक्षः । स्वेन रूपेणाभिनिष्पद्यत इत्यादिश्रुतेः । किञ्च, सर्वश्रुतिशिरोमूलवेदमात्रस्यापि चोदनक्रियाकर्मविधानेन तस्य पारतन्त्र्यं सुव्यक्तम् । सर्ववेदस्य तच्छासनरूपत्वेन भगवतो नियन्तृत्वप्रतिपादनपरत्वात् । सर्वस्यापि वेदस्य तथात्वे च तन्नियम्यत्वं तदात्मकत्वं च सर्वस्यापि स्फुटतरमित्यवगन्तव्यम् । मनुश्चाह— योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते * यः करोति तु कर्माणि स भूतात्मोच्यते बुधैरित्यादिना । तद्विशेषोऽपि तेनैवोक्तः । जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् * येन वेदयते सर्वं सुखं दुःखं च ज-

न्मस्विसादिना । इत्यलं विस्तरेण । पराचु तच्छ्रुतेः, अज्ञो जन्तुरनीशश्चेत्यादेः शास्त्रस्य पूर्वमेवोक्तत्वात् ॥

अथ जीवेशयोर्विशेषान्तरं स्फोरयन् परिमाणविवादनिरासार्थं विशेषणं संगृह्णाति ॥ अणुपरिमाणक इति ॥ अणुमात्रं परिमाणं यस्य सः । तथाच अणुपरिमाणाश्रय इत्यर्थः । नन्वेवं सर्वावयवगतसुखदुःखाद्यनुभवयौगपद्यव्यवस्थाहानिः । तस्य शरीरैकदेशविशेषे स्थैर्यनियमादिति चेन्न । धर्मिणोऽणुत्वेऽपि तदाश्रितधर्मभूतज्ञानस्य विभुत्वात् । यथा अणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य प्रकाशो व्याप्तः । व्याप्तो वै पुरुष इत्यादिश्रुतेः । तद्गुणसारत्वात्तु तद्व्यपदेश इति न्यायात् । यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः * क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेति दृष्टान्तोपपत्तिसहकृतश्रुतिस्मृतिसूत्रेभ्यः । नच प्रकाशादेर्धर्मस्य स्वाश्रयं विना व्याप्त्यऽसंभव इति शङ्कनीयम् । दीपं विना तत्प्रभाया, वह्निं विना तदौष्ण्यादेः, पुष्पं विना तद्गन्धस्य व्याप्तिः प्रत्यक्षागमाभ्यां सिद्धतरा । धर्मिणं विना जातिसमवायादीनां व्याप्तिरन्यैरपि स्वीकृता च । एतेन क्वचिद्विभुविषयकश्रुतिस्मृतिपाठस्यापि नैराकाङ्क्ष्यं व्याख्यातम् । विभुधर्माश्रयाणां तथात्वस्य शक्त्यैवावगमान्मुख्यत्वमेवेत्सर्थः । तत् सिद्धमात्मनामणुपरिमाणाश्रयत्वम् । अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश, अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं पापं, वालाग्रशतभागस्य शतधा कल्पितस्य च * भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते इत्यादिश्रुतेः । उत्क्रान्तिगत्यागतीनाम् । नाऽणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदित्यादिसूत्राच्च । ब्रह्माण्डे, अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति * यथा व्याप्य शरीराणि हरिचन्दनविप्रुष इति स्मृतेश्च । ननु, बुद्धे-

र्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट इति श्रुतेः, बुद्धेर्गुणेनोपाधिपरिमाणेनात्मा आराग्रमात्रः परिच्छिन्नः अणवादिशब्दाभिधेयः, आत्मगुणेन तु अवरो विभुपरिमाणक इत्यर्थाद्विभुरेवात्मा । अणुत्वं तु तस्य बुद्ध्युपाधिप्रयुक्तम् । उक्तशास्त्रस्यापि स एव विषय इतिचेन्न । श्रुत्यर्थस्यान्यथात्वात् । तथाहि । बुद्धेर्गुणेन परिमाणेन तथैवात्मगुणेन स्वरूपपरिमाणेन अवरः परमेश्वरादन्यो जीवात्मा । हि यस्मादाराग्रमात्रस्तस्मात् सूक्ष्मबुद्धिभिर्दृष्टोऽनुभूत इत्यर्थः । आराग्रमात्रोपलक्षिताऽणुपरिमाणकः । अवधारणोऽपोगव्यवच्छेदार्थकः । अणुपरिमाणक एवेत्यर्थः । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति श्रुतेः । अन्यथोक्तश्रुतीनां बाधो नालोच्यते वैदिकाभिमानिभिः । किञ्च, अवरशब्दप्रयोगादीश्वरस्य परत्वसिद्ध्या तयोर्भेदस्यापि स्वाभाविकत्वमुक्तं भवति । परावरशब्दयोरन्योन्यसापेक्षत्वात् । अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिना यस्य संमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद् गुणौघैः स्रूयमानः कलुषीकृतश्चेति मैत्रेयोपनिषच्छ्रुतेरलं मासाङ्किकेन । मध्यमपरिमाणपक्षेऽस्यप्रत्यगात्मनोऽनित्यत्वापत्तेः, कृतनाशाकृताभ्यागमप्रसङ्गश्च महत्पापीयस्त्वम् । तस्य बाह्यपक्षत्वात् । वैभवपक्षे दोषाणां पूर्वमेवोद्घाटितत्वादनुपपत्तिरेव ॥

नन आत्मनोऽणुपरिमाणवादेऽपि सुखदुःखाद्यनुभवे व्यवस्था दुर्निरूप्यैव । आत्मद्वाचिविभुपरिमाणकधर्मज्ञानेन स्वशिरःपाण्यादिगतसुखदुःखाद्यनुभूतिवत् परशरीरगतसुखदुःखाद्यनुभवो दुर्वारः । ज्ञानव्याप्तेस्तत्रापि सत्त्वात् । सर्वजीवनिकायस्य सुखदुःखादेः सर्वेषामप्यवश्यमनुभाव्यत्वमेव । अस्मदादिपक्षवत् तुल्यदोषत्वाद्भोगसाङ्कर्यद्वारोऽस्मदीयसिद्धान्त एवेति चेन्न । अनाकु-

लित्वात् । तथाहि । अस्मत्सिद्धान्ते, अज्ञानेनावृतं ज्ञानम्, आवृतं ज्ञानमेनेनेति मानाद् आत्मज्ञानस्य विभुत्वेऽपि बद्धावस्थायां कर्मात्मकाऽज्ञानावृतत्वेनेन्द्रियसन्निकर्षसापेक्षत्वात् । यस्येन्द्रियविषयसन्निकर्षस्तस्यैवानुभवो, नान्यस्य । तथाच देवदत्तस्य स्वशरीरगतसुखदुःखादेः स्वान्तःकरणसन्निकृष्टत्वात् तस्य साक्षात्कारो, न यज्ञदत्तशरीरगतानां सुखादीनाम् । तेषां स्वकरणसन्निकर्षाऽभावात् । मोक्षावस्थायां तु तदावरकाज्ञानस्य ध्वंसात् सर्वविषयकानुभवस्येष्टापन्नत्वात् । सर्वं ह पश्यः पश्यतीति श्रुतेः । परपक्षे तु आत्मस्वरूपस्यैवानुभवितुस्तत्र तत्र सत्त्वात् सुखदुःखादिभोगसाकर्य्यं दुर्वारमिति संक्षेपः ॥

अथ संख्याविप्रतिपत्तिवारणाय विशेषणान्तरं गृह्णाति ॥ प्रतिशरीरं भिन्न इति ॥ ब्रह्मादिस्थावरान्तेषु तं तं प्रत्येकैको विलक्षणस्वरूप इत्यर्थः । एतेन परमात्मनो जीवानां च महद्वैलक्षण्यमुक्तम् । सर्वगतस्य ब्रह्मणः सर्वत्रैकत्वात् । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति श्रुत्यैव विशेषस्य दर्शितत्वात् । अनेनैव जीवानामपीतरेतरस्वरूपभेदश्च स्पष्ट एव । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति श्रुत्यन्तरात् । एतेनैकजीवपक्षो निरस्तः । स च पूर्वमेव दर्शितः । अन्यथा ह्येकस्मिन्नपि जीवात्मनि सुप्ते मूर्छिते मृते चाऽखिलजीवनिकायस्याप्रतीत्यापत्तेः । देवदत्ते मूर्छिते वयं पश्यन्त आस्मेति प्रत्ययविरोधाच्च । अथ तेषां संख्यातोऽनन्तत्वं दर्शयन्नाह ॥ अनन्तव्यक्तिरिति ॥ संख्यानिरूपितावसानशून्या व्यक्तयो यस्य स इत्यर्थः । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । अंशो नानाव्यपदेशादिति । न त्वेवाहं जातु नाऽसं न त्वं नेमे जनाधिपाः ॥ नचैव न भविष्यामः सर्वे वयमतः परम् । अङ्गुलस्याष्ट-

मो भागो न सोऽस्ति मुनिसत्तम * न सन्ति प्राणिनो यत्र निजकर्मनिबन्धना इत्यादिश्रुतिस्मृतिसूत्रेभ्यः । एतावता विशेषणसंदर्भेण सर्वेषामपि जीवात्मनां स्वरूपगुणपरिमाणसंख्याभिः साधारण्यं निरूपितं मनसि निधाय तेषां विशेषजिज्ञासायामाह ॥ नित्यमुक्तजनतासुसेवितइति॥ नित्याश्च मुक्ताश्च नित्यमुक्तास्तेषां जनता समूहस्तया सुसेवितः=सुष्ठु नितरां सेवितः । तदाश्रितार्चनादिविषयो भवानस्ति । सदैव तद्दृष्टिविषयत्वात् । तत्र नित्यत्वं नाम— त्रैकालिकसंसारदुःखत्वावच्छिन्नात्यन्ताभाववत्त्वे सति सदैव स्वभावतः परानुभावितस्वस्वरूपगुणादिविषयकानुभवानन्दवत्त्वम् । तत्र मुक्तेष्वतिव्याप्तिवारणाय, त्रैकालिकपदम् । मुक्तानां मुक्तेः प्राक् संसारदुःखानुभवोऽभूत् ।

किञ्च, ब्रह्मणोऽपि त्रैकालिकदुःखात्यन्ताभाववत्त्वे सति सदैव स्वभावतः स्वस्वरूपगुणादिविषयकानुभवानन्दस्य सत्त्वात्तत्रातिव्याप्तिशङ्कासंभववारणाय परानुभावितमितिपदम् । तत्र परानुभावितत्वाऽभावात् । सदा पश्यन्ति सूरय इति श्रुतेः । भुवासोऽस्य कीरयो जनास इति ऋग्वेदे, कीरय आत्मनिक्षेपकर्तारः । तत्र विष्वक्सेनजयविजयादयः पार्षदाः । गरुडशेषादयो यानासनानि । शङ्खचक्रगदाधनुर्बाणहलमुसलादय आयुधाः । वेणुशृङ्गादयो वाद्याः । किरीटकुण्डलकौस्तुभवैजयन्तीवनमालाकेयूरकटकाङ्गुलीयपीताम्बरादीनि आनन्तर्याख्यानि भूषणादीनि । तेषां चैतन्ये, च तद्वा एतन्महाचक्रं सर्वकामकं मोक्षद्वारम् ऋङ्मयं यजुर्मयं साममयम् अमृतमयं तस्य पुरस्ताद्ब्रह्म आसते इत्यारभ्य, नाभौ सूर्याचन्द्रमसौ इत्यन्ते विश्वरूपविभायकश्रुतिः । यस्यारेषु च शक्राद्या लोकपाला व्यवस्थिताः * रुद्रादित्यादिमरुतां साध्यानां च विशाम्पते । मन्त्रिभान निरीक्ष्याऽसौ दैत्यानां विस्मितोऽभवदित्यादिविष्णुधर्मत-

चनं च । वैष्णवे च— गदतो मम विप्रर्षे श्रूयतामिदमादरात् ॥ नरावतारे कृष्णेन दग्धा वाराणसी यथा । प्रभूतपौरभृत्या तु साऽश्वमातङ्गमानवाम् । ज्वालापरिकृताशेषगृहप्राकारचत्वराम् । ददाह तद्धरेश्चक्रं सकलामेव तां पुरीम् । वाल्मीकीयरामायणे च । शरा नानाविधाश्चाऽपि धनुरायतविग्रहम् ॥ अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहा इत्यादि शास्त्रं प्रमाणत्वेनानुसन्धेयम् । मुक्तत्वं नाम, अनादिकर्मात्मकाविद्याकृतप्रकृतिसम्बन्धतत्कार्यदुःखादितत्साधनदेहादिरूपबन्धविनिर्मुक्तत्वे च सति भगवद्भावमापन्नत्वम् । परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, जक्षत्क्रीडन् रममाण इत्यादि श्रुतेः । मम साधर्म्यमागताः, पूता मद्भावमागता इत्यादिस्मृतेश्च । ते शुकादयोऽनुसन्धेयाः । तथाच भारते, सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च ॥ जगाम भित्त्वा मूर्द्धानं दिवमित्युत्पपात ह इति । इत्थम्भूतैर्नित्यगणैर्मुक्तगणैश्च नित्य सुसेवितो भवान् इत्यर्थः ॥

बद्धानां व्यावृत्तये हेतुमाह ॥ अमाययेति ॥ मायावरणबहिःस्थत्वात् तेषामित्यर्थः । इतरेषां तु तदावरणान्तःस्थत्वात् तथात्वम् । किञ्च, बद्धानामपि गतिर्भवानेवेति निरूपयन् पूर्वोक्तविशेषणेष्वत्राशिष्टं बन्धमोक्षाह इति पदं व्याकुर्वन्, पराभिध्यानात्तु तिरोहितं ततोऽस्य बन्धविपर्ययाविति सूत्रार्थमाह ॥ बद्धजीवदयया ऽक्षगोचर इति ॥ बद्धजीवविषयिकया स्वासाधारणगुणरूपया दयया तेषामप्यक्षगोचरो भूत्वा तानपि शास्त्राचार्योपदिष्टसाधनसम्पन्नाननुगृह्णानीति वाक्यार्थः । अनादिकर्मात्मकाविद्याजन्यदेवतिर्यङ्मनुष्यादिदेहेष्वात्मात्मीयाभिमानेन संसारचक्रभ्रमणजन्यदुःखानुभूतिमान् बद्धः। स च श्रीभगवन्निर्हेतुककृपाकटाक्षाऽवलोकित आचार्यदेवो भूत्वा तन्मुखनिर्झरितसच्छास्त्रसिद्धान्त-

सुधासम्प्लावितो निरस्तसमयादिसंसारबन्धरोगो भगवत्स्वरूपगुणादिविषयकध्यानसन्ततिपरिपाकजन्यसाक्षात्कारनिरस्तकर्मबन्धो भगवद्भावापत्तियोग्यो भवतीत्यर्थः । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुतेः । साधनक्रमश्चाग्रे वक्ष्यते ॥

ननु पारमेश्वरीया कृपा परिच्छिन्ना, सर्वगता वा । नाद्यः । अकिञ्चित्कारित्वात् । न द्वितीयः । सर्वमोक्षप्रसङ्गादितिचेन्न । आपातोक्तेः । न तावद् वस्तुसत्तामात्र मोक्षासाधारणकारणम् । अपि तु तद्विषयीभावः । कृपाया व्यापकत्वेऽपि तद्विषयीभूतस्यैव पन्थानिर्वृत्तिर्नान्यस्यातो नोक्तदोषावकाशः ।अन्यथा, ब्रह्मणः सर्वगतत्वं सर्वेषामपि निर्विवादम् । तथाच तस्य सर्वान्तर्बहिःस्थत्वेन सर्वेषामपि प्राप्तत्वात् सर्वमोक्षप्रसङ्गः किं न शङ्क्यते भवद्भिर्नैर्दिक्ताभिमानिभिर्देवानाम्प्रियैः । नच तस्य ब्रह्मण. सर्वगतत्वेऽपि तद्विषयकसाक्षात्काराभावान्न सर्वेषां मोक्ष इति वाच्यम् । तथा प्रकृतेऽपि साम्यात् । यथा हिरण्यादिनिधिः पित्रादिभिर्गृहे खनित्वा निहितोऽपि तद्वश्यास्तदज्ञानेन तमप्राप्य दारिद्र्यभाजो यतस्ततो द्रव्यमभिकाङ्क्षन्तो भ्रमन्ति तथा भगवदीयगुणाना मोक्षासाधारणहेतुत्वेऽपि लौकिकैरनभिज्ञायमानत्वात्तदविषयीभूता संसरन्तीति न कश्चिच्छङ्काकल्पनावकाशः । ननु भगवदीयाऽनुग्रहादिगुणकदम्बः साधनान्तरसापेक्षः, स्वतन्त्रो वा । नाद्यः । अन्योन्याश्रयात् । अप्राधान्यापत्तेश्च । नाऽपि द्वितीयः । सर्वत्र प्राप्तिप्रसङ्गादितिचेन्न । तस्य निरपेक्षत्वे तत्र नैर्घृण्यादिदोषप्रसङ्गवारणाय साधनान्तरतत्प्रतिपादकशास्त्रबाधानिर्वृत्तये च साधनान्तराणामपि व्याजमात्रेण स्वीकारान्नोक्तदोषप्रसङ्गः । न हि व्याजमात्रस्य वस्तुस्वातन्त्र्यहानिकर्तृत्वशक्तिः । अतिप्रसङ्गात् । तस्मात् साधनान्तरं व्याजीकृत्य स्वतन्त्रमेव फलदातृत्वार्हो भगवदीयानुग्रहादिस्तद्वि-

स्तारश्चाकरे द्रष्टव्य इत्यलं प्रासङ्गिकोक्त्या । उक्तं चाचार्यपादैः । कृपाऽस्य दैन्यादियुजि प्रजायते इति । यद्वा, अमाययेति पदं दयाविशेषणम् । न मायासम्बन्धो यत्र सा अमाया तया दययेति यावत् । तथाचावतारदशायामाबालैर्भगवतः साक्षात्कारेऽपि तेषां मोक्षाभावो न विरोधावहः । नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥ मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो ममाव्ययमनुत्तमम् । अवजानन्ति मां मूढा मानुषीं तनुमाश्रितमित्यादि स्वयमेवोक्तत्वात् । नचैवं भगवति वैषम्यादिप्रसक्तिः कल्पनीया । वैषम्यहेतोः पुरुषस्वभावविशेषस्य जीवनिष्ठत्वाश्च तत्र तद्गन्धाऽवकाशः ॥

नित्यमुक्तादिभ्यस्त्वे हेतुमाह ॥ देशकालगुणवस्तुतो बृहन्निति ॥ देशकालगुणवस्तुभ्यस्तदात्मत्वतदाधारत्वतद्व्यापकत्वादिहेतुभिर्बृहन् अधिकतम इत्यर्थः । देशकालादिपरिच्छेदशून्य इति यावत् । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतेः । कृपामुद्दीपयन् सम्बोधयति ॥ हे बल्लवीप्रियेति ॥ बल्लव्यो नन्दगोपव्रजस्त्रियस्ताः प्रिया निरतिशयप्रीतिविषया यस्य सः । तासां बल्लवीनां प्रियः प्रेष्ठ इति तत्पुरुषो वा । तथाभूतो भवान् पुरुषोत्तमः सर्वस्य जीवनिकायस्य गतिरिति वाक्यार्थः ॥ ११ ॥

इति श्रीहयग्रीवाऽनुग्रहाश्रितेन श्रीनियमानन्दाऽनुगेन
पुरुषोत्तमप्रसादाख्यवैष्णवेन विरचिते सविशेष-
निर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुर-
द्रुमे भत्यकृतत्त्वनिर्णयशाखा
सप्तमी ॥ ७ ॥

## अथ अष्टमी शाखा ।

अथ मुमुक्षूणां भगवत्प्राप्तिमार्गं निर्दिशन् स्तौति ।

भाति चातिनिरुपाधिपद्धति-
र्भक्तकामपरिपूरको विभुः ॥
व्यापकोऽपि परिछिन्नहृद्गतो-
ऽचिन्त्यशक्तिरवबोधवारिधेः ॥ १२ ॥

भातीति ॥ अवबोधवारिधेः सर्वदेशकालवस्तुविषयकाप-रोक्षज्ञानसागरस्य श्रीभगवतो, यः सर्वज्ञः सर्वविदिति श्रुतेः । अ-तिनिरुपाधिपद्धतिर्भाति । शास्त्रेष्वित्यध्याहृत्य योजनीयम् । वि-सर्गाभावपाठे सम्बोधनम् । तथात्वे च, तवेति पदमध्याहरणीय-म् । अतिशयेन निर्गत उपाधिः प्रकृतिसम्बन्धो यस्मात् तन्निरुपा-धि परमं धाम तस्य धाम्नः पद्धतिः । पद्भ्यां हन्यतेऽत्रेति पद्धतिः। हन हिंसागत्योरिति धातोर्गमनमार्गोऽर्चिरादिकः शास्त्रे भातीति योज-ना । अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु नाऽर्चिषमेवाभिसंभ-वन्ति अर्चिषोऽहरह्न आपूर्य्यमाणपक्षम् आपूर्यमाणपक्षाद्यान् ष-डुदङ्ङेति मासान् तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादि-त्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमाव-र्तं नावर्तन्त इति छन्दोगाम्नाये। आदित्यो यान् मासानुदङ्ङेति ता-न् मासानित्यन्वयः। आरण्यके च मासपर्य्यन्तं पाठस्य साम्यं गेयम् । मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतान् पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति यदा वै पुरुषोऽस्माल्लो-कात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्र-

स्य खं, तेन स ऊर्द्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथाऽम्बरस्य खं, तेन स ऊर्द्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं, तेन स ऊर्द्ध्वमाक्रमते स लोकमागच्छत्यशोकमित्यादि । तस्मै स्वलोकमाप्ताय श्रीमुकुन्दानन्याश्रिताय स वायुस्तत्र स्वात्मनि विजिहीते स्वाऽवयवान् विगमयति, आत्मानं छिद्रीकरोति । तेन छिद्रेण द्वारेणोर्ध्वमाक्रमते इत्यर्थः । एवमुत्तरत्रापि बोध्यम् । कौषितक्याम्नाये तु, स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स चन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमित्यादि स आगच्छति विरजां नदीं तां मनसाऽत्येतीत्यादिश्रुतिभ्यः । एतदुक्तं भवति । देहादुत्क्रम्य शताधिकया नाड्या रश्मिभिरेकीकृतया सुषुम्णाख्यया सूर्यरश्मिभिरूर्ध्वमाक्रम्यार्चिषमभिगमनम् । तस्य हैतस्य हृदयाग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति शतं चैका हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीत्यादिश्रुतेः । तेनातिवाहिकेन सन्मुखमेत्य निरतिशयसन्मानं यथा तथोपचारैः समभ्यर्च्यातिवाह्य दिवसं नीतस्तेनापि पूर्वोक्तरीत्या बहुमानार्चनपूर्वकं शुक्लपक्षं नीतस्ततः पक्षोत्तरायणसंवत्सराभिमानिभिर्देवैस्तत्र तत्र बहुमानेनार्चया च सत्कृतः क्रमेण वायुं देवलोकरूपं नीतो, वायुना च तत्रोपचारैः समभ्यर्च्य स्वस्मिँश्छिद्रं दत्त्वा तेन द्वारेणार्कमण्डलं भित्त्वा चन्द्रमसं नीतस्तेन पूर्वरीत्या विद्युल्लोकं तल्लोकाभिमानिदेवविशेषेण तथैव वरुणलोकं नीतस्तेन तथैवेन्द्रलोकं तेन पूजापुरःसरं प्रजापतिलोकं तेन प्रजापतिना पूजितस्तल्लोकमतीत्य प्राकृतमण्डलानि भित्त्वा ततः प्रकृतिविष्णुपदसीम्नोर्विवेचनहेतभूतां सरिद्वरां विरजामेत्य, तत्रा-

ऽमानवान् पुरुषान् स्वातिवाहनार्थमागतान् पश्यति । तत्र विरजातीरे सूक्ष्मं शरीरं प्रकृतिकार्य्यत्वात् तत्कारणे हित्वाऽमानवदर्शनकरस्पर्शाभ्यां तैः सह सङ्कल्पमात्रेण विरजा तरति । परमधामसीमानं प्राप्य तत्र दिव्याऽप्राकृतानादिसिद्धामानवानीतब्राह्मालङ्कारैरलङ्कृतो ब्रह्मलोकं परमपदं प्रविश्य ब्रह्माधिगच्छतीति यावत् । अस्याऽर्थसंग्रहश्लोकाः—

प्राणस्योत्क्रान्तिकाले वै हार्दानुग्रहतो मुनिः ॥
तत्प्रकाशितपन्थानं सुषुम्णाख्यं विशँस्तदा ॥ १ ॥
ब्रह्मरन्ध्राद्विनिष्क्रम्य रश्मीनारुह्यते रवेः ॥
तेन मार्गेण प्रथमं वह्निं याति ततो दिवम् ॥ २ ॥
ततः पक्षं सितं प्राप्य षण्मासान् उत्तरायणम् ॥
संवत्सरं सुरावासं वायुं सूर्यं निशाकरम् ॥ ३ ॥
वैद्युतं वरुणं चन्द्रं तथैव च प्रजापतिम् ॥
तैस्तैर्दैवैस्तत्र तत्र ह्युपचारैः समर्चितः ॥ ४ ॥
तत्तल्लोकानतीत्यैष भित्वा प्राकृतमण्डलम् ॥
अमानवैश्च पुरुषैः प्रापितो विरजां नदीम् ॥ ५ ॥
त्यक्त्वा तत्र शरीरं वै सङ्कल्पेनैव तां तरेत् ॥
दिव्यविग्रहसम्पन्नोऽलङ्कृतोऽमानवैस्तदा ॥ ६ ॥
ब्राह्मालङ्कारवेषेण सत्कृतश्चाप्सरोगणैः ॥
द्वारपालैः समागम्य तत्तत्स्थानमलौकिकम् ॥ ७ ॥
पश्यन् प्रमुदितो याति क्रमेण मणिमण्डपम् ॥
दिव्यरत्नमये दिव्ये चाऽऽसनेऽलौकिके मुदा ॥ ८ ॥
श्रियाऽनुरूपया युक्तं पार्षदैश्चायुधैस्तथा ॥
दिव्यालङ्कारसंपृक्तं श्रीमुकुन्दं च पश्यति ॥ ९ ॥
सच्चिदानन्दमूर्तिं तं कल्याणगुणसागरम् ॥

कृष्णं श्रियादिसहितं प्रणम्य तत्कृपार्द्रया ॥ १० ॥
दृशाऽवलोकितस्तेन भाषितश्च मुदा गिरा ॥
ध्रुवं तद्भावमापन्नो यक्षन् क्रीडँश्च ब्रह्मणा ॥ ११ ॥
गायन् सामानि तत्रास्ते रममाणश्च वैष्णवः ॥
न पुनर्याति संसारं विष्णुलोकं गतो मुनिः ॥ १२ ॥
संप्रदायानुसारेण शास्त्रोक्तेश्च समासतः ॥
अलसानां विवेकार्थं मार्गोऽयं च निरूपितः ॥ १३ ॥

अस्य प्राप्यस्वरूपं चाग्रे वक्ष्यते । एतेन, अर्चिरादिना तत्प्रथितेरित्यादिशास्त्रं व्याख्यातं बोध्यम् ॥

ननु, अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो, न तस्य प्राणा उत्क्रामन्तीत्यादिश्रुतेर्विदुषोऽर्चिरादिगतिरनुपपन्ना । तस्य प्राणोत्क्रमणनिषेधात् । प्राणाभावे गतेरसामञ्जस्यादिति चेन्न । न तस्येत्यत्र तच्छब्दस्य विज्ञानात्मपरामर्शितया शारीरपरत्वम् । तथात्वे विदुषः संबन्धिप्राणोत्क्रमणनिषेधो युक्त एव। नचोत्क्रमणस्यापादाननिरूप्यत्वनियमात् षष्ठीनिर्देशविरोधः । अपादानं तु शरीरमेव, न चेतनः । अन्यथा षष्ठीप्रयोगानुपपत्तेरिति वाच्यम् । अपादानापेक्षायामश्रुताच्छरीरात् संबन्धितया श्रुतस्य शारीरस्यैव सन्निहितत्वेनापादानतया ग्रहणेऽपि दोषायोगात् । किञ्च, जीवसंबन्धितया ज्ञातानां प्राणानां संबन्धसामान्यवाचिकायाः षष्ठ्या अपादानरूपविशेषपरत्वमपि समञ्जसम् । विशेषस्य सामान्यानतिरिक्तत्वात् । नटस्य शृणोतीतिवत् । अन्यथा श्रुतत्यागाऽश्रुतकल्पनापत्तेः । वस्तुतस्तु माध्यन्दिनानामाम्नाये श्रूपमाणापादानस्यैव निगमनात्वाच्च विवादावकाशः । योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात् प्राणा उत्क्रामन्तीति स्पष्टश्रुतेः । प्रतिषेधादितिचेन्न शारीरात्, स्पष्टो ह्येकेषामिति ति-

द्धान्तसूत्रात् । विदुषः शरीरवियोगसमये प्राणवियोगस्यापि मा-प्तत्वात् तस्यैव निषेधः । प्राप्तस्यैव निषेधविषयत्वात् । अन्यथा सूत्रविरुद्धसिद्धान्तस्य कामचारत्वापत्त्या अप्रामाण्यप्रसङ्गात् । किञ्च, श्रुत्यन्तरे विदुषो गत्यनन्तरभावित्वविधानात् प्राणवियोगस्य इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति श्रुतेः । गतिश्रुतयस्तु पूर्वमेवोदाहृताः । भारतेऽपि शुकगतिः स्मर्य्यते । सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च * जगाम भित्त्वा मूर्द्धानं दिवमित्युत्पपात ह । याज्ञवल्क्योऽपि । ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् * ब्रह्मलोकमतिक्रम्य तेन याति परां गति-मिति । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् * तत्र प्र-याता गच्छन्ति ब्रह्म ब्रह्मविदो जना इति श्रीमुखोक्तेश्च ॥

ननु स्यादेतत्, विदुषो गतिस्तथापि तस्याः प्राप्यं तु हिरण्य-गर्भाऽऽख्यं कार्य्यब्रह्मैव, न तु परम् । ब्रह्मविशिष्टदेशपरिच्छिन्न-स्यैव गतिलभ्यत्वनियमात् । न तु सर्वव्यापिपूर्णस्य । ब्रह्मलो-कान् गमयतीति श्रुतेः । प्रजापतेः सभां वेश्म प्रतिपद्यते इति श्र-वणाच्च । कार्य्यं बादरिरस्य गत्युपपत्तेः, विशेषितत्वाच्चेति सूत्रा-दिभिश्चेन्न । परब्रह्मण एव प्राप्यत्वात् । परं ज्योतिरुपसम्पद्येति श्रुत्या परस्यैव प्राप्यत्वविधानात् । न च पुनरावर्तते इति अपुन-रावृत्तिश्रवणाच्च । किञ्च, यथोपायप्राप्यत्वात् फलस्य । यथा क्र-तुरस्मिँल्लोके भवति तथेतः प्रेत्य भवतीति श्रुतेः । न हि परब्र-ह्मोपासकस्येतरप्राप्तिसम्भवः । उक्तन्यायविरोधात् । अर्चिरादिना गतस्य विदुषो , ब्रह्मलोकमतिक्रम्य तेन याति परां गतिमिति * ब्रह्मलोकातिक्रमस्मृतेश्च । किञ्च, धूत्वा शरीरमकृतं कृतात्मेति त-त्प्राप्यभूतलोकस्याकृतत्वश्रवणात् । सत्यलोकस्य तु प्राकृतत्वात् पुनरावृत्तिमत्त्वाच्च । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्ज्जुनेत्या-

दिना । न च गमनानुपपत्तौ प्रमाणम् । श्रीवासुदेवस्य परब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैव निःशेषाविद्यानिवृत्ति-नियमः शास्त्रादवगम्यते । किञ्च, यथा विद्योत्पत्तौ धर्माचारापेक्षानियमो विविदिषाश्रुतेरवगम्यते, तथा निःशेषाविद्यानिवृत्ति-रूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति शब्दादेव निश्चीयते । यदुक्तं, ब्रह्मलोकानिति लोकशब्दबहुवचनाभ्यां विशेषणात् कार्यब्रह्मप्राप्तिनिश्चय इति । तदविचारितम् । निषादस्थपतिन्यायेन ब्रह्मैव लोक इति समासः संगच्छते । बहुवचनमपि तत्प्रदेशबाहुल्याभिप्रायकम् । तन्महिमरूपत्वेन सन्मानाभिप्रायं वा । स भगवः ? कस्मिन् प्रतिष्ठिते, स्वेमहिम्नीति श्रुतेः । तस्मात् परमेव प्राप्नोतीति सिद्धम् । यद्वा ॥ भाति चाऽतिनिरुपाधिपद्धतिरिति ॥ अत्यन्तोपाध्यसंस्पृष्टमाहात्म्यस्य श्रीवासुदेवस्य पद्धतिः, पद्यते इति पदं स्वरूपं तस्य, हतिः=हन्यते गम्यते ज्ञायते प्राप्यते चाऽनयेति पद्धतिस्तत्स्वरूपगुणादिविषयकज्ञानप्राप्त्योः साधनसंपत्तिः, कर्मज्ञानभक्त्यादिरूपेति यावत् । कर्मयोगस्त्रिविधः— नित्यनैमित्तिककाम्यभेदात् । तत्राऽहरहः संध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहोतीत्यादिश्रुतिभिर्नित्यतया विधीयमानं नित्यम् । तच्च संध्योपानस्नानतर्पणादियज्ञदानाध्ययनादिरूपं च । तत्र यज्ञदानाध्ययनानि त्रैवर्णिकद्विजातिसाधारणानि । याजनाध्यापनादीनि च द्विजाग्र्यासाधारणानि । तथाचाह मनुः— अध्ययनमध्यापनं यजनं याजनं तथा ॥ दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् । प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिं च क्षत्रियाणां समादिशत् । पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव चेति । तत्र यज्ञादयो नित्यधर्माः । याजनादयस्तु निष्कामाधियां नित्याः । सकामत्वयोगे वृत्त-

यः । तत्राऽपि याजनाध्यापनयोर्देहयात्रामात्रे एव तत्त्वम्, अन्यथा स्वरूपहानिः । प्रतिग्रहे सन्निवेशश्च । अन्यथा पृथग्विधानवैयर्थ्यात् । शूद्रस्य लोकजातित्वान्नाध्ययनाद्यधिकारः । शूद्रश्चतुर्थो वर्ण एकजातिरिति गौतमवचनात् । एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् * एतेषामेव वर्णानां शुश्रूषामनसूययेति मनुवचनात् । अथाऽऽश्रमधर्माः । त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययनं दानमिति । प्रथमस्तप एव । द्वितीयो ब्रह्मचार्याचार्यकुलवासी । तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति । सर्वे एते पुण्यलोका भवन्ति । ब्रह्मसंस्थोऽमृतत्वमेति । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादिश्रुतेः ॥ अध्ययनं सेवा च ब्रह्मचार्यऽसाधारणम् । यज्ञो दानं गृहिणः । तपो वानप्रस्थस्य । अनाशकं च हितमितभोजनं परिव्राजकस्येति विभागः । तत्र चतुर्थाश्रमे ब्राह्मणस्यैवाऽधिकारः । ब्राह्मणः परिव्रजेत्, ब्राह्मणो व्युत्थाय, ब्राह्मणो निर्वेदमायादित्यादौ ब्राह्मणस्यैव श्रुत्या गृहीतत्वात् ॥

केचित्तु, यदि वेतरथा ब्रह्मचर्यादेव परिव्रजेद्गृहाद्वा वनाद्वेति सामान्यश्रुतेः, ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद्गृहात् * त्रयाणामपि वेदमधीत्य चत्वार आश्रमा इति स्मृतेश्च त्रयाणां वर्णानां संन्यासाश्रमेऽप्यधिकारः । नच पूर्वोक्तश्रुतिविरोध इति वाच्यम् । तत्र ब्राह्मणशब्द उपलक्षणार्थ इत्याहुः । तन्न । श्रुतिषु संन्यासप्रकरणे क्षत्रियादेरनाम्नातत्वात् । नच सामान्यश्रुतौ त्रयाणां ग्रहणे दोषाभावान्निषेधाश्रवणाच्च तदर्थभूतायां स्मृतौ त्रयाणामपि कण्ठरवेण पाठात् तदुपबृंहणादुक्तार्थसिद्धिरिति वाच्यम् । सामान्यवाक्यस्य विशेषवाक्येन संकोचात् । विशेषश्रुतिविरुद्धस्मृतेरप्रामाण्येन तदुपबृंहणत्वायोगात् । तस्मात्

सामान्यवाक्येषु तत्र तत्र ब्राह्मणस्यैव ग्रहणात्। उदाहृतजाबालश्रुतौ संन्यासाधिकारविधौ ब्राह्मणशब्दाप्रयोगेऽपि अन्यबहुवाक्याविरोधेन तस्या अपि गतिसामान्याद्ब्राह्मणस्यैवाधिकारः।, इतरेषु क्षत्रियवैश्ययोरपीति विवेकः। फलकर्तृत्वाद्यभिमानशून्यैर्मुमुक्षुभिरनुष्ठितानां तेषां मनःशुद्धिपरम्परया ज्ञानभक्तिजनकत्वेन मोक्षसाधकत्वं, विविदिषाश्रुतेः। कामसङ्कल्पयोगे तु काम्यकोटौ प्रवेश इति बोध्यम्॥

अथ शमदमदयाक्षमाऽहिंसातीर्थसेवनोपवासफलाहारदेहशोषणान्नदानादीनि सर्ववर्णाश्रमसाधारणानि। तथा विष्णुस्मृतौ क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः * अहिंसा गुरुशुश्रूषा तीर्थानुसरणं तथा। आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्। अनभ्यसूया च तथा धर्मः सामान्य उच्यते इति। बृहस्पतिस्मृतौ च, दया क्षमाऽनसूया च शौचानायासमङ्गलम् * अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च। परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता। बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति च नो हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि। नान्यदोषेषु रमते सानसूया प्रकीर्त्तिता। अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिर्गुणैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्तितम्। शरीरं पीड्यते येन सुशुभेनापि कर्मणा। अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः। स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना। अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम्। यथोत्पन्नेन संतोषः कर्तव्यो ह्यर्थवस्तुना। परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्तिता इति। भारतेऽपि,

सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम् ॥ ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः । तत्रैव, आनृशंस्यमहिंसा चाऽप्रमादः संविभागिता ॥ श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च । स्वेषु दारेषु संतोषः शौचं नित्यानसूयता । आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृपेति ॥

अथ केनचित् कालादिनिमित्तविशेषेण निमित्तेन विधीयमानं श्राद्धादिकं तीर्थस्नानादिकं च कर्म नैमित्तिकम् । तत्र कालोऽमावास्यादिरूपः । देशश्च गङ्गागयामथुरादिरूप इति संक्षेपः ॥

अथ सकामं पुरुषमुद्दिश्य स्वर्गकामो यजेतेत्यादिश्रुत्या विधीयमानं कर्म काम्यसंज्ञकं बोध्यम् । तत्र काम्यानां निषिद्धवत् संसरणहेतुत्वाविशेषाद् हेयत्वमेव । नित्यनैमित्तिकानां तु श्रीपुरुषोत्तमाज्ञानुष्ठानरूपतद्भजनत्वादावश्यकानुष्ठेयत्वम् । एवञ्च, स्ववर्णाश्रमानुसारेणानुष्ठीयमानैर्नित्यनैमित्तिकैराराधितो भगवान् वासुदेवः प्रपन्नांस्ताननुष्ठातॄन् अनुगृह्य स्वविषयकज्ञानभक्त्योरधिकृत्य स्वात्मानं दर्शयित्वा आत्मभावापत्तिलक्षणां मुक्तिं प्रयच्छतीति स्वयमेव गीतम् । ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ॥ कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः । स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति ॥

ननु, सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेत्यत्र सामान्यधर्मप्रयोगात् सर्वस्याऽपि कर्ममात्रस्य त्यागविषयत्वावगमात् कथमिव नित्यनैमित्तिकस्यावश्यकर्त्तव्यत्वमितिचेत् सत्यम् । तत्रैव त्यागशब्दस्यापि स्वयमेव श्रीमुखेनैव व्याख्यातत्वात् फलकर्तृत्वाभिमानपरत्वेन, एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥

कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तममिति । एतेनैव स्वमतत्वाभ्युपगमवाक्येन सर्वोऽपि हेयोपादेयव्यवस्था निरूपिता, नात्र प्रयत्नान्तरापेक्षा । मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासयेति स्मृतेश्च । व्यतिरेके दोषगानाच्च । नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥ मोहात् तस्य परित्यागस्तामसः परिकीर्तितइति नित्यादित्यागस्य तामसत्वयोगोक्तेः । हरिवंशे वलिं प्रति श्रीवामनः, वेदोक्तं ये परित्यज्य धर्ममन्यं प्रकुर्वते ॥ तत् सर्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यतीति । सनत्सुजातश्च, नाचारहीनं प्रपुनन्ति वेदा इति । श्रुतिस्मृत्युदितं धर्मं वर्णाश्रमविभागजम् ॥ उल्लङ्घ्य ये प्रवर्तन्ते स्वेच्छया कूटयुक्तिभिः । विकर्माभिरता मूढा युक्तिप्रागल्भ्यदुर्मदाः । पाषण्डिनस्ते दुःशीला नरकार्हा नराधमा इति । विष्णुधर्मे, नास्तिक्यपरमाश्चैव केचिद्धर्मविलोपकाः ॥ भविष्यन्ति नरा मूढा मन्दाः पण्डितमानिन इति कलिधर्मे व्यासः । तस्मान्मुमुक्षुणा स्वोचितवर्णादिधर्मेणैव तत्प्रसादाय सदैवाराधनीयो भगवाञ्छ्रीकृष्ण इति सिद्धान्तः ॥

ये चाश्रमधर्महीनास्तेषां को वा धर्म इतिचेत्, पूर्वोक्ताः शमदमतपस्तीर्थयात्रादय एवेति ब्रूमः । इयाँस्तु विशेषः— आश्रमहीना द्विविधाः, आपद्वशादाश्रमभ्रष्टा अशक्ता विधुरादय एके, असत्सङ्गाच्च बुद्धिपूर्वकधर्मत्यागिनश्चान्ये । तत्र पूर्वेषां तपोब्रह्मचर्यादिनाराधितो भगवाननुगृह्णाति । तपसा ब्रह्मचर्येण श्रद्धयाऽऽत्मानमन्विष्येदिति श्रुतेः । जप्येनैव हि संसिद्ध्येद् ब्राह्मणो नात्र संशयः ॥ कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते इति स्मृतेश्च । द्वितीयकोट्या अपि द्विविधाः— कुसङ्गेनाश्रमभ्रष्टा अपि शास्त्रश्रवणादिना प्रबुद्धपूर्वसुकृतसंस्काराः स्वदोषमाकलय्य श्रेयसो यत्नान् अन्वेष्यमाणा एके । तेषामनन्यतया भजनीयो भगवान्

श्रीकृष्ण एव । अन्यत्रानधिकारात् । तच्च स्वयमेव गीतम् । अपिचेत् सुदुराचारो भजते मामनन्यभाक् * साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यतीति । अस्य व्याख्या वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैः कृता, तत्रैव द्रष्टव्या । दुष्कृतबाहुल्याद्धर्माद् भ्रष्टा अपि आत्मदोषं गुणत्वेन बहुमन्यमानाश्चेन्नरे । तेषां शास्त्रानधिकारादुपेक्षणीया एव मनीषिभिः । नाऽविरतो दुश्चरितान्नाऽशान्तो नाऽसमाहितः * नाऽशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयादिति श्रुतेः । इति कर्मयोगसङ्ग्रहः ॥

अथ पूर्वोक्तकर्मयोगानुष्ठानप्रीणितपरमेश्वरैः परिपक्वमनःकषायकैः शास्त्राधिकारिकैर्मुमुक्षुभिः शास्त्रोक्तलक्षणसम्पन्नाचार्य्यसमाश्रितैर्यथाश्रुतमभ्यस्यमानश्रवणादिजन्यपरब्रह्मस्वरूपगुणादिविषयकानुभवविशेषो ज्ञानयोगः, तत्प्रसादहेतुकसाक्षात्कारद्वारेण मोक्षासाधारणहेतुभूतः । तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः * क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे । यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतिभ्यः ॥

अथ पूर्वोक्तानुभवपूर्वकवार्षिकगङ्गाप्रवाहवदनवच्छिन्न आप्रयाणादहरहः प्रवर्द्धमानो भगवत्स्वरूपगुणादिविषयकध्यानसन्ततिविशेषो निदिध्यासनाख्यो ध्रुवास्मृत्यपरपर्यायको भक्तियोगो निदिध्यासितव्यः । ध्रुवास्मृतिरित्यादिश्रुतेः । प्रपत्तियोगश्च शास्त्रोक्तज्ञानादिसाधनानुष्ठानानर्हेणाधिकारिणा शास्त्रोक्तलक्षणसत्सम्प्रदायाऽऽचार्य्योपदिष्टविधानेन वात्सल्यकारुण्यदयातितिक्षाद्यनन्त-

स्वाभाविकासंख्येयसद्गुणमहोदधौ भगवति रमानिवासे श्रीमुकुन्दे क्रियमाण आत्मात्मीयभरार्पणरूपः। मुमुक्षुर्वै शरणमहं प्रपद्ये इति श्रुतेः । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज * तमेव शरणं गच्छेत्यादिस्मृतेश्च । अथ प्रपत्तेरङ्गानामपि प्रतिबन्धककालादिबाहुल्याद्धेतोरनुष्ठाने ह्यात्मन्यसम्भवं निश्चित्य श्रीगुरुमेव श्रेयोरूपं तत्साधनं चावगम्य श्रद्धाविश्वासार्जवादिभिस्तच्चरणारविन्दयोः सर्वात्मभावेनात्मभारं समर्प्य ह्यज्ञबालवत् तदुक्तमात्रानुसरणं गुर्वेऽनुप्रपत्तियोगः । आचार्य्यदेवो भव, यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ * तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इत्यादिश्रुतेः। तत्र कर्मयोगः श्रीभगवच्चरणैराद्याचार्य्यैः सदाचारप्रकाशे निरूपितः । ज्ञानयोगश्च, ब्रह्मणो भवत आदिपूरुषादित्यस्मिन् श्लोके । भक्तिरस्तु मम निश्चला हरे इत्यत्र भक्तियोगः । त्वां प्रयामि शरणमित्यत्र प्रपत्तियोगः । वेदान्तरत्नमञ्जूषायां च गुरूपसत्तियोगः श्रीपुरुषोत्तमाचार्यचरणैर्विस्तृत इति विवेकः ॥

अथ यस्य प्राप्तेः पद्धतिर्निरूपिता तं श्रीभगवन्तं निर्दिशन्नाह ॥ भक्तकामपरिपूरक इति ॥ काम्यन्ते इति कामा धर्मार्थकाममोक्षाख्यार्थाः, भक्तानामार्त्तजिज्ञास्वर्थार्थिज्ञानिनां स्वस्वाधिकारेप्सितपुरुषार्था इति यावत् । तान् पूरयतीति तथोक्तः । सार्वज्ञ्यौदार्याद्यनन्तसद्गुणार्णवो विश्वशक्तिः सर्वशरण्यो भगवानेव तत्तत्कर्मभिरुपासितस्तत्तदीप्सितं कर्मफलम्, अर्थादिकमभ्युदयरूपं फलसंकल्पकर्तृत्वाभिमानशून्यैश्च तत्तदुपासनादिविशेषाराधितो ह्यात्मभावाख्यं श्रेयो ज्ञानिभक्तेभ्यः प्रयच्छतीति वाक्यार्थः । स वा एष महानज आत्मा अन्नादो वसुदान एष आनन्दयाति य आत्मदा बलदा रातिर्धातुः परायणमित्यादिश्रुतिभ्यः । ननु यदि तत्तत्कर्माराधनमापेक्ष एवेश्वरस्तत्तत्कर्मानुष्ठाना-

ऽनुसारेण तथाभूतं फलं प्रयच्छति, न तु कर्मनिरपेक्षः । तर्हि कर्मण एव फलदानाय स्वातन्त्र्यं किमिति नाभ्युपेयम् । नचाशुविनाशित्वात् तस्य कथं व्यवहितकालोत्तरभाविफलदानयोग्यतेति शङ्कनीयम् । कर्मणो विनाशित्वेऽपि तज्जन्यादृष्टलक्षणसंस्कारस्य यावत्फलप्राप्ति स्थैर्यस्याभ्युपगमान्नोक्तदोषावकाशः । कर्मतत्फलदात्रीश्वराभ्युपगमे गौरवात् । कर्माभावे फलदानाशक्तित्वाच्चाप्रयोजक एवेश्वराङ्गीकार इति । दृश्यते च लोके कृष्यादिकर्मणः फलदानशक्तिः । तथा वैदिकेऽपि यागदानहोमादौ स्वातन्त्र्यमनुमेयम् । यज्ञदानादिकं फलदानार्हम् । कर्मत्वात् । कृष्यादिवदिति प्रयोगात् । किञ्च, स्वर्गकामो यजेदित्यादिविधिवाक्यमपि स्वर्गादिफलदानार्थं यागादिकं कर्मैव विदधाति, न त्वीश्वरमिति । धर्मं जैमिनिरत एवेति निर्णयशास्त्राच्चेति चेन्न । कर्मणो जडत्वेनाऽकिञ्चित्करत्वादिति पूर्वमेवोक्तम् । तज्जन्यापूर्वलक्षणादृष्टस्यापि जडत्वाविशेषात् ।

नाप्युक्तलक्षणानुमानं प्रमाणपदवीमारोहति । हेतोरप्रयोजकत्वात् । कृष्यादिसद्भावेऽपि वर्षाद्यभावे वोपलादिपाताद्वा फलव्यभिचारदर्शनात् । नापि, यजेदित्यादिशास्त्रस्य कर्मविधानमात्रपरत्वम्, अपि तु देवाराधनपरत्वमेव । तथाच, यज देवपूजायामिति धात्वर्थत एव कर्मणः पराङ्गत्वोपलब्धेः । किञ्च, वायव्यं श्वेतमालभेत भूतिकामो, वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीत्यादिषु कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षित एव, नातत्प्रकारत्वशङ्का युक्ता । एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते मति तत्परित्यागमश्रुतापूर्वकल्पनं च विद्वांसो न बहु मन्यन्ते । अन्याय्यत्वात् । श्रुतिविरुद्धत्वाच्च । ननु तर्हि देवा एव देवतानि-

शेषाः पुण्यकर्माणो भवन्तां फलदानहेतवः सन्तु । तत्राऽपि कर्मणः परम्परया हेतुत्वमिद्धेस्तेषां जीवत्वसामान्ये पुण्यबाहुल्यादेव कर्मफलदातृत्वार्हत्वादितिचेन्न । तेषां कर्मवश्यानां पारतन्त्र्यात् तादृशशस्त्ययोगात् तदन्तर्यामिपरपुरुष एव फलदो,-नान्य इति निश्चीयते । इष्टापूर्तं बहुधा जायमानं विश्वं बिभर्ति भुवनस्य नाभिः, तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा इति श्रुत्या तदात्मकत्वेन सामानाधिकरण्योक्तेः । यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति * तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् । मयैव विहितान् हि तानित्यादिश्रीमुखोक्तेश्च । एतेन फलमत उपपत्तेरित्यधिकरणं व्याख्यातमिति सक्षेपः । सर्वपुरुषार्थदानार्हत्वे हेतुमाह ॥ **विभुरिति** ॥ सर्वव्यापित्वेन सर्वनियन्तृत्वात् । सर्वव्यापी सर्वभूतान्तरात्मा कर्माऽध्यक्ष इत्यादिश्रुतेः ।

यदि सर्वान्तरस्तर्हि तद्गतपरिच्छेदोऽपि स्यादिति चेत् तत्राह ॥ **व्यापकोऽपि परिछिन्नहृद्गत इति** ॥ परिच्छिन्नेषु हृत्सु गतोऽपि तत्र वर्तमानोऽपि व्यापकः परिच्छेदहीन एव । अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्य, एष मे आत्मान्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा, एष आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य इत्यादिश्रुतिभ्यः । ननु, अणीयस्त्वज्यायस्त्वयोरितरेतरविरोधान् कथम् एकत्रावस्थानमित्याशङ्क्याह ॥

**अचिन्त्यशक्तिरिति** ॥ अचिन्त्या इयत्ताऽवच्छेदेन निर्देष्टुमनर्हा शक्तिः स्वाभाविकी यस्य सः । अचिन्त्यशक्तियोगात् सर्वमप्यऽविरुद्धमित्यर्थः । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिभ्यः । नन्वेवं तर्हि दोषाणां योगो-

ऽपि अभ्युपगन्तव्यो विरुद्धत्वाविशेषादिति चेन्न । शास्त्राविरुद्धत्वेन तद्विरोधात् । य आत्मा अपहतपाप्मेत्यादिश्रुतेः । ननु जीवस्याप्यहतपाप्मत्वादिश्रवणाविशेषात् किमिति तस्य दोषभागित्वमितिचेत् । सत्यम् । स्वरूपतस्तस्य तथात्वेऽपि अनादिकर्मात्मिकाऽविद्यया तस्य वेष्टितत्वात् । बद्धावस्थायां धर्मभूतज्ञानस्य संकोचात् । आनन्दस्य तिरोधानाच्च संसारित्वं सर्वदोषभागित्वं च घटते । श्रीपुरुषोत्तमस्य तु सर्वास्वस्थासु तत्सहभावत्वेऽपि सार्वज्ञादियोगेन, यः सर्वज्ञः सर्वविदित्यादिश्रुतेः । सर्वज्ञः सर्वकृत् सर्वशक्तिज्ञानबलादिमान् ॥ अन्यूनश्चाप्यऽवृद्धश्च स्वाधीनो नादिमान् वशी । कामतन्द्राभयक्रोधकामादिभिरसंस्तुतः । निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरक्रम इत्यादिस्मृतेश्च । दोषास्पर्शस्वभावादेव न तद्योगशङ्कावकाश इति निश्चीयते । तत्कारणीभूतकर्मभावाऽभावौ चात्र नियामकाविति बोध्यम् । तथाच श्रूयते । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीतीत्यादिना । इत्यलं विस्तरेण ॥ १२ ॥

इति श्रीहयग्रीवानुग्रहलब्धबोधेन श्रीमन्निम्बार्काऽनुयायिना
श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेष-
श्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे श्रेयः-
पद्धतिनिरूपणं नामाष्टमी शाखा ॥८॥

## अथ नवमी शाखा ।

अथोक्तपद्धतेः प्राप्यं फलं निरूपयति ।

आत्मभावमनुभूतिरूपिणो
ये वदन्ति तव रूपरूपिणः ॥
ब्रह्मभावपरमात्मभावतः
सत्यमेव सुखबोधरूपिणः ॥ ११ ॥

आत्मभावमिति ॥ ये मन्त्राः, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इत्यादयोऽनुभूतिरूपिणस्तव आत्मभावं मोक्षलक्षणं वदन्ति । ये च मन्त्राः, निरञ्जनः परमं साम्यमुपैति, ब्रह्मविदाप्नोति परं, तन्महिमानमिति वीतशोक इत्यादयो ब्रह्मभावपरमात्मभावतो मोक्षमाहुः, तत्सत्यमेव याथात्म्यमेवेति योजना । ब्रह्मभावात् परमुत्कृष्टम् आत्मभावत आत्मभावमिति । ब्रह्मणो भावः सार्वज्ञ्यादिधर्मकदम्बस्तस्मादप्युत्कृष्टं ब्रह्मस्वरूपं, तदात्मकत्वभावमित्यर्थः । सार्वज्ञ्याद्यनुभवापत्तिपूर्वकतदात्मकत्वानुभूतिरिति तात्पर्यार्थः । एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायण इति सिद्धान्तसूत्रात् । पूर्वोक्तब्रह्मभावात् सार्वज्ञ्यादिविषयकानुभवादऽपहतपाप्मत्वादिसंपन्नविज्ञानरूपस्वस्वरूपाविर्भावादविरोधं मोक्षस्वरूपं भगवान् बादरायणो मन्यते इति सूत्रार्थः । एवञ्च न केनाऽपि वाक्येन विरोधः । तथाहि । न तावत्, परं ज्योतिरुपसंपद्येतिवाक्यविरोधोऽत्र संभावनीयः । तस्याप्युक्तार्थविषयत्वसाम्यात् । स एव ज्योतिषां ज्योतिरित्यादिश्रुत्यन्तरात् । परञ्ज्योतिःशब्दाभिधेयं परब्रह्मभूतं श्रीपुरुषोत्तमं संपद्य साक्षादनुभूय स्वेन रूपेण ब्रह्मस्वरूपगुणादिविषयकप्रत्यक्षानुभूत्याश्रयरूपानुभवितृरूपेण निष्पद्यते । अनवच्छिन्नानुभवेनावतिष्ठते इत्यर्थः । भ-

गतद्विपयकानवच्छिन्नानुभवस्य ब्रह्मभावपदवाच्यस्यात्रापि भाव-श्रवणात् । निरञ्जनः परम साम्यमुपैतीति श्रुत्या साम्यविधानमप्य-विरुद्धम् । साम्यं नाम स्वरूपेण गुणादिना च सादृश्यम् । तथाच ज्ञानानन्दरूपत्वात् स्वरूपसादृश्यम् । अपरिच्छिन्नज्ञानधर्मत्वाच्च गुणसादृश्यमपि । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम् । नियन्तृत्वस्वातन्त्र्यवत्त्वाभावेन ततो ब्रह्मणो भिन्नत्वे सति, सार्व-ज्ञ्यापहतपाप्मत्वादिभूयोधर्मवत्त्वाल्लक्षणसमन्वयः । सर्वं ह पश्यः पश्यतीति सार्वज्ञविधानश्रुतेः । जगद्व्यापारवर्ज्जमिति भेदकसूत्राच्च । नच, स स्वराड् भवतीति श्रुतिविरोधः शङ्कनीयः । स्वारा-ज्यसाम्यस्यापि ब्रह्मादिवन्दनीयत्वस्य तत्र सत्त्वात् । नाऽपि नारायणे सायुज्यमाप्नोतीति सायुज्यश्रुतिविरोधः कल्पनीयः । तत्राऽपि त्वदभिमेतार्थविपर्यासिद्धेः । सह युज्यते इति सयुक्, सयुजो भावः सायुज्यं नित्यसंबन्ध इत्यर्थः । भगवता नित्यसंबन्धोऽत्र भावप-दार्थः । तथाच भगवता नित्यसम्बन्धलक्षणभावापत्तिरेति यावत् । नचैक्यमेव तदर्थ इति वाच्यम् । शक्यार्थाभावात् । ननु, यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय * तथा विद्वान्नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति श्रुतिरैक्याभिधानप-रेति कथमपन्हूयते इतिचेन्न । तत्रापि भेदस्य सत्त्वात् । न हि जले क्षिप्तं जलान्तरं स्वरूपैक्यं भजते, किन्तु नित्यसंयोगमेव । सावयवद्रव्यत्वात् । नद्यादीनां प्राडादिऋतुविशेषे वृद्धिह्रासद-र्शनाच्च । नच समुद्रे वृद्धिह्रासादर्शनादैक्यमिति वाच्यम् । नद्या-दिदृष्टान्तेन तत्रापि अनुमातुं शक्यत्वात् । तत्तरङ्गेषु भेददर्शनाच्च । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमेति श्रुत्यन्तरेण सादृश्यस्यैव लाभाच्च । श्रुत्य-र्थस्तु केशवकाश्मीरिचरणैर्विस्तृतस्तत्रैव द्रष्टव्यः ॥

ननु, ब्रह्मवेदं ब्रह्मैव भवतीति सावधारणश्रुतेः स्वरूपतत्त्वैवाभ्युपगन्तव्या, न भेदलेशोऽपीति चेन्न। बृहद्गुणयोगेनाऽपि तत्तायाः सुवचत्वात् । अन्यथा ब्रह्मविदाप्नोति परमिति कर्मकर्तृव्यपदेशश्रुतिबाधात् । ननु, ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप इत्यादिवाक्येऽन्तःप्रवेशोक्तेरन्तःप्रतिष्ठस्य भेदाऽनुपलब्धेरभेदस्यैव सिद्धिरिति चेन्न । श्रीभगवतो विश्वरूपविग्रहे एव प्रवेशस्य विवक्षितत्वात् । तथाच विश्वस्य सदैव तत्र प्रविष्टत्वात् सर्वं समञ्जसम् । तथाचोक्तं भगवद्गीतैकादशाध्याये, तत्रैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् * मम देहे गुडाकेशेत्यादिना । तथैवानुभूयाऽर्जुनोऽप्याह, पश्यामि देवाँस्तव देव देहेइत्यादिना । एतदुक्तं भवति । प्रवेशो नाम स्वस्य चेतनाचेतनात्मकविश्वस्य ब्रह्मात्मकत्वाऽनुभवपूर्वकं विश्वरूपे भगवति तच्छक्त्यात्मनाऽवस्थानम् । विश्वरूपस्य ब्रह्मणः श्रीपुरुषोत्तमस्य विश्वात्मत्वेन जगतोऽधिकरणत्वाद्, विश्वं जगत् तत्राऽवतिष्ठते। परापरात्मकशक्तिरूपत्वाद्विश्वस्येति निर्विवादः । श्रीमुखेनैव गीतत्वात् । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् * जीवभूतां महाबाहो ययेदं धार्य्यते जगादित्यादिना तथैव सर्वाधिकारिणामधिकाररूपाः शक्तयस्तस्यैव तत्रैव तिष्ठन्ति । सृष्टिसमये तदधिकारयोग्यतापन्नानां पुण्यात्मनां ब्रह्मरुद्रेन्द्रादिपदारोहणार्हाणां जीवानां तत्तज्जगत्सर्जनसंहरणादियोग्याभिरात्मासाधारणशक्तिभिर्युनक्ति । प्रलये च तान् विश्वाधिकारिणो ब्रह्मादींस्ताभिर्वियुनक्ति । परन्तु तासां शक्तीनां स्वाभाविकत्वनित्यत्वादिभिस्तत्र नित्यावस्थानात् स्थितिरव्यभिचारिणी । तथैवोक्तं विष्णुधर्मे, ब्रह्मा शंभुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः * एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा । जगत्कार्यावसाने तु वियुज्यन्ते च तेजसेत्यादिना । तथैव मुक्तानामपि

त्रिभ्ररूपे भगवति तदात्मकत्वस्वरूपाविर्भावपूर्वकं तच्छास्त्रत्यानुभूत्यावस्थानमविरुद्धम् । तच्छक्तित्वाविशेषादिति वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैस्तथैवोक्तत्वात् । सर्वोऽपि गीतैकादशाध्यायोऽत्र प्रमाणत्वेनानुसंधेय इति संक्षेपः । तस्मिद्धं मोक्षावस्थायामपि स्वरूपभेदावस्थानम् । भेदज्ञानादपि मोक्षश्रवणात् । जुष्टं यदा पश्यत्यन्यमीशं तस्य महिमानमिति वीतशोकः । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेतीत्यादिभिस्तथैवोक्तं सिद्धान्तसेतुकायां श्रीसुन्दरभट्टपादैः । श्रीभगवदनवच्छिन्नानुभूत्यास्थितिर्भगवत्प्राप्तिः । सैव भगवद्भावापत्तिरिति । तथाचाह भगवान् पराशरः । निरस्ताऽतिशयाह्लादसुखभावैकलक्षणा * भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मतेति । भगवत्प्राप्तिः, भेषजं संसारबन्धरोगस्येति योजना । तामेव विशिनष्टि । निरस्तेति । निरस्तोऽतिशय आह्लादो यस्मात् तथाभूतेन सुखेन यो भावोऽवस्थानमकमसाधारणं लक्षणं यस्याः सा कालादिपरिच्छेदरूपव्यभिचारशून्यत्वं दर्शयन्नाह । एकान्तात्यन्तिकीति । तत्र शास्त्रं प्रमाणयति । मतेति । शास्त्रमुखेनेति सम्बन्ध इति संक्षेपः । केचित्तु प्रतिबिम्बो जीवो बिम्बस्थानीयो ह्रीश्वर उभयाऽनुस्यूतं शुद्धचैतन्यमिति मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वमर्वेश्वरत्वसत्यकामत्वादिगुणगणाढ्येश्वरभावापत्तिरिष्यते । यथानेकेषु दर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सत्येकास्मिन् प्रतिबिम्बे विद्योदयेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानमवश्यम्भावात् । नच मुक्तस्याविद्याऽभावात् सत्यकामत्वादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिरिति वाच्यम् । तदविद्याऽभावेऽपि तदानीं बद्धपुरुषान्तराविद्यायाः सत्त्वात् । न ह्रीश्वरस्येश्वरत्वं सार्वज्ञादिगुणवैशिष्ट्यं च स्वाविद्याकृतम् । तस्य निर्गुणनिरञ्जनत्वात् । कि-

न्तु बद्धपुरुषाविद्याकृतमेवेति सिद्धान्तः । किञ्च, फलाध्यायेऽपि, स्वेन रूपेणाभिनिष्पद्यते इति मुच्यमानविषयायां श्रुतौ केन रूपेणाभिनिष्पत्तिर्विवक्षितेति जिज्ञासायां, ब्राह्मेण जैमिनिरुपन्यासादिभ्य इतिसूत्रेण ब्राह्मं रूपमपहतपाप्मत्वादिसत्यसङ्कल्पत्वावसानं सर्वज्ञत्वसर्वेश्वरत्वादिचेतनाभिनिष्पत्तिः । य आत्मा अपहतपाप्मेत्यादिश्रुत्युपन्यासेन, स तत्र पर्येति जक्षन् क्रीडन् रममाणस्त्रिभिर्वा यानैर्वेत्याद्यैश्वर्यनिवेदनं चेति जैमिनिमतम् । चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिरित्यनन्तरसूत्रेण, एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेत्यादिश्रुत्या चैतन्यमात्रमात्मस्वरूपमित्यवगतेस्तन्मात्रेणाभिनिष्पत्तिरिति मतान्तरमुपन्यस्य, एवमुपन्यासात् पूर्वभावादविरोधं बादरायण इति सिद्धान्तसूत्रेण वस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि पूर्वोक्तगुणकलापस्योपन्यासाद्यवगतस्य मायामयस्य बद्धपुरुषव्यवहारदृष्ट्या सम्भवान्न श्रुतिद्वयविरोध इत्यविरोधं वदन् सूत्रकार उक्तसिद्धान्तमेव मेने । सूत्रत्रयमिदमुक्तार्थपरत्वेन व्याकुर्वन् भाष्यकारश्चेश्वरभावापत्तिं स्पष्टमनुमेने । भामतीप्रबन्धप्रभृतयश्च श्रुत्युपबृंहितमिदं सूत्रजातं भगवतो भाष्यकारस्योदाहृतवचनजातं च तथैवान्ववर्ततेति । तस्मान्मुक्तानामीश्वरभावापत्तेरवश्याभ्युपेयत्वादसम्भव एव प्रतिबिम्बेश्वरवादे दोषः । तदाहुः कल्पतरुकाराः । न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यते इति इत्याहुः । तत्तुच्छमसम्भवात् । तथाहि । न तावदीश्वरजीवयोर्बिम्बप्रतिबिम्बभावसम्भवः । पूर्वमेव सम्यङ्निरस्तत्वात् । प्रत्यगात्मनिरूपणे, नित्यमुक्तजनतामुसेवित इति श्लोकव्याख्याने । नाऽपि मुक्तस्य यावत्सर्वमुक्ति सार्वज्ञादिसम्पन्नेश्वरभावेनावस्थानं पुनर्भावान्तरापत्तिरिति वक्तुं शक्यम् । महदनुपपत्तियोगात् । तथाच मुक्तस्येश्वरभावापत्तिः स्वरू-

पेण विवक्षिता ? सार्वज्ञ्यादिधर्मेण वेति विवेचनीयम् । नाद्यः । स्वरूपनाशापत्तेः, स्वेन रूपेणाभिनिष्पद्यते इति श्रुत्या स्वरूपापत्तेरेव विधानाद्, न तु स्वरूपनाश इति भावः । भावशब्दप्रयोगवैयर्थ्यात् । भावशब्दस्य स्वरूपपरत्वायोगाच्च । न द्वितीयः । तत्राऽपि सार्वज्ञ्यादिधर्मविषयकानुभूत्याश्रयत्वं, सार्वज्ञ्यकल्पाश्रयत्वं वा, सार्वज्ञ्याद्याश्रयत्वं वा । नाद्यौ । अनङ्गीकारात् । अपसिद्धान्तात् । अस्मदिष्टापन्नत्वाच्च । न तृतीयः । प्रमाणाभावात् । अनेकेश्वरत्वादापत्तेश्च । किञ्च, न तावद्भगवदैश्वर्य्यस्य मायामयत्वे पुनर्निवर्त्यत्वे प्रमाणमस्ति । यतस्तन्निवृत्त्या पुनर्मोक्षान्तरापत्तिः सुवचा स्यात् । नच भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतिरेवात्र मानमिति शङ्कनीयम् । तस्याः परमेश्वरभावापत्तिप्रतिबन्धकीभूतविश्वमायानिवृत्तिपरत्वात् । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति श्रीमुखोक्तेः । भगवदैश्वर्य्यादेः स्वाभाविकत्वश्रवणात् । मायामयत्वेनेति हेतोः स्वरूपासिद्धत्वाच्च । यदुक्तं, परमेश्वरस्यैश्वर्य्यं सत्यकामत्वादिगुणवैशिष्ट्यं च बद्धजीवाविद्याकल्पितं, न स्वाभाविकम् । तस्य निर्विशेषत्वात् । नाऽपीश्वराविद्याकृतम् । निरञ्जनत्वादिति । तत्तुच्छतरम् । स्वबुद्ध्युत्प्रेक्षितत्वेन प्रमाणशून्यत्वात् । प्रत्युत, तत्प्रत्यनीकस्वाभाविकत्वयोगश्रवणात् । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति । यदुक्तं सिद्धान्तभूतवस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि पूर्वोक्तगुणकलापस्योपन्यासमाद्यवगतस्य मायामयस्येत्यादिना विवक्षिताऽर्थपरत्वम् । तदपि स्वकपोलकल्पितम् । सूत्रार्थस्य पूर्वमेव विस्तृतत्वात् । किञ्च, यदि चैतन्यमात्रापत्तिरेव मोक्षस्वरूपं विवक्षितं तर्हि औडुलोमिपक्षाऽनुगामित्वमेव भवतां मेष्टं, किं पुनः सूत्रकारसिद्धान्तेन । सूत्रकृद्भिः कृताऽपि भगवदैश्वर्यादेर्मायिकत्वान-

भिधानात् । अपि तु, विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्च, सर्वोपेता चेत्यादिसूत्रैरुपपन्नतयाऽभ्युपगमात् । नाऽपि तस्य त्वदभिप्रेतनिर्विशेषत्वयोगः । पूर्वमेव निरस्तत्वाद्, निर्गुणत्व दिति वैदिकं यच्च इत्यस्य व्याख्याने । प्रमाणशून्य एवायं पक्षः परीक्षानिपुणर्हेय एव । तस्मादुक्तसिद्धान्त एव वरीयान् । श्रौतत्वात् । स च मोक्षः परब्रह्मसाक्षात्कारैकलभ्यः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुतिभ्यः । अस्याऽर्थः । यदा यस्मिन् काले यच्छब्दसामान्यप्रयोग उत्तरायणादिकालनियमव्यावृत्त्यर्थः । पश्य इति परब्रह्मश्रीपुरुषोत्तमसाक्षात्कारार्हश्चरमजन्मा मुमुक्षुः । ईशमिति चेतनाचेतनभूतविश्वान्तर्यामिणं, पश्यते साक्षात्करोति, तदा निरञ्जनः सन् कर्मतन्निमित्तेन त्रिविधेन देहेन्द्रियसूक्ष्मप्रकृतिसंबन्धात्मकेनाञ्जनेन रहितः सँस्तत्साम्यमुपैतीति योजना । निर्विशेषज्ञानान्मोक्षमभ्युपगच्छतां दुराग्रहवतां मुखपिधानार्थं विशेषणानि वितनोति भगवती श्रुतिः । रुक्मवर्णमित्यादि । तत्र रुक्मवर्णमिति विग्रहवत्त्वसूचनार्थकं सौन्दर्यलावण्यसौकुमार्यमाधुर्याद्यनन्तकल्याणगुणाश्रययोगिध्येयध्यातृकर्मभञ्जनशीलसर्वपुरुषार्थपरिपूरकमखिलाऽऽनन्दमूर्त्तिमन्नमित्यर्थः । यथा महारजनं वासः, यदात्मको भगवान् तदात्मिका व्यक्तिः, किमात्मको भगवान्, ज्ञानात्मक ऐश्वर्यात्मकः । हिरण्यकेशः हिरण्यश्मश्रुः, आप्रणखात् सुवर्ण इत्यादि श्रुत्यन्तरेभ्यः । तल्लक्षणमाह । कर्तारमिति । जगज्जन्मादिकर्तारम् । कर्तृशब्दस्य निमित्तमात्रेऽपि संकोचसंभवात् । उपादानं त्वन्यदेव स्यादित्याशङ्कावारणायाह । ब्रह्मयोनिमिति । ब्रह्मशब्दवाच्यप्रकृतिचतुर्मुख-

वेदादिरूपस्य योनिमुपादानम् । उपलक्षणं चैतत् । सर्वस्याऽपि विश्वस्योपादानमित्यर्थः । पुरुषं परिपूर्णं सर्वान्तरात्मानं वेत्ति । विद्वानिति शास्त्रोक्ततत्त्वग्रहणकौशल्यशक्त्याश्रयः । अथ द्वितीयस्य वाक्यस्यैवमर्थः । तस्मिन् ब्रह्मणि श्रीपुरुषोत्तमे वेदान्तशास्त्रप्रसिद्धे दृष्टे साक्षादनुभूते सति हृदयग्रन्थिः, अनादिकर्मनिरूपितमायासंबन्धो, भिद्यते ध्वंसमापद्यते । स्वयमेव । कर्मकर्तृप्रयोगः साधनान्तरनिरपेक्षत्वद्योतनार्थः । तत्कार्यभूताः सर्वेऽपि संशया आत्मपरमात्मसाधनफलसम्बन्धादिविषयकाः स्वयमेव छिद्यन्ते । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति श्रुत्यन्तरात् । अस्य चरमजन्मनो मुमुक्षोर्भगवत्प्रसादैकविषयस्य कर्माणि सञ्चितक्रियमाणप्रारब्धरूपाणि सर्वाण्यपि क्षीयन्ते क्षयं गच्छन्तीति । परमेश्वरं विशिनष्टि । परावर इति । लोकदृष्ट्या मनुष्यादिभ्यः परे उत्कृष्टा ब्रह्मरुद्रादयोऽवरे निकृष्टा यस्मात् स तथा तस्मिन्निति श्रुत्यर्थसंग्रहः । ननु, क्षीयन्ते चाऽस्य कर्माणीति श्रुतौ बहुवचनप्रयोगेऽपि प्रारब्धेतरकर्मपरत्वमेवाऽसौ शब्दो नेयः । एकैकस्यापि कर्मणोऽसंख्येयत्वान्न बहुत्वोक्तिविरोधः । अन्यथा साक्षात्कारसमय एव विदुषो देहपातप्रसङ्गात् । जीवन्मुक्त्यभावप्रसङ्गाश्चेतिचेन्न । इष्टापत्तेः । नचैवं सति तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशाविति सूत्रे प्रारब्धेतरस्यैव सञ्चितक्रियमाणरूपकर्मणो ग्रहणान्न तु प्रारब्धस्यापि । तदनङ्गीकारे सूत्रबाधापत्तेरिति वाच्यम् । तस्य निदिध्यासनपरिपाकप्रयुक्तध्रुवास्मृत्याख्यपरोक्षज्ञानविषयत्वात् । स्मृतिलम्भ इति पूर्वोक्तश्रुत्यन्तरात् । किञ्चापरोक्षज्ञानान्मूलाज्ञाननिवृत्तिर्भवतो, अभिप्रेता, न वेति विवेचनीयम् । आद्ये कारणनाशे कार्यस्थित्ययोगात् । भावकार्यस्य निरुपादानस्थित्यदर्शनात् । सोपदानं चेत् किमत्रोपादानम् ? ब्रह्मवाऽन्यद्वा । नाद्यः । ब्रह्मणोऽकारणत्वेन

तदुपादानत्वासम्भवात् । अन्यथा कारणस्य नित्यत्वेन कार्य्यविध्वंसाभावादनिर्मोक्षप्रसङ्गो दुर्वारः। न द्वितीयः । अविद्यातत्कार्य्यभिन्नान्यस्यासत्त्वात् । तस्मात् प्रारब्धस्याऽप्यविद्याकार्यत्वेन तन्नाशेऽवस्थातुमशक्यत्वात् तन्त्वभावे पटस्येव । नच प्रारब्धजन्यभोगनिर्वाहकतया कियत्कालमविद्याया अनुवृत्त्यङ्गीकार इति वक्तुं शक्यम् । विद्याया अविद्योपमर्द्दकस्वभावहानिप्रसङ्गात् । यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं, यद्व्यतिरेके चाभावस्तत् तत्साध्यमिति लक्षणोक्तेः । तथाच यस्मिन् ब्रह्मापरोक्षज्ञानेऽग्रिमक्षणेऽविद्यानिवृत्तिसत्त्वं तद्व्यतिरेकेऽविद्यानिवृत्त्यभाव इति ब्रह्मसिद्धिकारसिद्धान्तबाधाच्च । नच प्रारब्धभोगोत्तरकाल एव तथाभूतस्वभावो ब्रह्मसाक्षात्कारस्येति वाच्यम् । एकस्य स्वभावद्वयानभ्युपगमात् । नचावरणविक्षेपशक्तिमत्या मूलाविद्याया ब्रह्मसाक्षात्कारेणावरणशक्तिनाशेऽपि प्रारब्धकर्मजन्यवर्त्तमानदेहनिर्वाहाय विक्षेपशक्त्यंशाऽनुवृत्तिरिति वाच्यम्। एकस्या अविद्याया युगपत्स्थितिनिवृत्त्योर्विरुद्धत्वात् । नच शक्तिनिवृत्तिमात्रमेव विवक्षितम् । शक्तिशक्तिमतोरभेदात् । भेदे च मूलाऽज्ञानाऽनिवृत्तिप्रसङ्गः । निवर्त्तकाभावात् । नच प्रारब्धनिवृत्तिरेव तन्निवृर्त्तकमिति वाच्यम् । कार्यनाशस्य कारणनाशकत्वायोगात् । अप्रमाणत्वाच्च । नच पूर्वज्ञानमेव तन्निवर्त्तकमिति वाच्यम् । तस्य शक्तिनिवृत्तावेवोपक्षीणत्वात् । नच स्वरूपात्मकज्ञानमेव तन्निवर्त्तकमिति वक्तुं शक्यम् । तस्याविरोधित्वाभ्युपगमात् । अन्यथाऽपसिद्धान्तापत्तेः । द्वितीये, ज्ञानेनाऽविद्यानिवृत्त्यभावपक्षाङ्गीकारे ज्ञानस्य वैयर्थ्यापत्तेः। अनिर्मोक्षप्रसङ्गाच्च।किञ्च, विरोधिसाक्षात्कारोदये सर्वथा लेशतोऽप्यविद्यानुवृत्त्यसम्भवः एतत्कामनापि त्वयाऽवश्यमेवाङ्गीकार्यत्वात् । अन्यथा कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयेन सविलासवासनाविद्या-

निवृत्तिरिति सिद्धान्तभङ्गात् । एतेन, क्षालितलशुनभाण्डानुवृत्ति-लशुनवासनाकल्पाऽविद्यासंस्कारानुवृत्तिरिति पक्षोऽपि निरस्तः । तुल्यदोषयोगात् । ननु दग्धपटन्यायेनानुवृत्ता मूलाविद्यैवेतिचेन्न । अनिवृत्तिप्रसङ्गस्य पूर्वमेवोक्तत्वात् । दृष्टान्तवैषम्याच्च । दग्धपटस्य कार्यकारित्वाभावात् । अस्य तु पूर्ववत् सर्वक्रियाकारित्वं प्रत्यक्षप्रमाणसिद्धमेव । नचाऽन्यदृष्ट्यैव तस्य कार्यकारित्वमिति वाच्यम् । नियामकाभावात् । शास्त्रमानशून्यत्वाच्च । किञ्च, का वाऽविद्यानिवृत्तिः । आत्मैव वा, तदन्या वा । नाद्यः । तस्य पूर्वमेव सिद्धत्वात् । ज्ञानस्य वैयर्थ्यप्रसङ्गात् । द्वितीये सती वा असती वोभयात्मिका वाऽनिर्वाच्या वा । नाद्या । अद्वैतभङ्गात् । नाऽपि द्वितीया । ज्ञानसाध्यत्वायोगात् । निवर्त्याभावान्निवर्त्तकस्य ज्ञानस्य दिवसे दीपस्येवान्धकाराभावाद्वैयर्थ्यमेव । नाऽपि तृतीया । इतरेतरविरोधात् । नाऽपि चरमा । अनिर्वाच्यस्य सादेरज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः । ज्ञाननिवर्त्यत्वापत्तेश्च । नच, प्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेत्यानन्दबोधोक्तेरिति वाच्यम् । प्रमाणशून्यत्वात् । ननु, तव मतेऽविद्यानिवृत्तिः किमात्मिकाऽभिप्रेतेति चेच्छृणु । अनादिमायासंबन्धस्तत्प्रयुक्तानादिकर्मात्मको वा, ज्ञानप्रागभावो वाऽविद्याशब्दवाच्यः । तस्य निवृत्तिर्ध्वंसाभावः । स च यावदात्मवृत्त्यनवच्छिन्नब्रह्मसाक्षात्कारानुभवरूपस्तदाश्रयो मुक्त इति पूर्वमेवोक्तत्वात् । जीवन्मुक्तिस्तु परिभाषामात्रैव । जन्मान्धस्य पुंसः, कमलनयनसमाख्यावद् उपहासमात्रत्वात् । प्रारब्धे कर्मणि तत्कार्यभूतकामादौ च विद्यमाने मुक्ताभिधानस्य, मुक्ता वयमित्यज्ञजनतावञ्चकत्वमात्रत्वाच्च । ननु, तस्य तावदेव चिरमिति श्रुतिसिद्धत्वाज्जीवन्मुक्तेः, किमेवं निन्द्यते इति चेत् । सत्यम् । गतत्रपाणां कि-

मप्यशोभनत्वाभावात् । श्रुतौ, न विमोक्ष्येऽचिरं संपत्स्ये इत्यादि-वर्तमानकाले मोक्षाभावं, प्रारब्धकाले प्रतिबन्धकं च, भविष्यत्प्रयोगं चापश्यमानानां यथाकामं वादिनां कामचाराणां सिद्धान्ते किमप्याश्चर्यं नास्तीति भावः । ननु जीवन्मुक्त्यनभ्युपगम्यमाने उपदेष्ट्रभावे वेदान्तसम्प्रदायोच्छेदापत्तिस्तवाप्यनिष्टतमा । अज्ञस्योपदेष्टृत्वाचार्यत्वाद्यसंभवात् । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति श्रीमुखोक्तेः । अन्यथाऽऽचार्य्याणामनाप्तत्वप्रसङ्गेन तदुक्तसिद्धान्तस्याप्रामाण्यमावयोः समानं स्यादितिचेन्न । आवयोः सामान्याभावात् । अस्मत्सिद्धान्ते संप्रदायप्रवर्त्तकानां नित्यमुक्तश्रीपुरुषोत्तमपरिजनावतारत्वात् । श्रीभगवदवतारवत् । स एकधा भवति त्रिधा भवति सहस्रधा भवतीति श्रुतेः । तस्मादुक्तश्रुतेः श्रीपुरुषोत्तमसाक्षात्कारात् स्वरूपगुणादिविषयकशाश्वत्यनुभूतिलक्षणः सद्योमोक्षः । सर्वकर्मात्मिकाऽविद्यानिवृत्तिरपि तस्यापरपर्यायः । किञ्चोक्तलक्षणानुभूतेरंशत्रयवत्त्वेऽपि, न केनाप्यंशेन क्रियाजन्यत्वाभावाद् अनित्यत्वादिकल्पनावकाशः । क्रिया तावच्चतुर्धा— उत्पादनप्रापणसंस्करणविक्रियाभेदात् । तत्रोत्पादनं नाम, प्रागभावप्रतियोगित्वे सति उत्तरकालीनसत्तायोगः । यथा कटादिः । प्रापणं नाम प्राप्तिक्रियायोगः । यथा रूपादिसाक्षात्कारः । संस्करणं च योग्यताविशेषसम्पादनम् । तद् द्विविधं— गुणाधानं, मलापकर्षणं चेति । तत्र गुणाधानं, नाम गुणविशेषसम्बन्धः । यथोपनयनादियोगः । राज्याद्यभिषेको वा । दोषध्वंसलक्षणं द्वितीयम् । यथा दर्पणादिमलनिराकरणम् । विक्रिया च परिणामादिमत्त्वम् । यथा दुग्धादीनां दध्याद्यवस्थापत्तिरिति विवेकः । अंशत्रैविध्यं तु— आश्रयविषयस्वरूपभेदात् । तत्र, न तावदाश्रयतोऽस्याः क्रियाजन्यत्वम् । आश्रयस्तावत् प्राप्तः क्षेत्रज्ञः । स च

नोत्पाद्यः । अजत्वात् । यन्नैवं तन्नैवम् । कथादिवद्, इत्यनुमानात् । न जायते म्रियते वा विपश्चिदितिश्रुतेः । अजो नित्यः शाश्वतोऽयं पुराण इत्यादिस्मृतेः । नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्य इत्यादिसूत्राच्च । ननु, देवदत्तो जातो, यज्ञदत्तो मृत इत्यादिप्रत्यक्षप्रत्ययाद्, यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीत्युपक्रम्य सर्व एव आत्मानो व्युच्चरन्तीति श्रुतेश्च जीवस्योत्पत्तिः प्रमाणसिद्धा, कथमुक्तसिद्धान्तोपपत्तिरिति चेन्न । तथात्वे कृतनाशाऽकृताभ्यागमप्रसङ्गात् । नचोक्तप्रमाणविरोध इति वाच्यम् । तस्यान्यपरत्वात् । तथाहि । देवदत्तो जात इत्यादिप्रत्यक्षप्रत्ययस्य शरीरविषयकत्वं सुप्रसिद्धमेव । आत्मनः प्रत्यक्षाविषयत्वात् । नाप्युदाहृतश्रुतेरात्मोत्पत्तिपरत्वं संभाव्यम् । वियदादिवत् सृष्ट्यादिप्रकरणेषु काप्यश्रवणात् । शरीरसंयोगमात्रस्यैव तद्विषयत्वं निश्चीयते । स्थूलशरीरयोग एव जीवजन्मेति श्रुत्या प्रतिपाद्यते, न तु स्वरूपेण । अन्यथा अविनाशी वा अरे आत्मा अनुच्छित्तिधर्मा, अजो ह्येको, न जायते म्रियते वेत्याद्यनेकश्रुतिविरोधात् । तस्मादात्मा नोत्पद्यते इति सिद्धम् । नाऽपि, प्राप्तिक्रियाविषयत्वे । स्वरूपेण नित्यप्राप्तत्वात् । प्रमाणान्तरानपेक्षत्वाच्च । जीवात्मा, नाप्यः । नित्यप्राप्तत्वात्, स्वस्वरूपत्वाद् अन्यप्रमाणानपेक्षत्वाच्च । यन्नैवं तन्नैवम् । रूपादिवदिति प्रयोगात् । न हि स्वप्रमासौ प्रमाणापेक्षेति भावः । नाप्ययं विक्रियार्हः । षड्विधविकारहीनत्वात् । जीवात्मा न विकार्यः । जन्मादिशून्यत्वात् । यन्नैवं तन्नैवम् । दध्यादिवदित्यनुमानात् । *अविकार्योऽयमुच्यते इति श्रीमुखोक्तेः* । पूर्वोक्तश्रुतिभ्यश्च । नापि संस्करणक्रियार्होऽयमात्मा । ज्ञानादिनित्यगुणाश्रयत्वात् । गुणान्तराधानानर्हत्वात् । राजादिवत् । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् । ज्ञोऽत एवेत्या-

दिशास्त्रात् । विज्ञानरूपत्वेन दोषापकर्षणानर्हत्वात् । स्वभावतोऽपास्तदोषत्वाच्च । य आत्माऽपहतपाप्मा विजरो विमृत्युरित्यादिश्रुतेः । ननु आत्मनोऽनाद्यविद्यायोगोऽभिमतो न वा । नाद्यः । अविद्यासंपर्के सति तथा भूतदोषापकर्षणरूपसंस्कार्यतायाा अवश्यम्भावित्वात् । तथात्वे चासंस्कार्यत्वप्रतिपादनासिद्धेः । नापि द्वितीयः । बन्धमोक्षव्यवस्थानुपपत्तेरितिचेन्न । स्वरूपे सर्वथैव दोषसंसर्गाभावेऽपि तस्य धर्मभूतज्ञानमनादिकर्मात्मिकाविद्यया संकुचितम् । घटस्थदीपप्रभेव । सैव बद्धावस्थेति भण्यते । पुनश्च भगवत्प्रसादादुक्तलक्षणबन्धनस्य तत्साक्षात्कारेण ध्वंसे सति पूर्वोक्तलक्षणो मोक्ष इति सर्वं समञ्जसमिति भावः । तत् सिद्धमाश्रयतोऽस्याः क्रियाजन्यत्वानर्हत्वम् । नापि विषयतोऽस्यास्तत्तायोगः । विषयश्चास्याः परब्रह्मभूतो भगवान् वासुदेवः । तस्य चाऽक्रियाजन्यत्वे विवादाभावात्, सर्वास्तिकानां संमतत्वात् । नापि स्वरूपतस्तत्तायोगः संभाव्यः । ब्रह्मानुभूतेः शाश्वतत्वात् । ब्रह्मानुभूतिः शाश्वती । स्वाभाविकत्वात् । क्रियाजन्यत्वाभावाच्च । ब्रह्मवदिति प्रयोगात् । तस्मान्न केनाप्यंशेनाऽत्र विकारित्वजन्यत्वानित्यत्वादिसंभावनावकाश इति भाव इत्यलं प्रासङ्गिकेन ॥

श्रीपुरुषोत्तमसाक्षात्कारादुक्तलक्षणः सद्यो मोक्ष इत्युक्तम् । स च साक्षात्कारो भगवदनुग्रहैकलभ्यः । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुतेः । तत्साधनानि चोक्तलक्षणानि ज्ञानभक्तिप्रपत्त्यादीनि । तेषां तदनुग्रहे विनियोगः शास्त्रादेवोपलभ्यते । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । आत्मानमेव लोकमुपासीत, मुमुक्षुर्वै शरणं व्रजेदित्यादिश्रुतिभ्यः । ननु तेषां स्वातन्त्र्यमेव, किमनुग्रहेण, गौरवादितिचेन्न । तेषां व्यभिचारदर्शनात् । अनुग्रहस्य चाऽन्वयव्यतिरेकेणाव्यभिचारित्वश्रवणाच्च ।

शृण्वन्तोऽपि बहवो यं न विद्युः । नाऽयमात्मा प्रवचनेन लभ्यो, न मेधया, न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् इत्यादिश्रुतेः । ननु, ततस्तु तं पश्यति निष्कलं ध्यायमान इत्यादिश्रुतेर्ध्यानस्यैव निदिध्यासनरूपस्य साक्षात्काराऽसाधारणसाधनत्वदर्शनात् तद्बाध इति चेन्न । अविरुद्धत्वात् । निदिध्यासनादेः करणत्वं, तज्जन्यतदनुग्रहश्च व्यापार इति सर्वं समञ्जसम् । ननु ध्यानादिजन्यो मोक्षस्तर्हि तस्यानित्यत्वमवश्यं भावि । तथाच मोक्षोऽनित्यः । ध्यानजन्यत्वात् । घटादिवदिति चेन्न । ध्यानस्य तत्प्रतिबन्धकाऽऽवरणनिवृत्तावेवोपक्षीणत्वान्न तज्जन्यत्वशङ्कावकाशः । अन्यथा तत्रापि साम्यात् । ननु यदि ध्यानस्य साक्षात्कारहेतुत्वाभ्युपगमस्तर्हि ब्रह्मण उपास्यत्वापत्तेः । उपास्यस्यैव ध्येयत्वात् । तथात्वे च तस्य ब्रह्मत्वासिद्धिरेव । यद्वाचाऽनभ्युदितं येन वागभ्युद्यते, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते इति श्रुत्या कण्ठरवेणोपास्यस्य ब्रह्मत्वनिषेधादितिचेन्न । तस्य प्रतीकाद्युपासनाविषयनिषेधपरत्वात् । तथाहि । लौकिकवैदिकयोरारोप्यस्यैव निषेधविषयत्वं, न प्रमाणसिद्धस्य वस्तुन इति न्यायस्य सर्वसम्मतत्वात् । यथा नद्यादिजले गङ्गात्वमारोप्य पुनर्नेयं गङ्गेति निषेधस्य सम्भवो, न साक्षाद्भागीरथ्यां विष्णुपादोदकया, तस्याः प्रमाणसिद्धत्वात् । यथा वा पुरुषो वा व गौतमाग्निर्योषिद्वा व गौतमाग्निरिति पञ्चाग्निविद्यायां योषित्पुरुषयोरुपासनार्थमग्नित्वमारोपितं रूपकेण । तन्निषेधश्चेदनर्हत्वाभावात् सम्भवत्येव, न तु प्रत्यक्षप्रमाणसिद्धे हवनीयाग्नौ तत्स्पर्शानिकाशो वक्तुं शक्यः । प्रमाणसिद्धत्वादेव । तथा प्रकृतेऽपि अतद्वस्तुषु नाम ब्रह्मेत्युपासीतेति श्रुत्योपासनार्थं नामादिप्रतीकेषु

आरोपितब्रह्मत्वनिषेधो, न सर्वेश्वरे साक्षात्परब्रह्मणि श्रीवासुदेवे तत्स्पर्शाविसरः। सर्ववेदान्तसिद्धान्तत्वात्, तदर्थमेवं शारीरकशास्त्राऽऽरम्भत्वाच्च। तच्च, नेदं ब्रह्मेनीदङ्कारेणैव द्योत्यमानम्। श्रुतत्यागाश्रुतकल्पनोद्भावनस्यानवकाशत्वात्। इदङ्कारास्पदसर्वमपञ्चात्यन्तविलक्षणं ब्रह्मेति श्रुत्यर्थः। इतरथा प्रमाणसिद्धस्यापि निषेधविषयत्वाङ्गीकारे स्वरूपस्याऽपि निषेधविषयत्वं शक्यते वक्तुम्। तुल्ययोगक्षेमत्वात्। ननु ब्रह्मण उपास्यत्वे मोक्षेऽपि सशरीरत्वप्रसङ्गः। तथात्वे च, न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत इत्यन्वयव्यतिरेकश्रुतेर्मोक्षेऽपि दुःखानुभवो दुर्वारः, कथमिव नित्यानवच्छिन्नाऽऽनन्दावाप्तिसंभव इतिचेन्न। उक्तश्रुतेः प्राकृतशरीरविषयकत्वात्। अप्राकृतशरीरस्य जक्षन् क्रीडन् रममाणः, स ब्रह्मणा विपश्चितेत्यादिप्रमाणसिद्धत्वादन्यथा परमेश्वरेऽपि, तत्संभावना देवानांप्रियेण भवता कर्तव्या स्यात्। तथात्वे च सार्वज्ञनित्यानन्दत्वाद्यसम्भवे ईश्वरत्वस्यैव नाशात् तत्प्रतिपादकं सर्वमपि वेदान्तशास्त्रं दत्ततिलाञ्जलि स्यादित्यलं विस्तरेण। तत सिद्धं ज्ञानभक्त्यादीनां श्रीभगवदनुग्रहे विनियोग इति। तदुपपादने च स्वस्वाधिकारानुकूलसर्वकर्मणां विनियोगः। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेत्यादिश्रुतेः। अत्रापि प्रवृत्तिर्जन्मसमये श्रीकृष्णानुग्रहदृष्ट्यावलोकितस्यैव कचित्सात्त्विकस्य मुमुक्षोर्भवति, नान्यस्येति मोक्षधर्मे श्रीभीष्मेण निर्णीतम्। जायमानं हि पुरुषं यं पश्येन्मधुसूदनः * सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः। पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चैव मानसं समभिप्लुतमित्यादि। तथाचाऽयं क्रमः। परब्रह्मणः श्रीपुरुषोत्तमस्य वासुदेवस्य भगवतो रमानिवासस्य

साक्षात्कारादुक्तलक्षणो मोक्षः । साक्षात्कारश्च तदनुग्रहैकलभ्यः । स च ज्ञानभक्तिप्रपत्त्यादिषु यथाधिकारमेकतमेन तेनाऽपि प्रसादितः श्रीकृष्णः स्वानुग्रहेण ज्ञानादीनां व्याजीकृत्य स्वात्मानं दर्शयित्वा ह्यात्मभावापत्तिलक्षणां मुक्तिं प्रापयतीति तत्र ज्ञानभक्त्यादयो विनियुज्यन्ते । शास्त्रमुखेन ज्ञानाद्युद्भावने च सर्वेषामपि स्वस्वाधिकारोचितधर्माणां विनियोगः । धर्मसिद्धिश्चाऽपि जन्मप्रभृये श्रीमधुसूदनस्य कृपैकलभ्येति । अत्र प्रमाणवाक्यानि पूर्वमेवोदाहृतानि इति सम्प्रदायोक्तसाधनप्रक्रियाविवेकः ।

अथावशिष्टं व्याख्यायते । कथम्भूतस्य तवेत्यपेक्ष्याह ॥ रूपरूपिण इति ॥ रूपाणि रूपयतीति तथा । तस्य नामरूपव्याकरणशीलस्येति यावत् । बहु स्यां प्रजायेय, नामरूपे व्याकरवाणीत्यादिश्रुतेः। रूपाणि अजहदचिन्त्यानन्तशक्तिगुणादिसम्पत्प्रायसारभूतानि मत्स्यकूर्मवराहहयग्रीवादीनि रूपयितुं शीलमस्येति वा । अजायमानो बहुधा व्यजायत इत्यादिश्रुतेः । यद्वा रूपाणामादित्यादिरूपाणां लोकप्रकाशकत्वेन प्रसिद्धानामपि प्रकाशकं रूपं विद्यतेऽस्येति स तथा तस्येति विग्रहः । येन सूर्यस्तपति तेजसेद्धः, यस्य भासा सर्वमिदं विभातीति श्रुतेः । यदादित्यगतं तेजो जगद् भासयतेऽखिलम् * यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धि मामकमिति भगवद्वचनाच्च । निर्विकारतां दर्शयन् विशिनष्टि ॥ सुखबोधरूपिण इति ॥ सुखं च बोधश्च सुखबोधस्तथाभूतं रूपं विद्यतेऽस्य स तथा तस्येति यावत् । विज्ञानमानन्दं ब्रह्मेति श्रुतेः ॥ १३ ॥

इति श्रीहयग्रीवानुग्रहाश्रितेन श्रीपुरुषोत्तमप्रसादाख्य-
वैष्णवेन विरचिते सविशेषनिर्विशेषश्रीकृष्ण-
स्तवव्याख्याने श्रुत्यन्तसुरद्रुमे फल-
निर्णयशाखा नवमी ॥ ९ ॥

## अथ शाखा दशमी ।

अथ, तत्तु समन्वयादिति सूत्रे व्याकुर्वन् स्तौति ।

त्वामखण्डरसमात्मवल्लभं
वेदवाक्यमत एव बोधयत् ॥
पर्यवस्यति परेऽखिलात्मनि
त्वय्यनन्त सुखरूप ! शोधयत ॥ १४ ॥

त्वामखण्डरसमिति ॥ वेदवाक्यं त्वय्येव पर्यवस्यतीति संबन्धः । वेदानां वाक्यं सर्वमपि बोध्यम् । सामान्याभिप्रायेणैकवचनम् । त्वयि सर्वज्ञानैश्वर्यशक्त्याद्यनन्तसद्विशेषाश्रये जगज्जन्मादिकारणे परे ब्रह्मणि भगवति श्रीवासुदेवे पर्यवस्यति प्रतिपादकतया मुख्यटत्त्वैव समन्वेतीति । सर्वे वेदा यत्पदमामनन्ति, नामानि सर्वाणि यमाविशन्ति, सर्वे वेदा यत्रैकीभवन्तीत्यादिश्रुतिभ्यः । वेदैश्च सर्वैरहमेव वेद्यः । वेदे रामायणे चैव पुराणे भारते तथा * आदावन्ते च मध्ये च हरिः सर्वत्र गीयते । नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वतीत्यादिस्मृतिभ्यः । नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति शास्त्रात् कृत्स्नस्याऽपि वेदस्य क्रियायामेवान्वयोऽभ्युपगन्तव्यः । पञ्चप्रकारवाक्यराशिरूपो वेदः । विधिमन्त्रनामधेयनिषेधाऽर्थवादरूपः । तत्र विधिर्नाम प्रयोजनवदर्थविधानेनाऽर्थवान् । स चाऽप्राप्तमर्थं विधत्ते । यथाऽग्निहोत्रं जुहुयात् स्वर्गकाम इत्यत्राप्राप्तप्रयोजनवद्धोमरूपम् अर्थं विधत्ते । होमेन स्वर्गं भावयेदिति वाक्यार्थः । यत्र प्रकारान्तरेण प्राप्तं कर्म तत्र तदुद्देशेन गुणमात्रं विधत्ते । यथा दध्ना जुहुयादित्यत्र होमस्याग्निहोत्रवाक्यप्राप्तत्वात् तदुद्देशेन दधिमात्रगुणवि-

धानम् । दध्ना होमं भावयेदिति वाक्यार्थः । यथाऽऽहुः—

सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे ।
विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादतेति ॥

सर्वत्रेत्यत्र धातोरिति योजनीयम् । विधिशक्तेर्गुणे उपसंक्रमात् । यत्र तूभयमपि अप्राप्तं, तत्र विशिष्टं विधत्ते । यथा, सोमेन यजेतेत्यत्र । न चेदन्येन शिष्टा इति सूत्रात् । अन्येन चेद् यदि शिष्टा उपदिष्टा न स्युस्तदा विशिष्टविधानमिति सूत्रार्थः । सोमयागयोरुभयोरप्यप्राप्तत्वात् सोमविशिष्टयागविधानम् । सोमवता यागेनेष्टं भावयेदित्यर्थः । नचोभयविधाने वाक्यभेद इति वाच्यम् । विशिष्टस्यैकत्वात् । विशिष्टविधौ च मत्वर्थलक्षणा । सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति । मत्वर्थलक्षणां विना सोमस्याऽन्वयासंभवात् । किञ्च, यजेदित्यत्र अस्त्यंशद्वयं—याजिधातुः, प्रत्ययश्च । प्रत्ययेऽप्यस्त्यंशद्वयम्— आख्यातत्वं, लिङ्त्वं च । आख्यातत्वं दशसु लकारेषु विद्यते । लिङ्त्वं च पुनर्लिङ्येव । तत्र आख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते । तत्र भावना नाम प्रवृत्तेर्भवितुर्भवनानुकूलो भावकव्यापारविशेषः प्रेरणाख्यः प्रवृत्तिहेतुत्वेन सर्वलोकानुभवप्रसिद्धः । राज्ञा प्रेरितो, बालेन प्रेरितो, मित्रेण प्रेरितोऽहमिति प्रवर्त्तमाना वदन्ति । सा च प्रवर्त्तकराजाऽऽदिनिष्ठा । तत्रोत्कृष्टस्य निकृष्टं प्रति प्रवर्त्तना आज्ञा प्रेषणेति चोच्यते । निकृष्टस्योत्कृष्टम्प्रति प्रार्थनायाञ्चाध्येषणेति चोच्यते । समस्य समं प्रति उत्कर्षनिकर्षौदासीन्येन प्रवर्त्तनानुज्ञानुमतिश्चोच्यते । ते चाज्ञादयो ज्ञानविशेषा इच्छाविशेषाश्चेतनधर्मा लोके प्रसिद्धाः, वेदे तु विधिना प्रेरितः करोमीति व्यवहर्त्तारो भवन्ति । तत्र स्वयमचेतनत्वादपौरुषेयत्वाच्च वैदिकस्य विधेर्न चेतनधर्मेणाऽऽज्ञादिना प्रवर्त्तकता संभवति । अतः स्वधर्मेणैव साऽभ्युपगन्तव्या । गत्यन्तरा-

ऽसंभवात् । स एव धर्मश्चोदना प्रवर्त्तना प्रेरणा विधिरुपदेशः शब्दभावनेति चोच्यते । प्रवर्तना हि प्रवृत्तिहेतुव्यापारः । विधिशब्दस्य चाख्यातत्वेन दशलकारसाधारणेन पुरुषप्रवृत्तिरूपार्थभावनां प्रति वाचकत्वम् । तज्ज्ञानहेतुत्वमित्यर्थः । सा च ज्ञातैवाऽनुष्ठातुं शक्यते इति शब्दभावनाधीहेतोरपि शब्दस्य तद्धेतुत्वं परम्परया भवत्येव । ज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात् । ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने मानाभावात् । ज्ञानजनकश्च व्यापारो विधिज्ञानं विधिनिष्ठशक्तिज्ञानं शक्तिविशिष्टविधिज्ञानं च । तत्राद्ययोरन्यतरस्य शब्दभावनात्वम् । तृतीयस्य तु तत्र करणत्वमिति विवेकः ।

तथाच विधिना स्वज्ञानं जन्यते, प्रवर्त्तनात्वेनाभिधीयतेऽपीति विधिज्ञानमेव शब्दभावना । तस्यां च पुरुषप्रवृत्तिरूपार्थभावनैव भाव्यतया अन्वेति, करणतया च प्रवृत्तिवाचकशक्तिमद्विधिज्ञानमेव । भावनासाध्यस्यापि फलावच्छिन्नां भावनां प्रति करणत्वम् । फलकरणत्वादेव यागस्येव स्वर्गभावनां प्रति न विरुध्यते । तथाच पुरुषः स्वप्रवृत्तिं भावयेत् । केनेत्यपेक्षायां पुरुषप्रवृत्तिवाचकशक्तिमत्तया ज्ञानेन विधिशब्देनेति करणांशपूरणम् । कथमित्याकाङ्क्षायामर्थवादैः स्तुत्वेतीतिकर्त्तव्यतांशपूणम् । इयं गौः क्रय्येति लौकिके विधौ बहुक्षीरा जीवद्वत्सा रूपवत्या समांसमीनेत्यादि लौकिकाऽर्थवादवत् । ननु आख्यातत्वेन विधिशब्दादुपस्थिता पुरुषप्रवृत्तिर्भाव्यतयाऽन्वेतीति निर्विवादः । करणं तु कथमन्वेति, तस्यानुपस्थितत्वादितिचेत् । श्रूयताम् । विधिशब्दस्तावच्छ्रवणेनोपस्थापितः । तस्य पुरुषप्रवृत्तिवाचकशक्तिरपि स्मरणेनोपस्थापिता । तदुभयवैशिष्ट्यं तन्निष्ठा ज्ञानता च मनसेति वाचकशक्तिमत्तया ज्ञातो विधिशब्द उपस्थित एव । अनेन यच्छक्त्नुयात् तद्

भावयेदिति प्रतिशब्दं स्वाध्यायविधितात्पर्याच्छब्दातिरिक्तेनापि मानेन उपस्थितं शाब्दबोधे भासते एव । यथा ज्योतिष्टोमादिनामधेयम् । यथा वा लिङ्गविनियोज्यमन्त्रः। तदुक्तम् । अनुपस्थितविशेषणा विशिष्टबुद्धिर्न भवति, न त्वनभिहितविशेषणेति सङ्क्षेपः। स च विधिर्द्विविधः । अभिधानाभिधेयभेदात् । तत्र कृतिसाध्यत्वे सतीष्टसाधनत्वमभिधेयविधित्वम् । अयमेव विधिर्लिङर्थः । एतेन भावनानियोगवादो निरस्तो बोध्यः । प्रमाणाभावात् । अभिधानविधिश्चतुर्धा उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः, प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिः प्रथमः । यथाऽग्निहोत्रं जुहोतीत्यत्र कर्मणः करणत्वेनान्वयः । होमेनेष्टं भावयेदिति, न तु होमं कुर्यादिति । तथात्वे च साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यगतफलसम्बन्धो न स्यात् । करणत्वेन होमेनेष्टं भावयेदित्यन्वये, किं तदिष्टमित्यपेक्षायां फलविशेषसम्बन्धो घटत इत्यर्थः । ननूत्पत्तिविधौ इष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं शाब्दबोध इतिचेन्न । विधिश्रुतेरेवेष्टबोधकत्वात् । सा हि पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसम्बन्धं बोधयति । तस्माद्युक्त उत्पत्तिविधौ कर्मणः करणत्वेनान्वयः । १ । अङ्गसम्बन्धबोधको विनियोगविधिः । यथा, दध्ना जुहोतीति तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते । दध्ना होमं भावयेदिति । एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि । एतत्सहकृतेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते । तत्र पदान्तरानपेक्षो रवः श्रुतिः । सा त्रिधा— विधात्री अभिधात्री विनियोक्त्री चेति । तत्र लिङाद्यात्मिका विधात्री । व्रीह्यादिश्रुतिरभिधात्री । यस्य च शब्दस्य श्रवणादेव सम्बन्धप्रतीतिः सा विनियोक्त्री । सा त्रि-

धा— विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति। तत्र वि-भक्तिश्रुत्याऽङ्गत्वं यथा, व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाऽङ्गत्वम् । व्रीहीन् प्रोक्षती तिद्वितीयाविभक्त्या श्रुत्या प्रोक्ष-णस्य व्रीह्यङ्गत्वम् । तच्च प्रोक्षणम् अपूर्वसाधनं, न तु व्रीहिस्वरूप-साधनमानर्थक्यात् । इमामगृभ्णन् रशनाम् ऋतस्य, अश्वाभिधानी-मादत्ते इसत्र द्वितीयाश्रुत्या मन्त्रस्य अश्वाभिधान्यङ्गत्वम् । आ-हवनीये जुहोतीत्यत्र आहवनीयस्य सप्तमीश्रुत्या होमाङ्गत्वमेवमन्यो-ऽपि विनयोगो विभक्तिश्रुत्या द्रष्टव्यः । पशुना यजेतेत्यत्रैकत्वपुं-स्त्वयोः समानाभिधानश्रुत्याकारकाङ्गत्वम् । यजेतेत्याख्याताभि-हितसंख्याया भावनाङ्गत्वम् । समानाभिधानश्रुतेरेकपदश्रुत्या च यागाङ्गत्वम् । नचामूर्तस्य कथं यागाङ्गत्वमिति वाच्यम् । कर्तृप-रिच्छेदद्वारा तदुपपत्तेः । कर्ता चाक्षेपलभ्यः । आख्यातेन हि भावना-उच्यते । सा कर्त्तारं विनाऽनुपपन्ना कर्त्तारमाक्षिपतीति बोध्यम् । इति श्रुतिविचारः ॥

सामर्थ्यं लिङ्गम् । यत्र सामर्थ्यादर्थनिर्णयस्तल्लिङ्गम् । साम-र्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते * इति वचनात् । तेन श्रुते-रङ्गत्वम् । यथा बर्हिर्देवसदनं दामीति मन्त्रस्य कुशलवनाऽङ्गत्व-म् । स हि लवनं प्रकाशयितुं समर्थः । तच्च द्विधा— सामान्यसम्बन्ध-बोधकप्रमाणान्तरापेक्षं, तदनपेक्षं चेति । तत्र यदन्तरेणानुष्ठानं न संभवति तस्य तदङ्गत्वम् । तदपेक्षं केवललिङ्गात् । यथाऽर्थज्ञान-स्य कर्माऽनुष्ठानाऽङ्गत्वम् । न ह्यर्थज्ञानमन्तरेण कर्मानुष्ठानं सम्भव-ति । यदन्तरेण यत् सम्भवति तस्य तदर्थत्वं तदनपेक्षम् । यथो-क्तस्य मन्त्रस्य लवनाङ्गत्वम् । लवनं हि उपायान्तरेण कर्तुं शक्य-म् । अतो न मन्त्रो लवनस्वरूपार्थः सम्भवति, किन्त्वऽपूर्वसाधनी-भूतलवनप्रकाशनार्थः । तत्त्वं च सामर्थ्यमात्रादवगम्यते । लवन-

प्रकाशनमात्रे सामर्थ्यात् । अतोऽवश्यं प्रकरणादि सामान्यसंबन्धबोधकं स्वीकार्यम् । दर्शपूर्णमासप्रकरणे हि मन्त्रपाठादेवमवगम्यते । अनेन मन्त्रेण दर्शपूर्णमासापूर्वसंबन्धि किञ्चित् प्रकाश्यते इति । अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात् । किं तदपूर्वसम्बन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते । तद्धि बर्हिःसंस्कारद्वाराऽपूर्वसंबन्धीति सामर्थ्यान्मन्त्रस्य तदर्थत्वे सति नानर्थक्यम् । तस्माद्बर्हीति मन्त्रस्य प्रकरणाद्दर्शपूर्णमाससंबन्धितयाऽवगतस्य सामर्थ्याल्लवनाऽङ्गत्वमिति सिद्धम् । इति लिङ्गविचारः ॥

समभिव्याहारो वाक्यम् । समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम् । यथा, यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति । अत्र न द्वितीयादिविभक्तिः श्रूयते । केवलं पर्णताजुह्वोः समभिव्याहारमात्रम् । तस्मादेव पर्णताया जुह्वङ्गत्वम् । न चानर्थक्यम् । जुहूशब्देनापूर्वलक्षणात् । तदयं वाक्यार्थः । पर्णतया अवद्यत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदिति । एवञ्च, पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति, नान्यथेत्यवगम्यते इति न पर्णताया वैयर्थ्यमिति वाक्यनिर्णयः ॥

उभयाकाङ्क्षा प्रकरणम् । यथा, प्रयाजादिषु सन्निधौ यजतीत्यत्र हि द्रव्यविशेषस्य निर्देशात् समिद्यागेन भावयेदिति । किमित्यस्त्युपकार्याकाङ्क्षा, दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् । कथमित्यत्रोपकारकाकाङ्क्षया प्रयाजानां दर्शपूर्णमासाङ्गत्वं सिद्ध्यतीति लक्षणसमन्वयः । तदिदं प्रकरणं क्रियाया एव विनियोजकं, न द्रव्यगुणयोः । तयोस्तु क्रियायोगाद्विनियोजकं कुत इतिचेच्छृणु । यजेत स्वर्गकाम इत्यत्राख्यातांशेन आर्थी भावनाऽभिधीयते,

भावयेदिति । सा चांशत्रयमपेक्षते । किं भावयेत्, केन भावयेत्, कथं भावयेदिति । तत्र भाव्याकाङ्क्षायां स्वर्गो भाव्यतयान्वेति । स्वर्गं भावयेदिति । करणाकाङ्क्षायां समानपदोपात्तो यागः करणतयान्वेति, यागेन स्वर्गं भावयेदिति । ततः कथमिति कथम्भावाऽऽकाङ्क्षा जायते । तस्यां च सत्यां यत्सन्निधौ पठितमश्रूयमाणफलं च क्रियाजातं तदेवोपकार्याकाङ्क्षाया इतिकर्तव्यतात्वेनान्वयमनुभवितुं योग्यम् । क्रियाया एव लोके कथम्भावाकाङ्क्षायामन्वयदर्शनात् । न हि, कुठारेण छिन्द्यात्, कथमित्यपेक्षायां, हस्त इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति । किं तर्हि, हस्तेनोद्यम्य निपात्येति उच्चार्यमाणे उद्यमनिपतने एव, हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सर्वजनीनमेतत् । किञ्च, कथम्भावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा । कथमुत्तः प्रकारवाचित्वात् । सामान्यस्य भेदको विशेषः प्रकारः । सामान्यं च क्रियारूपमेवाख्यातेनोच्यते । यजेत स्वर्गकाम इत्यस्यायमर्थः । यागेन तथा कर्तव्यं यथा स्वर्गो भवतीति । क्रियासामान्यस्य च विशेषः क्रियैव भवति । न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति । एवञ्च, करणगतक्रियाविशेषाकाङ्क्षापरनामधेयकथम्भावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम् । स च करणगतक्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तः क्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम् । तस्य च करणगतत्वं तदुपकारकत्वमेव । तेन विना यागेन अपूर्वाजननात् । न हि उद्यमनिपातनव्यतिरेकेण कुठारेण द्वैधीभावो जायते । तत् सिद्धं कथम्भावाकाङ्क्षायां क्रियैवान्वेतीति । अत एव द्रव्यदेवतयोर्यागसंपादनद्वाराऽन्वय इति सांप्रदायिकैरुक्तमिति प्रकरणविचारः ॥ ४ ॥

देशसामान्यं स्थानम् । तच्च द्विविधं— पाठसादेश्यमनुष्ठानसा-

देश्यं चेति । यथाहुः—

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।
पाठानुष्ठानसादेश्याद्विनियोगस्य कारणमिति ॥

पाठसादेश्यमपि द्विविधं-यथासंख्यपाठः, सन्निधिपाठश्च । तत्रैन्द्राग्नमेकादशकपालं निर्वपेत् । वैश्वानरं द्वादशकपालमिति । एवं क्रमविहितेष्टिष्वेन्द्राग्नी रोचनादिव इत्यादीनां याज्यानुवाक्यायुगलानां मन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासंख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते । समानदेशत्वात् । यानि तु वैकृताङ्गानि प्राकृताङ्गानुवादेन विहितानि सन्दंशपतितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात् । तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सम्बद्ध्यते । उपस्थितत्वात् । पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि आग्नीषोमीयः पशुरनुष्ठीयते । तस्मिन्नेव दिने ते धर्माः पठ्यन्ते । अतस्तेषां कैमर्थ्याकाङ्क्षायाम् अनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बद्ध्यते । अतो युक्तं तेषामनुष्ठानसादेश्यात्तदर्थत्वमिति सङ्क्षेप इति स्थानविचारः ॥ ५ ॥

अथ यौगिकः शब्दः समाख्या । सा द्विधा— वैदिकी लौकिकी च । होतृचमस इत्यत्र होतुश्चमसभक्षणाङ्गत्वं वैदिक्या समाख्ययाऽवगम्यते । अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या चावगम्यते आध्वर्यवमिति सङ्क्षेपः । इति समाख्याविचारः । ६ । एतेषां पूर्वपूर्वमेव प्राबल्यम् । उत्तरोत्तरस्य च दौर्बल्यं बोध्यम् । इति प्रमाणसङ्ग्रहः ।

एवं निरूपितानि श्रुत्यादिषट् प्रमाणानि । एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेत-

स्येतरूपेण यानि विनियुज्यन्ते तान्यङ्गानि । तानि द्विविधानि–सिद्धरूपाणि, क्रियारूपाणि च । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । तानि दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि–गुणकर्माणि, प्रधानकर्माणि च ।

तान्येव, सन्निपत्योपकारकाणि, आरादुपकारकाणीति चोच्यन्ते । तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं सन्निपत्योपकारकम् । यथा अवघातप्रोक्षणादि । तच्च दृष्टाऽर्थमदृष्टार्थं, दृष्टादृष्टार्थं च । दृष्टाऽर्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तद्धि द्रव्यत्यागांशेन दृष्टं, देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेवाश्रयिकर्मेत्युच्यते । द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा, प्रयाजादि । एतद् द्विविधमप्यङ्गजातं न यागस्वरूपप्रयुक्तम् । स्वरूपे आनर्थक्यात् । तदन्तरेणापि तत्सिद्धेः । किन्तु अपूर्वप्रयुक्तमेव । न हि तदन्तरेणाऽपूर्वं भवतीत्यत्र किमपि प्रमाणमस्ति । तस्याऽदृष्टत्वात् । तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूप उपयोगादुत्पत्त्यपूर्वार्थत्वम् । आरादुपकारकाणां तु स्वरूपे उपयोगात् परमापूर्वार्थत्वमिति संक्षेपः । इति विनियोगविधिः ॥

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावाद् अविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । स चाऽविलम्बो नियते क्रमे आश्रयणे भवति । अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते । तत्र क्रमो नाम विततिविशेषः । पौर्वापर्यरूपो वा । तत्र च षट्प्रमाणानि । श्रुत्यर्थपठनस्थानमुख्य-

प्रवृत्तिभेदात् । तत्र क्रमपरं वचनं श्रुतिः । तद् द्विविधं—केवलक्रमपरं, तद्विशिष्टपदार्थपरं चेति । तत्र, वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम् । वेदिकरणादेर्वचनान्तरेण विहितत्वात् । वेदो दर्भमुष्टिः । वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् । अत्र भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् । यत्र प्रयोजनवशेन क्रमनिर्णयः स अर्थक्रमः । यथाऽग्निहोत्रयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । स चाऽयं पाठक्रमाद् बलवान् । यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधः, अदृष्टार्थत्वं च स्यात् । न हि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्टप्रयोजनमस्ति । अर्थपदार्थबोधवाक्यानां यः क्रमः स पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतानि अर्थप्रत्ययं जनयन्ति । यथार्थप्रत्ययं च पदानामनुष्ठानात् । स च पाठो द्विविधः— मन्त्रपाठो ब्राह्मणपाठश्चेति । अथ प्रकृतौ नानादेशानां पदार्थानां विकृतौ वचनादेकस्मिन् देशेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानम् । इतरयोस्तु पश्चादयं यः क्रमः स स्थानक्रमः । स्थानं नाम उपस्थितिः । यस्य देशेऽनुष्ठीयन्ते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । तथाहि । ज्योतिष्टोमे त्रयः पशुयागाः । अग्नीषोमीयः, सवनीयः, अनुबन्ध्यश्चेति । ते च भिन्नदेशाः । अग्नीषोमीय औपवसथ्येऽह्नि । सवनीयः सुत्याकाले । अनुबन्ध्यस्त्वन्ते । साद्यस्क्रो नाम सोमयागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । तत्र त्रयोऽपि पशुयागाः साद्यस्क्रे चोदकप्राप्ताः । तेषां च तत्र साहित्यं श्रुतं, सह पशूनालभेत इति । तच्च साहित्यं सवनीयदेशे । तस्य प्राधान्यप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च । स-

वनीयदेशेऽनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति । अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रम् । अनुबन्ध्यस्य तु स्वस्थानातिक्रममात्रं, सवनीयस्थानातिक्रमश्च स्यात् । एवमनुबन्ध्यदेशेऽग्नीषोमीयस्य सवनीयस्य द्रष्टव्यः । तथाच सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम् । आश्विनग्रहग्रहणानन्तरं हि सवनीयदेशे प्रकृतौ, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति । आश्विनग्रहग्रहणानन्तरं तस्य विहितत्वात् । तथाच साद्यस्क्रेऽप्याश्विनग्रहग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात् प्रथममनुष्ठानम् । इतरयोस्तु पश्चादित्युक्तम् । अथ प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः । येन क्रमेण प्रधानानि क्रियन्ते तेनैव चेत् क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैस्तुल्यं व्यवधानं भवति । व्युत्क्रमेण त्वनुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानम् । अन्येषामत्यन्तव्यवधानं स्यात् । तथाचुक्तम् । प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः । अत एव, प्रयाजशेषेणादौ आग्नेयहविषोऽभिघारणं, पश्चादैन्द्रस्य दध्नः । आग्नेयैन्द्रयागयोः पौर्वापर्यात् । अत्र द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यम् एकान्तरितव्यवधानं भवति । आग्नेयहविरभिघारणाग्नेययागयोरैन्द्रयागहविरभिघारणेन व्यवधानात् । ऐन्द्रहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात् । अतश्चादौ आग्नेयहविरभिघारणम् । तत ऐन्द्रस्य हविषः । तत आग्नेययागस्तत ऐन्द्रो याग इत्येवं क्रमो मुख्यक्रमात् सिद्धो भवति । यदि त्वादौ ऐन्द्रहविषोऽभिघारणं, तत आग्नेयस्य क्रियते तदा याज्यानुवाक्यस्य क्रमवशादादावाग्नेयस्यानुष्ठानादाग्नेय-

यागतदङ्गहविरभिघारणयोरत्यन्तव्यवधानम् । ऐन्द्रयागतदङ्गहविरभिघारणयोस्त्वत्यन्तव्यवधानं स्यात् । तच्च न युक्तम् । अतो युक्तः प्रयाजशेषाभिघारणस्य मुख्यक्रमात् क्रम इति ॥

अथ सह प्रयुज्यमानेषु प्रधानेषु सन्निपतितानामङ्गानामावृत्त्याऽनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः [redacted] प्रवृत्तिक्रमः । यथा प्राजापत्याङ्गेषु, प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालेन विहिता । अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पाद्यम् । तत्र प्राजापत्यानां सम्प्रतिपन्नदेवताकत्वेनैकस्मिन् कालेऽनुष्ठानादुपपद्यते साहित्यम् । तदङ्गानां चैकस्मिन् कालेऽनुष्ठानमशक्यम् । न ह्यनेकेषां पशूनामुपाकरणमेकस्मिन् काले कर्तुं शक्यम् । अतः साहित्यम् अव्यवधानेनानुष्ठानात् सम्पाद्यम् । एकस्योपाकरणं कृत्वाऽपरस्योपाकरणमिति । तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति । तदेवं निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः ॥

अथ फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं नाम, कर्मजन्यफलभोक्तृत्वम् । [redacted] च, यजेत स्वर्गकाम इत्येवंरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद् इत्यादिभिस्त्वग्निदाहादौ निमित्ते कर्म विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते । तच्च फलस्वाम्यं तस्यैव योऽधिकारिविशेषणविशिष्टः । अधिकारिविशेषणं च तदेव यत् पुरुषविशेषणत्वेन श्रुतम् । अत एव, राजा राजसूयेन स्वाराज्यकामो यजेतेत्यनेन स्वाराज्यमुद्दिश्य

त । साधनद्वयस्य पक्षे प्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः । तथाऽऽहुः । विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति * तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते इति । अस्यार्थः । यस्य यदर्थत्वं प्रमाणान्तरेणाऽप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । यथा यजेत स्वर्गकाम इति । यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते । किन्त्वनेन विधिनेति भवत्ययमपूर्वविधिः । पक्षे प्राप्तस्याऽप्राप्तांशपूरको यो विधिः स नियमविधिः । यथा, व्रीहीनवहन्तीति । अनेन विधिनाऽवघातस्य न वैतुष्यार्थत्वं बोध्यते । अन्वयव्यतिरेकसिद्धत्वात् । किन्तु नियमः । स चाप्राप्तांशपूरकः । वैतुष्यस्य नानोपायसाध्यत्वात् । यस्यां दशायामवघातं परित्यज्योपायान्तरं ग्रहीतुमारभ्यते तस्यां दशायामवघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते । अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः । उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः । यथा पञ्च पञ्चनखा भक्ष्या इति । इदं वाक्यं न भक्षणविधिपरम् । तस्य रागतः प्राप्तत्वात् । नाऽपि नियमपरम् । पञ्चनखाऽपञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षे प्राप्त्यभावात् । किन्तु, अपञ्चनखभक्षणस्याप्राप्तत्वात् तत्परमेवेदं वाक्यम् । अपञ्चनखा न भक्ष्या इति वाक्यार्थः । सा परिसंख्या द्विधा— श्रौती लाक्षणिकी चेति । तत्र यथाऽत्र ह्येतावपन्ति इत्यत्र श्रौती । एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् । पञ्च पञ्चनखा भक्ष्या इति तु लाक्षणिकी । इतरनिवृत्तिवाचकस्य पदस्याभावात् । अत एवैषा त्रिदोषग्रस्ता । दोषत्रयं च श्रुतहानिरश्रुतकल्पना, प्राप्तबाधश्चेति । श्रुतस्य पञ्चनखभक्षणस्य हानादश्रुताऽपञ्चनखभक्षणस्य निवृत्तिकल्पनात् । प्राप्तस्याऽपञ्चनखभक्षणस्य

बाधनात् । तत्र दोषत्रये दोषद्वयं शब्दनिष्ठम् । अप्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति विवेकः । तस्मान्मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणाच्च मन्त्राम्नानस्यानर्थक्यमिति सिद्धम् । अतो युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनाऽर्थवत्त्वम् ॥

तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यथार्थप्रकाशने प्रयोजनं सम्भवति तदा तत्रैव विनियोगः । येषां तु न सम्भवति तेषां यत्र सम्भवस्तत्रोत्कर्षः । येषां तु क्वापि न सम्भवति तदुच्चारणस्य क्रत्वङ्गतयाऽदृष्टार्थत्वं सर्वथाऽपि तु तेषां नानर्थक्यमिति सङ्क्षेपः । इति मन्त्रव्यवस्था ॥

अथ नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् । तथाहि । उद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दो यागनामधेयम् । तेन च विधेयार्थपरिच्छेदः क्रियते । अनेन हि वाक्येनाप्राप्तत्वात् फलोद्देशेन यागो विधीयते । यागसामान्यस्य च विधेयत्वात् । यागविशेष एव विधीयते । तत्र कोऽसौ विशेष इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति विज्ञायते । उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात् । तस्य च याजिना सामानाधिकरण्यं न नीलोत्पलादिवत् । तत्र हि उत्पलशब्दस्यार्थादुत्पलत्वादन्यो नीलशब्दस्य वाच्याऽर्थोऽस्ति नीलगुणः । लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम् । उद्भिच्छब्दस्य तु यज्यवगतयागविशेषत्वान्नान्यो वाच्योऽर्थोऽस्ति । विशेषवाचित्वात् तस्य । अतश्चार्थान्तरवाचित्वाभावेन नामधेयस्य नीलशब्दवत् सामानाधिकरण्यम् । किं तर्हि, वैश्वदेव्यामिक्षेत्यत्रामिक्षाशब्दवत् । वैश्वदेवीशब्दस्य हि देवतातद्धितत्वात् । तस्य च, साऽस्य देवतेति सर्वनामार्थे स्मरणात् । सर्वनाम्ना चोपस्थितविशेषशब्दवाचित्वेन विशेषपरत्वम् । तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायाम्, आमि-

क्षापदसान्निध्यात् अमिक्षारूपो विशेष इत्यवगम्यते । यथाहुः । अमिक्षां देवतायुक्तां वदत्येवैष तद्धितः * अमिक्षापदसान्निध्याद् तस्यैव विषयार्पणमिति । तथा श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना प्रतीयते । तदर्थस्तद्धितेनैव, त्रयाणामेकवाच्यतेति । तस्माद् यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यम् । एवं सामान्यस्याविधेयत्वाद् यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिसामानाधिकरण्यम् । तस्मान्नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् । यथाहुः । तदधीनत्वाद्यागविशेषसिद्धेरिति संक्षेपः ॥

अथानर्थहेतुकर्मणः सकाशाद् पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषानुबन्धित्वम् । तथाहि । यथा विधयः प्रेरणामभिदधतः स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति । एवं न कलञ्जं भक्षयेदित्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्ति । ननु कथं निषेधानां निवर्तनाप्रतिपादकत्वं, यावता, न भक्षयेत् हन्तव्य इत्यादौ अव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयते । ततश्च यथा यजेतेत्यादौ यागकर्तव्यता वाक्यार्थ एवं निषेधेषु तद्धात्वर्थवर्जनकर्मता वाक्यार्थो, न निवर्तनेति चेन्मैवम् । अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयाऽयोगात् । न हि अन्योपसर्जनमन्येनान्वेति । मा भूद् राजपुरुषमानयेत्यत्र राज्ञ अयनान्वितत्वम् । ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वय, आरुण्यस्यैकहायन्या । नाऽपि कलञ्जादिपदार्थैरन्वयः । तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्थनञर्थेना-

ऽन्वयायोगाद्, एकहायन्या इत्यारुण्येन । अनश्चान्येनान्वयायोगाद् नञर्थः प्रत्ययार्थेन सम्बध्यते । तस्य प्राधान्यात् क्रमभावनयेत्यारुण्यादीनि । तत्रापि नाख्यातांशवाच्ययाऽऽर्थीभावनया । तस्या अपि लिङ्त्वांशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितत्वात् अतो लिङ्त्वांशेन नञ् संबध्यते । तस्य सर्वापेक्षया प्राधान्यात् । नञश्चैष स्वभावो यत् स्वसंबन्धिप्रतिपक्षबोधकत्वम् । नास्तीत्यत्र ह्यस्तीति सत्त्वशब्देन संबध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयति । तदिह लिङर्थस्तावत् प्रवर्तना । अतस्तेन संबध्यमानो नञ् प्रवर्तनाप्रतिपक्षं निवर्तनां गमयति । विधिवाक्यश्रवणे, अयं मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवन्निषेधवाक्यश्रवणेऽयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापारनिवर्तनायाः प्रतीतेः । अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः । एवञ्च विधिनिषेधयोर्भिन्नार्थत्वं सिद्धं भवति । हननादिवर्जनकर्तव्यतावाक्यार्थपक्षे तु कर्तव्यताया एवोभयत्र प्रतिपाद्यत्वात् तयोरेकार्थत्वं स्यात् । तत्र, न युक्तम् । यथाहुः । अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः * दृश्यते तादृगेवेदं विधानप्रतिषेधयोरिति । तथा, फलबुद्धिप्रमेयाधिकारिबोधकभेदतः * पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोरिति । येषां मते इष्टसाधनत्वं लिङर्थस्तन्मते लिङ्सम्बद्धो नञ् इष्टसाधनत्वप्रतिपक्षम् अनिष्टसाधनत्वं गमयति । सर्वथाऽपि तु नञः प्राधान्यात् प्रत्ययेनाऽन्वयः । यदा तु तदन्वये किञ्चिद् बाधकं तदा स्वगत्या धात्वर्थेनान्वयः । तच्च बाधकं द्विविधं - तस्य व्रतमित्युपक्रमो, विकल्पप्रसक्तिश्च । अनेन बाधकद्वयेन नञ्युक्तेषु केषुचिद् वाक्येषु पर्युदासाश्रयणं भवति । तदभावे निषेध एव । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् * प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ् इति च तयोर्लक्षणम् । तत्र, नेक्षेतोद्यन्तमादित्यं नास्तयन्तं कदा-

चन * नोपरक्तं न वारिस्थं न मध्यनभसो गतमित्यादौ पर्युदासाश्रयणम् । तस्य व्रतमित्युपक्रमात् । तथाहि । व्रतशब्देन कर्तव्योऽर्थ उच्यते । अतश्च स्नातकस्य कर्त्तव्यार्थानां वक्तव्यत्वेनोपक्रमात्, किं तत्र कर्तव्यमित्यपेक्षायाम्, अग्रे, नेक्षेतोद्यन्तमादित्यमित्यादौ कर्त्तव्य एवार्थो वक्तव्यः । आकाङ्क्षिताभिधानात् । अस्मिन् वाक्ये कश्चित् कर्त्तव्य एवार्थो वक्तव्यः । तदुक्तौ च न नञः प्रत्ययार्थेन संबन्धो योग्यः । तत्संवन्धे कर्तव्यार्थोक्तेरसंभवात् । प्रत्ययार्थाव्यवतारितो नञ् धातुना संवध्यते । तदन्वये च न नञः प्रतिषेधकत्वम् । विधायकान्वयेनैव तस्य प्रतिषेधकत्वात् । प्रतिषेधकत्वस्य विधायकत्वप्रतिपक्षत्वात् । नामधातुयोगे न नञः प्रतिषेधकत्वम् । तयोरभिधायकत्वात् । यथाहुः । नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः * वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनाविति । अतश्च, नेक्षेतेत्यत्र नञो धातुयोगाद्, नञीक्षतिभ्याम् ईक्षणविरोधी कश्चनाऽर्थः प्रतिपाद्यते । कस्तदर्थ इत्यपेक्षायाम्, ईक्षणविरोधी लक्ष्यमाणोऽनीक्षणसंकल्पेन भावयेदिति । भाव्याकाङ्क्षायां च, एतावता हैनसा वियुक्तो भवतीति वाक्यशेषगतः पापक्षयो भाव्यतया संवध्यते । एवञ्चात्र पापक्षयार्थं संकल्पस्य कर्तव्यतया विधानात् तस्य व्रतमित्यनेनैकवाक्यता सिद्धा भवतीति संक्षेपः । नानुयाजेषु ये यजामहं करोतीत्यत्र विकल्पप्रसक्त्या पर्युदासाश्रयणम् । तथाहि । अनुयाजेषु, ये—यजामहप्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या । निषेधानां प्राप्तिसापेक्षत्वात् । अप्राप्तस्य निषेधाऽसंभवाच्च । सा प्राप्तिश्च न तावद्धननादाविव रागतः संभवति । अतो, यजतिषु ये यजामहं करोतीति शास्त्रादेव सा प्राप्तिर्वक्तव्या । शास्त्रप्राप्तस्य च निषेधे विकल्पः स्यात् । शास्त्रेण भ्रान्तिनिमित्तरागस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात् ।

तस्माद्विहितमतिषिद्धत्वाद्विकल्प एव स्यात्। [redacted] च न युक्तः। शास्त्रस्याप्रामाण्यप्रसङ्गात्। अतो नञोऽनुयाजशब्देन संबन्धमाश्रित्य पर्युदास आश्रयणीयः। नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तलक्षणात्। अनुयाजव्यतिरिक्तेषु, ये यजामहे करोतीत्यत्र वाक्ये, ये-यजामहः कर्तव्यतया न विधीयते, यजतिषु ये यजामहं करोतीत्यनेनैव विहितत्वात्। किन्तु सामान्यशास्त्रविहित-ये-यजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते। यद्, यजतिषु ये यजामहं करोति तदनुयाजव्यतिरिक्तेषु, ये-यजामहः कर्तव्यतया प्राप्तः, अनुयाजेषु तु [redacted] न कर्तव्यतया प्राप्तो, न वाप्रतिषिद्ध इति न विकल्पः। लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्नानुयाजेष्विति वाक्यं नाऽप्रामाण्यम्। अतः पर्युदासाश्रयणे न किंचिद्बाधकम्। नानुयाजेष्वित्यत्र विकल्पभयात् पर्युदासाश्रयणमिति सिद्धम्। यत्र तु पर्युदासो ह्याश्रयितुं न शक्यते तत्र विकल्पप्रसक्तावपि निषेध एवाश्रीयते। यथा, नातिरात्रे षोडशिनं गृह्णातीत्यत्रातिरात्रे षोडशिनं गृह्णातीति शास्त्रेण प्राप्तम्, अतिरात्रे षोडशिग्रहणं प्रतिषिध्यते इति विहितप्रतिषेधाद् विकल्पप्रसक्तावपि पर्युदासो नाश्रीयते। अशक्यत्वात्। यदि नञः षोडशिपदेन संबन्धस्तदातिरात्रषोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्। तथाचातिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधः। अत एवातिरात्रपदेन न नञः संबन्धः। पूर्वोक्तविधिबाधात्। तस्मात् पर्युदासानुपपत्त्या निषेध एवाश्रीयते। विकल्पोऽप्यभ्युपगम्यते। गत्यन्तराभावात्। तस्मादुक्तन्यायेन निषेधानां पुरुषार्थानुबन्धित्वमिति सिद्धम्। एवं सर्वस्याऽपि वेदस्य पुरुषाऽर्थानुबन्धित्वम् इति निषेधविचारः॥

अथाऽर्थवादः। यथा विध्यादीनाम् अध्ययनविध्युपात्तानां

नानर्थक्यं तथाऽर्थवादानामपि तद्रूपात्तत्त्वाविशेषादानर्थक्यानुपपत्तेः। तेषां स्वार्थप्रतिपादने प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम् । ते चार्थवादा द्विविधाः— विधिशेषाः, निषेधशेषाश्च । तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां, वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादानां विधेयार्थस्तावकतयाऽर्थवत्त्वम् । बर्हिषि रजतं न देयमित्यादिनिषेधशेषाणां सोऽरोदीदित्यादीनामर्थवादानां तु निषेध्यनिन्दकतयाऽर्थवत्त्वम् । अतश्च लक्षणया प्राशस्त्यम् अर्थवादैर्बोध्यते । तच्च प्राशस्त्यज्ञानं शब्दभावनाया-मितिकर्तव्यत्वेनान्वेतीति । ननु किं प्राशस्त्यं, न तावत् फलसाधनत्वम् । तस्य हि यागेन स्वर्गं भावयेदित्यर्थभावनान्वयवशेन विधिवाक्यादेव लभ्यत्वात् । नान्यत् । प्रवृत्तावनुपयोगादिति चेदुच्यते । बलवदनिष्टाननुबन्धित्वं प्राशस्त्यम् । तच्चानिष्टहेतुत्वज्ञाना-ल्लभ्यते । इष्टहेतावपि कलञ्जभक्षणादावनिष्टहेतुत्वस्याऽपि दर्शनात् । विहितश्येनफलस्य च शत्रुवधस्यानिष्टानुबन्धित्वं दृष्टम् । अतो यावत् साधनस्य फलस्य चानिष्टाऽहेतुत्वं नोच्यते तावदिष्टहेतुत्वेन ज्ञानेऽपि तत्र पुरुषो न प्रवर्तते । अत एवोक्तम् ।

फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते ।

केवलं प्रीतिहेतुत्वात् तद्धर्म इति कथ्यते इति ॥ अतः फलतो वाऽनर्थाननुबन्धित्वरूपप्राशस्त्यबोधनेनाऽर्थवादा विधिशक्तिमुत्तम्भयति । क उत्तम्भः । स्वतः फलतो वाऽनर्थानुबन्धित्वशङ्कायाः प्रवृत्तिप्रतिबन्धिकाया विगमः । इत्येव च विधेः प्रवृत्तिजनने साहाय्यमर्थवादैः क्रियते इति विधिरर्थवादसाकाङ्क्षः । एवमर्थवादा अप्यभिधया गौण्या वा वृत्त्या भूतमर्थं वदन्तोऽपि स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिमाकाङ्क्षः । सोऽयं नष्टाश्वदग्धरथन्यायेन सम्प्रयोगः । यथैकस्य दग्धस्य रथस्य जीवद्भिरश्वै-

रन्यस्याविद्यमानात्वस्य सम्प्रयोगः परस्परस्यार्थवत्त्वाय, तथाऽर्थवादानां प्रयोजनांशो विधिना पूर्यते । विधेश्च शब्दभावनाया इतिकर्तव्यत्वांशोऽर्थवादैरिति । तदिदमुभयोः श्रवणे पूर्णमेव वाक्यम् । एकस्य श्रवणे त्वन्यस्य कल्पनया पूरणीयम् । यथा, वसन्ताय कपिञ्जलानालभत इति विधावर्थवादांशोऽश्रुतोऽपि कल्प्यते । प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्याद्यर्थवादे विध्यंशः । विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति सूत्रात् । विधिना स्तुतिसाकाङ्क्षेण प्रयोजनसाकाङ्क्षाणामर्थवादानामेकवाक्यत्वाद्विधीनां विधेयाना स्तुत्यर्थेन स्तुतिप्रयोजनेन स्तुतिरूपेण प्रयोजनसाकाङ्क्षेण लाक्षणिकेनाऽर्थेन वानर्थक्याभावादर्थवादा धर्मे प्रमाणानि स्युरिति सूत्रार्थः । किञ्चार्थवादस्तावत् त्रिविधः— गुणवादोऽनुवादो भूतार्थवादश्च ॥

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूताऽर्थवादस्तद्धानादर्थवादस्त्रिधा मत इति ॥

तत्रादित्यो यूपः, यजमानः प्रस्तर इति गुणवादः । विधेयगुणपरत्वात् । अग्निर्हिमस्य भेषजमित्यनुवादः । प्रत्यक्षप्रमाणसिद्धवस्तुपरत्वात् । वज्रहस्तः पुरन्दर इति भूतार्थवादः । यथाभूतार्थप्रतिपादनपरत्वात् । इत्यर्थवादनिर्णयः ॥

अथ शाब्दी भावना नाम पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः । स एव विध्यर्थः । लिङाद्विश्रवणे, अयं मां प्रवर्तयतीति तस्य नियमेन प्रतीतेः । यत्तु इष्टसाधनत्वं स्वरूपेणैव विध्यर्थो न प्रेरणात्वेनेति तार्किकाणां दुराग्रहस्तत्र । गौरवादन्यलभ्यत्वात् । अन्यथाऽयोग्यत्वाच्च । इच्छाविषयसाधनत्वापेक्षया प्रवर्तनात्वस्यातिलघुत्वम् । इच्छाविषययोरप्रवेशात् । प्रवृत्तिज्ञानवत् । इच्छाज्ञानस्याऽपि प्रवृत्तिहेतुत्वापातात् । किञ्च, तथात्वे इष्टसाधनमिति शब्दोऽपि वि-

धिपर्यायः स्यात्। नच तथात्वमम्भवः। सन्ध्योपासनं ते इष्टसाधनं, तस्मात् त्वं कुर्विति सह प्रयोगात्। पर्यायाणां च सह प्रयोगाभावात्। स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु पुरुषाऽभावाच्छब्दनिष्ठ एव प्रेरणापर्यायः। स एव यजेतेत्यत्र लिङ्ङ्स्वांशेनोच्यते इति सङ्क्षेपः॥

अथाख्यातांशवाच्याऽऽर्थी भावना। केयमार्थी भावनेति? केचित् पुरुषव्यापार इत्याहुस्तन्न। यागादावतिप्रसङ्गात्। यागादेः प्रत्ययार्थत्वाभावात्। यागविषयकपुरुषप्रयत्नो भावनेति तार्किकाः। स एवाख्यातार्थः। यजेतेत्याख्यातश्रवणे यागेन यजेतेति प्रतीतेर्जायमानत्वादित्याहुः। तन्न। रथो गच्छतीत्यादौ यत्नस्यात्मधर्मत्वेन रथादावनुपपत्तेः। नच तत्र लक्षणाभ्युपगम्यते इति वाच्यम्। मुख्ये सम्भवति गौणस्यान्याय्यत्वात्। सिद्धान्ते अन्योत्पादनानुकूल व्यापारसामान्यमेवाख्यातार्थो, न तु यत्नमात्रम्। पूर्वोक्तदोषात्। करोत्यर्थोऽपि स एव, न यत्नमात्रम्। करोतेश्चेतनाचेतनकर्तृकाऽऽख्यातसामानाधिकरण्यात्। व्यापारविशेषाऽऽकाङ्क्षायां चेच्छादिः पश्चादवगम्यते। उद्यमननिपतनादिवत्। तस्य च सर्वाऽनुगतत्वात् स एवाख्यातार्थः। तस्मादन्योत्पादनानुकूलो व्यापार आर्थी भावना। सैवाख्यातांशस्य वाच्यभूता। तस्याश्च भाव्याकाङ्क्षायां स्वर्गादि भाव्यत्वेन सम्बध्यते। करणाकाङ्क्षायां यागादिः करणत्वेन, इतिकर्त्तव्यताकाङ्क्षायां प्रयाजादय इतिकर्त्तव्यतात्वेन सम्बध्यन्ते। तथाच, यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात् सिद्धं यागादेर्धर्मत्वम्। स एवाथातोधर्मजिज्ञासेत्यादिद्वादशाध्यायेषु भगवता कारुणिकेन जैमिनिना विचारित इति पूर्वमीमांसकानां प्रक्रिया जिज्ञासूपकारार्थं संगृहीता। तथाचोक्तसूत्रस्यायमर्थः। आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्, अथा-

ऽतो धर्मजिज्ञासेत्यस्मिन्नुपक्रमसूत्रे तावद् वेदस्याऽध्ययनकरणकभावनाविधिभाव्यस्य फलवदर्थपरत्वमुक्तम्। चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे, धर्मे चोदना प्रमाणमिति वेदप्रामाण्यव्यापकं कार्य्यमिति कार्यपरत्वं शास्त्रस्याभासितम् । तत्र वायुर्वै क्षेपिष्ठा देवतेत्यादिवाक्यपठितार्थवादानां धर्मे प्रामाण्यमस्ति न वेति संशये पूर्वपक्षमाह । आम्नायस्येति । वेदस्य क्रियार्थत्वात् क्रिया एवार्थो विषयः प्रतिपाद्यो यस्य स क्रियार्थः । तस्य भावस्तत्त्वं, तस्मादिति हेतोः, अर्थवादानां प्रामाण्यं नास्ति । किं तर्हि, इत्याशङ्क्याऽऽह । अनदर्थानामानर्थक्यमिति । न सा क्रियार्थो येषां तेऽतदर्था अर्थवादादयस्तेषामानर्थक्यमर्थशून्यत्वमेवास्तु । तथैव वेदान्तानामपि । न हि स्वाध्यायोऽध्येतव्य इत्यध्ययनविध्युपात्तानां निष्फलब्रह्मपरत्वे प्रामाण्यं युक्तमिति प्राप्ते सिद्धान्तमाह । विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति। वायुर्वै क्षेपिष्ठेत्यादीनामर्थवादानां, वायव्यं श्वेतमालभेतेत्यादिविधिवाक्यैरेकवाक्यत्वात्। तद्विधेयार्थानां स्तुत्यर्थेन स्तुत्यर्थरूपेण द्वारेण प्रामाण्यं, स्युरिति । वायुर्वै क्षिप्रगामी देवता, तद्देवताकं कर्म क्षिप्रमेव फलं दास्यतीत्यर्थः । एवञ्च वेदान्तानामपि अध्ययनविध्युपात्तत्वेनाप्रामाण्याऽयोगाद् उक्तन्यायेन क्रत्वर्थकर्तृप्रतिपादनेन नैराकाङ्क्ष्यं बोध्यम्। तथैव ब्रह्मविद्याया अपि तदङ्गत्वेन परम्परया कर्माङ्गत्व समञ्जसम्। तत्र त्वंतत्पदार्थपराणां वाक्यानां कर्मकर्तृदेवतास्तावकत्वं, तज्ज्ञानस्य परविद्याख्यस्य फलस्तावकत्वमिति विवेक इति कर्ममीमांसकानां पक्ष निरासयन्नाह ॥ परे इति ॥ चेतनाचेतनाभ्यामुत्कृष्टे वस्तुनि श्रीपुरुषोत्तमे जीवप्रकृतिकालकर्मादिभ्यः सर्वत उत्कृष्टे इत्यर्थः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः । न तत्समश्चाभ्यधिकश्च दृश्यते, न तस्य कश्चिज्जनिता न चाधिप इत्या-

दिश्रुतिभ्यः सर्वोत्तमत्वे हेतुमाह ॥ अखिलात्मनीति ॥ अखिलानां कालकर्मप्रधानक्षेत्रज्ञादीनां ह्यन्तरात्मनि नियन्तरीत्यर्थः । अन्तःप्रविष्टः शास्ता जनानां, य आत्मा अपहतपाप्मा, दिव्यो देव एको नारायणः, तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादिश्रुतिभ्यो, न तावत् क्रत्वर्थकर्तृपरो वेदान्तो यतस्तत्स्तावकत्वेन नैराकाङ्क्ष्यं स्यात्. अपि तु तस्मात्परोऽखिलात्मभूतःश्रीपुरुषोत्तमः परब्रह्मभूतः प्रत्यक्षादिप्रमाणागोचरो वेदान्तैकगम्यस्त्वमेव । तस्मात् त्वय्येवाखिलाम्नायस्य समन्वयः । यतो वा इमानि भूतानि जायन्ते, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, सदेव सोम्येदमग्र आसीत्, तदैक्षत बहु स्याम्, आत्मा वा इदमेक एवाग्र आसीत्, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, अनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, एको ह वै नारायण आसीन्न ब्रह्मा नेशान इत्यादिश्रुतिभ्यः । यदुक्तं सर्वस्य वेदस्य क्रियापरत्वम् । तत्तुच्छम् । सर्वस्यापि धर्मजातस्य ब्रह्मविविदिषयैव मोक्षासाधारणोपायभूतयोपक्षीणत्वस्य श्रवणात् कर्मण एव मोक्षसाधनविद्योत्पादकत्वेन तदङ्गत्वं वक्तुं समञ्जसम् । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादिश्रुतेः । यदुक्तं—क्रत्वर्थकर्तृप्रतिपादनेन नैराकाङ्क्ष्य वेदान्तानामित्यप्येतेनैव परास्तम् । प्रत्युत कर्मण एव जिज्ञासोर्विशेषणत्वेन तदधिकारित्वसंपादनेनैव नैराकाङ्क्ष्यात् । वेदान्तशास्त्रं न कर्मपरम् । कर्मणो जिज्ञासोत्पादने एवोपक्षीणत्वात् । रूपादिप्रकाशने चक्षुरादिवदित्यनुमानात् । ननु कारकाणां सर्वेषामपि कर्मसाधनत्वं तावदविवादम् । तथाच कर्तुरपि कारकत्वाविशेषात् क्रियाङ्गत्वे कथं चानुपपत्त्यवकाशः । नच ब्रह्मण आप्तकामतया तद्भिन्नत्वात् कर्मकर्तृत्वाभावादुक्तसिद्धान्तभङ्ग इति

वाच्यम् । ब्रह्मणस्तथात्वेऽपि तद्भिन्नत्वाभावात् । तत्त्वमस्यादिभिर्वाक्यैः क्षेत्रज्ञस्य कलङ्कभूतस्य कर्तुस्तत्त्वविधानेन स्तूयमानत्वाद् न तद्भिन्नं किमपि ब्रह्मशब्दाभिधेयमस्तीति चेन्न । बालभाषितत्वादिति पूर्वाचार्यैः परास्तत्वात् । तथाहि । बालाना मतत्वे तत्त्वप्रेक्षावता तमोऽपिहितबुद्धीना सच्छास्त्राचार्यसंस्कारजन्यज्ञानहीनानां पशुसदृशानां वाग्विसर्गत्वादित्यर्थः । प्लवा ह्येते अदृढा यज्ञरूपा, अन्तवदेवास्य तद् भवति, मृत्वा पुनर्मृत्युमापद्यतेऽर्द्यमानाः स्वकर्मभिरित्यादिश्रुतिपरिनिन्दिते क्षतस्वभूते कर्मणि तत्त्वमिति प्रेक्षा येषाम् । अधर्मं धर्ममिति या मन्यते तमसा वृता ॥ सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसीति लक्षणसमन्वयात् । तमोपिहितधियां ज्ञानहीनाना, ज्ञानेन हीनाः पशुभिः समाना इत्यादिलक्षणसपक्षानां वाग्विसर्ग इत्यादि । तथाच श्रुतिः—अविद्यायामन्तरे वर्तमानाः स्वय धीराः पण्डितम्मन्यमानाः ॥ जङ्घन्यमाना अपि यन्ति मूढा अन्धेन नीयमाना यथान्धा इत्यादि । तस्य सर्वकर्मकर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्याच्च । यदासीत् तदधीनमासीत् । तस्य भासा सर्वमिदं विभातीत्यादिश्रुतेः । स्वतन्त्रस्य पराङ्गत्वासंभवात् । न हि स्वमुखेनैव श्रुतिभिर्निन्दिते कर्मणि तस्य समन्वयो वक्तुं शक्यः । अदृष्टश्रुतत्वात् । किन्तु स्तुतिविषये एव तथात्वम् । तथाच स्तुतिविषयस्तु परब्रह्मभूतः श्रीवासुदेव एव । स एव सर्वशास्त्रान्वयभूमिः ।

ननु यथा ब्रह्मणः स्तुतिः श्रूयते तथा कर्मणोऽपि । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतमित्यादिना श्रूयमाणत्वात् तुल्य एव न्याय इति चेन्न । वेदविषयः स यः सर्वत्र स्तूयते एव, न तु क्वापि निन्द्यते । कर्मणस्तु स्तुतिनिन्दयोरुभयोर्विषयत्वदर्शनान्न तत्त्वयोगः । यथेह कर्मचितो लोकः क्षीयते इत्यादिनिन्दाश्रवणात्-

द्। तस्माज्जगज्जन्मादिकारणे निखिलदोषगन्धलेशानर्हमाहात्म्यसीम्नि अचिन्त्यानन्तस्वाभाविकसमस्तकल्याणगुणशक्तिधाम्नि सर्वपुरुषार्थदातृत्वाश्रयशीले महाविभूतौ सर्वशरण्ये ब्रह्मेशादिसुरर्षिगणनिकायकिरीटकोटीडितपादपीठे परब्रह्मणि वासुदेवे श्रीमुकुन्दे एव वेदान्तानां समन्वय इति संक्षेपः। यदुक्तं ब्रह्मविद्याया अपि स्तावकत्वेन कर्माङ्गत्वम्। तत्तुच्छतरम्। बाधितत्वात्। तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय, तमेव विद्वानमृत इह भवति, ब्रह्मविदाप्नोति परं, तरति शोकमात्मवित्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति, तथा विद्वान्नामरूपाद्विमुक्तः, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः, तदा देवमविज्ञाय दुःखस्यान्तं निगच्छतीत्याद्यन्वयव्यतिरेकसावधारणोपनिषद्वाक्यशतेभ्यः। पुरुषार्थोऽतः शब्दादिति बादरायण इति सूत्राच्च। ननूक्तश्रुतीनां कर्तृकर्तृस्वरूपयाथात्म्यप्रतिपादनत्वेन कर्तृसंस्कारद्वारेणात्मज्ञानस्य कर्माङ्गत्वमुक्तमेव। फलश्रवणस्य त्वर्थवादमात्रत्वात्। तदुक्तं, द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति सूत्रेण। अत्र द्रव्ये फलश्रुतिः— यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्याद्या। संस्कारे फलश्रुतिः—यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इत्याद्या। कर्मणि फलश्रुतिः—वर्म वा एतद्यज्ञस्य क्रियते यत् प्रयाजानुयाजा इज्यन्ते इत्याद्येति। यथाऽन्येषु द्रव्यादिषु पर्णमयीद्रव्ययजमानाञ्जनादिसंस्कारप्रयाजाऽऽदिरूपेषु अपापश्लोकश्रवणादिश्रुतिरर्थवादस्तथात्राऽपि पुरुषार्थश्रुतिरर्थवाद इति यावत्। तथाचानुमानं— तत्त्वज्ञानं कर्माऽङ्गम्। फलशून्यत्वे सति कर्माङ्गाश्रयत्वात् पर्णतादिवदिति। नच कर्मणि आत्मज्ञानस्याप्रयोजकत्वमिति शङ्क्यम्। आत्मनो देहाऽऽदिव्यतिरेकज्ञानमन्तरेण परलोकगामित्वानिश्चयाज्ज्योतिष्टोमादौ

प्रवृत्तिरेव न स्यात् । तस्मात् क्रतुप्रवृत्त्यर्थमौपनिषदज्ञानस्योपकारकत्वात् कर्माङ्गत्वं सिद्धमित्यर्थः । नच कर्तुरात्मनोऽन्यो मुमुक्षुवेद्यो मुक्तोपसृप्यो वेदान्तवाक्यैरुपादिश्यते इति वाच्यम् । वेदान्तेष्वेव ब्रह्मज्ञानस्य कर्मप्राधान्यं सूचयाद्भिस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्ता एव देहातिरिक्तप्रत्यक्स्वरूपयाथात्म्यवेदनपरा इत्यवश्याङ्गीकर्तव्यत्वात् । किञ्च, जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे, यक्ष्यमाणो ह वै भगवन्तोऽहमस्मीत्यादिश्रुतिभ्यो, जनककैकयादीनां परविद्यावतां कर्माचारदर्शनात् । लिङ्गान्यप्यत्र प्रमाणानि । यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति । तं विद्याकर्मणी समन्वारभेते इति विद्याकर्मणोः समुच्चयश्रवणाच्च । आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे इत्यादौ वेदज्ञानवतोऽपि कर्मसु विनियोगदर्शनात् । कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः, एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे, यावज्जीवमग्निहोत्रं जुहोतीत्यादिश्रुतेः । आत्मवित्सामान्यनिर्देशश्चेतिचेन्न । असम्भवादित्याह ॥ त्वां बोधयदिति ॥ किं कुर्वद् पर्यवस्यतीति शङ्कायां, त्वामेव बोधयदिति योजनीयम् । त्वा कर्मकर्तुः प्रत्यगात्मनोऽत्रोपहेयमन्यन्धाहाद्, अधिकम् अनवधिकानन्तकल्याणगुणं हेयसम्बन्धशून्यं अतिशयसाम्यरहितं बोधयज्ज्ञापयादित्यर्थः । अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादिति सिद्धान्तसूत्रात् । एष सर्वेश्वर एष भूतपाल एष भूताधिपतिः, स कारणं कारणाधिपाधिपः, न चास्य कश्चिज्जनिता न चाधिपः, एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद्वातः पवते भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः, यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, सत्यसङ्कल्प इत्यादिश्रुतिभ्यः ।

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते, तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च, पिताऽहमस्य जगतो माता धाता पितामहः, गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्, मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जय, मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेत्यादिस्मृतेश्च । तमेव विशिनष्टि विशेषणाभ्याम् ॥ अखण्डरसमास्मवल्लभमिति ॥ अखण्डोऽपरिच्छिन्नश्चासौ रस आनन्दरूपश्चेति अखण्डरसस्तमिति कर्मधारयसमासः । सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीत्यादिश्रुतेः । यद्वा, अखण्डः परिच्छेदशून्यो रस आनन्दो यस्य स तथा तम् । अपरिच्छिन्नानन्दाश्रयमित्यर्थः । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह * आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेत्यादिश्रुतेः । किञ्च, आत्मा चाऽसौ वल्लभश्चेति तथा तम् । एष सर्वभूतान्तरात्मेत्यादिश्रुतेः । आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यादेश्च । एतैर्धर्मैः सार्वज्ञ्याद्यचिन्त्यानन्तस्वाभाविककल्याणरूपैस्तथाभूतधर्माश्रयस्याखिलावद्यास्पृष्टमाहात्म्यसीम्नः परब्रह्मभूतस्य तव वेदान्तैः प्रतिपाद्यमानत्वात् । न हि तादृशानां धर्माणां प्रत्यगात्मनि कथमपि कदापि संभवोऽस्ति । असंभाव्यत्वात् । तथाभूतौपनिषद्वेद्यपरब्रह्मज्ञानस्य कर्मानुपयोगात् प्रकरणाद्यभावाच्च कर्माङ्गं कल्पयितुमशक्यम् । फलवत्सन्निधावफलं तदङ्गं प्रयाजादिवदिति न्यायात् । परमात्मज्ञानस्य तु स्वप्रकरणगतेनैव फलेन निराकाङ्क्षत्वान्नान्यशेषत्वमिति भावः । नच तत्त्वमस्यादिना तस्यैव तत्तात्विधानादुक्तार्थासिद्धिरिति वाच्यम् । तस्य तदात्मकत्वादिभिस्तदऽपृथक्सिद्धत्वाद् एकत्वोक्तिरविरुद्धा, न स्वरूपैक्यं इति पूर्वमेवोक्तम् । तस्माद्ब्रह्मविद्यायामविद्याक्लेशाद्यशेषहेयसंवलितस्य प्रत्यगात्मनो गन्धोऽपि नास्ति । श्रीपुरुषोत्तम-

परत्वमेवाखिलवेदान्तशास्त्रस्य । तस्मादेकप्रयोजनं चौपनिषदज्ञानमिति । नाप्युक्तलिङ्गानां तत्र प्रामाण्यम् । तेषामन्यपरत्वेनोक्तार्थसाधकत्वाभावात् । तथाहि । न तावद्ब्रह्मविदां कर्मानुष्ठानस्य विद्यायाः कर्माङ्गत्वे लिङ्गत्वमनैकान्तिकत्वात् । किमर्था वयमध्येष्यामहे, किमर्थं वयं यक्ष्यामहे, एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे इत्यादिविपरीतश्रवणात् । नाऽपि, यदेव विद्यया करोतीति श्रुतिस्तत्परेति वक्तुं शक्यम् । प्रकृतप्रतिपादितोद्गीथविद्यामात्रविषयत्वात् । यदेवेत्यत्र यच्छब्दस्याऽनिश्चितविशेषस्योद्गीथमुपासीतेति प्रस्तुतोद्गीथविशेषनिष्ठत्वात् । न हि यत् करोति तद्विद्ययेति सम्बन्ध इति भावः । नाऽपि, तं विद्याकर्मणी इति श्रुतेस्तत्परत्वं विद्वत्सम्भावनार्हम् । विभक्ताधिकारिकत्वात् । शतवत् । यथा शतमाभ्यां दीयताम्, इत्युक्ते विभज्य दीयते— पञ्चाशदेकस्मै, पञ्चाशदेकस्मै । तथा विद्या अन्यस्मै, कर्मचान्यस्मै इत्यर्थः । यद्वा, विभक्तफलकत्वात् । विद्या स्वफलार्थं समारभ्यते, कर्म च स्वफलार्थमिति बोध्यम् । यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते, क्षेत्रार्थं शतं, रत्नार्थं शतमिति विभागः प्रतीयते । तद्वत् प्रकृतेऽपि बोध्यम् । नाप्याचार्यकुलादित्यादिश्रुतिरुक्तार्थपरा वेदाध्ययनमात्रवतः पुरुषस्य तद्विषयत्वात् । न परविद्यावतः । अध्ययनशब्दस्याक्षरराशिग्रहणमात्र एव पर्यवसानात् ॥

नाऽपि यावज्जीवश्रुतिरुक्तार्थे नियामका, तथा च विद्यायाः कर्माऽङ्गत्वं निर्णेतुं शक्यम् । विशेषाभावात् । तस्या अज्ञविद्वत्सामान्येन नियतविद्वद्विषयकत्वाभावादित्यर्थः । ननु सामान्यविषयकत्वेऽपि विदुषोऽपि तदन्तःपातित्वान्नियमस्य तादवस्थ्यमेवेति चेन्न । ब्रह्मविद्यास्तुतये कर्मणोऽनुज्ञामात्रत्वात् । यावज्जीवं जीवति विदुषि कर्म कुर्वत्यपि विद्यासामर्थ्यात् कर्म लेपाय न भवतीति

विद्यासामर्थ्यद्योतनार्था यावज्जीवश्रुतिरित्यर्थः । यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते इत्यादिश्रुतेः । सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः * मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् । इति मां योऽभिजानाति कर्मभिर्न स लिप्यते । ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाऽम्भसेत्यादिस्मृतेश्च । अथ किं प्रजया करिष्याम इत्यादिना विदुषां कर्मत्यागस्याऽपि श्रवणात् । यदि कर्माङ्गत्वं विद्याया अभ्युपगतं स्यात् तर्हि विरोधाद्ब्रह्मविदस्तत्त्यागविधानानुपपत्तेः संसारमूलस्य कर्मणो विद्योपमर्दस्यश्रवणाच्च न विद्या कर्माङ्गं भवति । तस्याः स्वातन्त्र्येणैव मोक्षहेतुत्वात् । क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावर इत्यादिश्रुतेः । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः * यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथेत्यादिस्मृतेश्च । ननु तथाऽपि प्रत्यगात्मज्ञानं विना कर्मणि अदृष्टस्वर्गादिफलके यागादिरूपे प्रवृत्तेरेवासम्भवादन्यथा कर्मश्रुतेर्बाधप्रसङ्गश्च तत्राऽपि वैदिकस्यानिष्ट एव । तस्माज्ज्ञानस्य कर्माङ्गत्वमङ्गीकार्यमितिचेदुच्यते । ज्ञानं तावद् द्विविधं देहादिव्यतिरिक्तप्रत्यगात्मविषयकं, प्रत्यग्ब्रह्मात्मकत्वविषयकं चेति । तत्राद्यस्य कर्माङ्गत्वाभ्युपगमाच्चोक्तदोषप्रसङ्गावकाशः । उत्तरस्य उक्तलक्षणशास्त्रात् कर्मबाधकत्वेन तदङ्गत्वासम्भवादुक्तसिद्धान्तस्य सामञ्जस्यमित्यभिप्रायवानाह ॥ अत एव त्वाम् अनन्तसुखरूप शोभयदिति ॥ हे अनन्त, देशकालादिपरिच्छेदशून्य, हे सुखरूप, आनन्दमूर्ते । अपरिच्छिन्नानन्दात्मकं रूपं विग्रहो यस्य स तथा । तस्य सम्बोधनम् । आमणस्त्वं सुवर्ण इत्यादिश्रुतेः । अत एव, अखिलात्मत्वानन्तत्वादेरेव हेतोस्त्वां शोभय-

तु=चेतनाचेतनाभ्यामत्यन्तवैलक्षण्येन विवेचयत् पर्यत्रपश्यतीति योजना। तथा प्रत्यगात्मनो देहाद्यचेतनवर्गवैलक्षण्यज्ञानस्य कर्माऽङ्गत्वेऽपि भगवतः श्रीपुरुषोत्तमस्य ततोऽत्यन्तवैलक्षण्यात् तद्विषयात्मविषयकपराविद्याया न कथमपि पराङ्गत्वशङ्कावकाश इति भावः। नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः, अक्षरात् परतः पर इत्यादिविवेचकश्रुतिभ्यः। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः # अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इत्यादिस्मृतेश्च। अधिकं तु भेदनिर्देशात्, सर्वोपेता च, इत्यादिसूत्रेभ्यः ॥ १४ ॥

ननु माऽस्तु कर्मणि वेदान्तानां समन्वयः, किन्तु, हिरण्यगर्भः समवर्ततोऽग्रे, आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्तत, ब्रह्मा देवानां प्रथमः संबभूव, विश्वस्य कर्ता भुवनस्य गोप्ता, विरिञ्चो वा इदं, विरेचयति विदधातीति ब्रह्मा वा यं विरिञ्चः, एतस्माद्धीमे रूपनामनी, न सन्न चासच्छिव एव केवलः, एको रुद्रो न द्वितीयाय तस्थुः, यो देवानां प्रभवश्चोद्भवश्च, इन्द्रो मायाभिः पुरुरूप ईयते, अग्निर्मूर्द्धा दिव इत्यादिमानाच्छ्रुतीनां विश्वतोमुखत्वं प्रतीयते। तस्माद्ब्रह्मादिदेवनिकायोपासनेष्वेव वेदानां समन्वय इत्याशङ्क्याह।

वेदविद्भिरभिधीयते पशु-
र्योऽन्यदेवसमुपासको हि सः ॥
त्वामुपास्य बहवोऽमृतावृताः
पूर्णकाममभृतं निरंहसः ॥ १५ ॥

वेदविद्भिरर्धीयते पशुरित्यादि ॥ यः पुमानन्यदेव-

सगुपासकः स वेदविद्भिः पशुरभिधीयते इत्यन्वयः । य इति सामान्यशब्दप्रयोगाद्वर्णाश्रमादिव्यावृत्तिः । यः पुरुषोऽखिलहेयप्रत्यनीकमहात्म्यसीम्नोऽशेषानन्दकल्याणगुणार्णवाच्छ्रीभगवतो मुकुन्दाद् अन्येषां देवानां चतुर्मुखत्रिनयनसहस्राक्षादीनां परजन्याना परतन्त्रस्थित्यादिकानां परोपासनजन्यपरिच्छिन्नैश्वर्यवतां परदत्तभागभुजां पराऽनुशिष्टानां कर्मपरतन्त्राणाम्, उपासकः= अर्चनवन्दनध्यानादिरूपोपासननिष्ठः । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रः,यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै, अस्यदेवमीढुषो दयाविष्णारेव प्रवद्धे हविर्भिर्दिर्हि रुद्रो रुद्रीयमहित्वं, सोऽब्रवीद्वरं वृणीष्व अहमेव पशूनामधीपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरित्यादिश्रुतेः । यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी * क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तात् । प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै । तौ हि मां न विजानीतो मम मायाविमोहितौ । युगकोटिसहस्राणि विष्णुमाराध्यपद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम । मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत् स्वयम् । ततस्तस्य वरान् प्रीतो ददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च । विश्वरूपो महादेवः सर्वमेधे महाक्रतौ । जुहाव सर्वभूतानि स्वयमात्मानमात्मना । महादेवः सर्वयज्ञे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव । विश्वाँल्लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासाः । ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा । स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादत इति । ते देवा ऋषयश्चैव नानातनुं समाश्रिताः * भक्त्या संपूजयन्त्येनं गतिं चैषां ददाति ॥ इत्यादिस्मृतिभ्यश्च । तथा भूतानां यः सम्यगर्चनादिपरः स वेदविद्भिः पशुरभिधीयते । परदेवविषयक-

ज्ञानशून्यतरात् । वेदविद्भिः सनकादिनारदव्यासादिभिः । ज्ञानेन हीनाः पशुभिः समाना इति लक्षणसमन्वयात् । तथाच, अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः । यो वै स्वां देवतामतियजति प्रस्वायै देवतायै च्यवते न स परां प्राप्नोति पापीयान् भवति । तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथेत्यादिश्रुतिभ्यः ।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति * तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपीति श्रीमुखनिर्धारणाच्च । तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः * कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा इति भगवतो ध्यानविषयत्वं निर्णीय, अन्ये च पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः * अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनय इति विष्णुपुराणे सर्वजनकवचनाच्च । एषां व्याख्याचाऽऽचार्यैः कृता तत्र द्रष्टव्या अन्यत्रापि स्मर्यते । ईश्वरो भगवान् विष्णुः परमात्मा सनातनः * शास्ता चराचरस्यैको यतीनां परमा गतिः । ध्यायतेऽर्चयते योऽन्यं विष्णुलिङ्गं समाश्रितः । कल्पकोटिशतेनाऽपि न गतिस्तस्य विद्यते इति । एवं दुष्कृतिनां श्रीवासुदेवेतरदेवोपासकानां पशुत्वनिर्णयात् कथं तदुपास्येषु शास्त्रसमन्वयकथावकाश इत्यर्थः । इदानीं सुकृतिनामुपासनं सफलं निर्धारयन्नाह ॥ त्वामुपास्येत्यादि ॥ ये तु, येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् * ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रता इत्यादिभगवदुक्तन्यायेन मुक्तयोगा निरंहसः । निर्गतान्यंहांसि भगवदीयोपासनप्रतिबन्धकानि येषां ते निरंहसो हीनदोषा इत्य-

ऽर्थः। ते तु संसृतिहेतुभूतपरिच्छिन्नफलकेतरदेवोपासनं दूरतो हित्वा जगज्जन्मादिहेतुं शास्त्रयोनिं योगिध्येयपदाम्बुजं ब्रह्मेशादिकिरीटेडितपादपीठं तर्कागोचरमाहात्म्यं मुक्तोपसृप्यं नारायणपरब्रह्मादिशब्दाभिधेयं श्रीमुकुन्दं त्वामुपास्य उपासनाविषयीकृत्य ॥ बहवोऽमृतामृता इति ॥ अमृतेन पूर्वोक्तलक्षणमोक्षेण व्याप्तास्त्वद्भावमापन्ना इत्यर्थः । ब्रह्मविदाप्नोति परं, निरञ्जनः परमं साम्यमुपैति, तमेव विद्वानऽमृत इह भवतीत्यादिश्रुतेः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः * सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च । बहवो ज्ञानतपसा पूता मद्भावमागता इत्यादिश्रीमुखोक्तेश्च । अथोपास्यविशेषणमाह ॥ पूर्णकाममममृतमिति ॥ काम्यते मुमुक्षुभिरिति कामो मुमुक्षुवरणीय इत्यर्थः । पूर्णश्चासौ कामश्चेति तथा तम् । पूर्णमदः पूर्णमिदमित्यादिश्रुतेः । यद्वा पूर्णाः कामा अस्मादिति विग्रहः । सर्वपुरुषार्थदातारमित्यर्थः । य आत्मदा बलदा यस्य विश्वमुपासते रातेर्दातुः परायणमित्यादिश्रुतेः । यद्वा पूर्णाः कामा यस्य स तथा तम् । सत्यकामः सत्यसङ्कल्पः, तस्मिन् कामाः समाहिता इत्यादिश्रुतेः । किञ्च, अमृतमिति ॥ भूमविद्याविषयम् । यो वै भूमा तदऽमृतं, भूमा त्वेव विजिज्ञासितव्य इति श्रुतेरिति सङ्क्षेपः । तस्मादुक्तलक्षणे त्वय्येव वेदान्तानां समन्वयस्त्वाद्दृपयकोक्तलक्षणा पराविद्या च स्वातन्त्र्येण मोक्षहेतुरिति संग्रहार्थः ॥ १९ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीभगवन्नियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने
श्रुत्यन्तसुरद्रुमे
शास्त्रसमन्वयाऽधिकरणार्थनामा शाखा दशमी ॥ १० ॥

## अथ शाखा एकादशी ।

एवं पूर्वत्र समन्वयार्थो निरूपित, इदानीं तद्विपरीतसिद्धान्तवादिनः स्वबुद्धयुत्प्रेक्षिततर्कजालविमूढान् निन्दयन्नाह ॥

नेष्टसिद्धिरपि च व्यवस्थया
नादृतेशचरणा यतो हरे ॥
युक्तिरेव शिथिला हि तन्मते
सत्तयाऽपि न हि मानदो विभुः ॥ १६ ॥

नेष्टसिद्धिरिति ॥ हे हरे स्वचरणसमर्तृदुष्कृतनाशक ! व्यवस्थयाऽपि श्रवणादिसाधनप्रक्रिययाऽपि तेषामिष्टसिद्धिर्नास्ति । इष्टसिद्धिः संसारनिवृत्तिलक्षणा सिद्धिः । अपिशब्दोऽवधारणाऽर्थः । स चाऽत्यन्तयोगव्यवच्छेदार्थः । नास्त्येवेति यावत् । चकारो भोगसिद्धिनिषेधसमुच्चयपरः । भोगसिद्धिरपि नैवेत्यर्थः । कुत इत्यपेक्षायां हेतुमाह ॥ यतो नादृतेशचरणा इति ॥ नाऽऽदृतौ ईशचरणौ यैस्ते तथा । ईशस्य चराचरविश्वनियन्तुर्भगवतः श्रीकृष्णस्य चरणारविन्दतो बहिर्मुखत्वात् सर्वेषामपि साधनानां भगवदनुग्रहसापेक्षत्वेन तदसाधारणहेतुभूतश्रीपुरुषोत्तमपदभक्तिशून्यत्वात् । अनुग्रहशून्यसाधनानामकिञ्चित्करत्वेनाप्रयोजकत्वात् । शृण्वन्तोऽपि बहवो यं न विद्युः, नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामिति, तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमित्यन्वयव्यतिरेकश्रुतिभ्यः ॥ अथ तद्युक्तीनां शास्त्रविरुद्धत्वं दर्शयति—

युक्तिरेव शिथिला हि तन्मते इति ॥ तन्मते युक्तिः

शिथिलैवेति योजना । हीति निश्चये । तेषां परतत्त्वपराङ्मुखानां मते निर्णये स्वोत्प्रेक्षितश्रुतिहीनाविवर्त्तवादादियुक्तिः शास्त्रप्रतिकूला कुतर्करूपा । जातावेकवचनम् । युक्तय इत्यर्थः । मन्दा एवेति । अशास्त्रीयत्वात् । ता युक्तयश्च तत्र तत्र पूर्वमेव निराकृता निरसिष्यमाणाश्च । किञ्च, सत्तयापीति ॥ त्रैविध्याभ्युपगतसत्तयाऽपि विभुर्भवान् तेभ्यो मानदो न भवति । सन्मानहेतुर्न भवतीति यावत् । एतदुक्तं भवति । तेषां मते सत्ता त्रिधा--पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी चेति । तत्र पारमार्थिकी ब्रह्मरूपा । व्यावहारिकी आकाशादिजगत्संबन्धिनी । प्रातिभासिकी शुक्तिरूप्यादिसंबन्धिनीति । तदसम्यक् । असंभवात् । तथाहि । स्वप्नशुक्तौ स्वाप्नशुक्तौ बाध्यरूप्यादेरुपसंग्रहाय प्रातिभासिकादपि निकृष्टस्य निकृष्टतमस्य च पञ्चमप्रकारस्याव्यावहारिकस्य शुद्धज्ञानध्वंसस्य चोपसंग्रहाय अपारमार्थिकस्य व्यावहारिकादप्युत्कृष्टस्य उत्कृष्टतमस्य च सत्त्वस्य च वाच्यत्वेन त्रैविध्यासंभवात् । नच यावत् स्वप्नं तावत् प्रातिभासिकत्वमेकधैव, नोक्तदोषयोग इति वाच्यम् । तर्हि बाधोऽपि न स्यात् । उभयोः प्रातिभासिकत्वाविशेषेणेतरेतरविरोधाभावात् । अन्यथा शुक्तिरूप्यादिबाधोऽपि व्यावहारिकशुक्तिज्ञाननिरपेक्ष एव प्रातिभासिकज्ञानेनैव स्यात् । आकाशादिव्यावहारिकपदार्थबाधोऽपि पारमार्थिकज्ञाननिरपेक्ष एव स्यात् । स तु नाऽस्त्येव ।

तस्मादनुपपन्नमेवैतत् त्रैविध्यम् । किञ्च, पारमार्थिकापारमार्थिकयोर्विभागे, को वा प्रयोजक इति विचारणीयम् । बाध्यत्वाबाध्यत्वे इति चेन्न । अध्यस्तेऽपि कचित् रूप्यरूपाबाध्यत्वस्य ब्रह्मण्यपि आकारबाध्यत्वस्य दर्शनात् । जगद्बाधकस्य सप्रकारकत्वे तस्यैव प्रकारस्य बाध्यत्वापातात् । निष्प्रकारकत्वे च बाधकत्वायोगात् ।

किञ्च, व्यावहारिकप्रातिभासिकयोरपि न तावन्मायिकत्वाविद्यकत्वाभ्यां विभागो वक्तुं शक्यः । मायाविद्ययोस्तथात्वाभावात् । मायिकस्यैवैन्द्रजालिकादेः प्रातिभासिकत्वदर्शनाच्च । असाधारणस्याविद्यकस्य दुःखादेर्व्यावहारिकत्वाच्च । नाऽप्यर्थक्रियाकारित्वतदभावाभ्याम्,आदानादिव्यवहारनिर्वाहकत्वतदभावाभ्यां वा विभागः । अर्थगतविशेषाभावेन तदसंभवात् । स्वप्नेऽपि कुम्भादौ स्वाप्नजलाहरणाद्यर्थक्रियाकारित्वादीनां सत्त्वात् । व्यावहारिकस्य तस्य विवक्षायां चात्माश्रयदोषापत्तेः । नाऽपि ब्रह्मज्ञानबाध्यत्वतदन्यज्ञानबाध्यत्वाभ्यां भेदः त्वन्मते रूप्यादेरपि शुक्त्यऽवच्छिन्नब्रह्मज्ञानबाध्यत्वात् । ब्रह्मण्यध्यस्तस्य प्रातिभासिकस्य क्षणिकत्वादेरपि ब्रह्मज्ञानबाध्यत्वाच्च । नाऽपि ब्रह्मप्रमाबाध्यत्वतदन्यप्रमाबाध्यत्वाभ्यां भेदः । त्वन्मते ब्रह्मज्ञानस्यैव प्रमात्वेनाऽन्यप्रमाया भ्रान्तित्वात् ॥

नाऽपि प्रमाबाध्यत्वभ्रमाबाध्यत्वाभ्यां भेदः । भ्रान्तिबाध्यत्वस्य ब्रह्मण्यपि सत्त्वात् । नाऽपि शुद्धब्रह्मज्ञानबाध्यत्वतदन्यज्ञानबाध्यत्वाभ्यां भेदः । शुद्धस्य भ्रमसाधकत्वेन तद्बाधकत्वासंभवात् । अन्यथा भ्रान्तिरेव न स्यात् । विरोधिनोः सामानाधिकरण्यासंभवात् । नाऽपि पारमार्थिकविषयधीबाध्यत्वव्यावहारिकविषयधीबाध्यत्वाभ्यां भेदः । अन्योन्याश्रयापत्तेः । नाऽप्यन्योन्येतरेतराभ्यां भेदः । भेदकाभावे इतरेतरस्यैवासम्भवात् । अन्योन्याश्रयाच्च । किञ्च, अयं सत्ताविभागः पारमार्थिको, न वा । नाद्यः । ब्रह्मैव तात्त्विकं, नान्यदिति सिद्धान्तभङ्गात् । द्वैतापत्तेश्च । नापि द्वितीयः । तात्त्विकस्य ब्रह्मणोऽतात्त्विकाच्छुक्तिरूप्यादिव बाधगम्यस्य विभागस्य तात्त्विकत्वावश्यम्भावात् । किञ्चायं विभागः सत्यो मिथ्या वा । नाद्यः । अपसिद्धान्ताप-

त्तेः । न द्वितीयः । इष्टापत्तेः । त्वदुक्तसिद्धान्तस्य त्वयैव दूषणात् । अत एव न व्यावहारिकोऽपि निरूपयितुं शक्य इत्यलं कुतर्कनिरासैः । तस्मान्न कथमपि तदभिमतसत्ताव्यवस्थासिद्धिः, किन्तु जगतो भगवदायत्तसत्ताकत्वेन ब्रह्मणश्च स्वतन्त्रसत्ताकत्वेन सत्ताद्वैविध्यमेवेति पूर्वमेवोक्तम् । सत्यस्य सत्यं, प्राणा वै सत्यं, तेषामेष सत्यमित्यादिश्रुतेः । सत्यस्य परतन्त्रसत्त्वस्यापि नियन्तृत्वादाधारत्वाद्व्यापकत्वादात्मत्वाच्च सत्यं स्वतन्त्रसत्त्वाश्रयः । सत्यपदार्थं स्वयमेव विवृणोति भगवती श्रुतिः । प्राणा वै सत्यमिति प्राणशब्दोऽत्र प्राणावच्छिन्नचेतनपरः । प्राणाश्च तदवच्छिन्नाश्चेतनाश्च सत्यशब्दवाच्यपरतन्त्रसत्ताश्रयाः । परमेश्वरस्तु तेषां प्राणादीनामप्याश्रयत्वादिना सत्यं स्वतन्त्रसत्ताश्रय इति श्रुत्यर्थसंग्रहः । सदेव सोम्येदमग्र आसीत् । यदासीत्तदधीनमासीदिति श्रुत्यन्तरैक्यात् ॥ १६ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीनियमानन्दा-
ऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते
सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने
श्रुत्यन्तसुरद्रुमे
परपक्षाभीष्टसत्तानिरासशाखा एकादशी ॥ ११ ॥

## अथ शाखा द्वादशी।

अथ यस्य पद्धतिः पूर्वं शास्त्रमुखेनोक्ता तद्धाम वर्णयति।

पारशून्यपरधाम तेऽद्भुत
चिद्घनं जयति लोकमूर्द्धनि॥
व्यापकं च परिखा सरिद्वरा-
ऽचिन्त्यशक्ति नवमङ्गलध्वनि॥ १७॥

पारशून्यपरधामेति॥ परस्योत्कृष्टस्य भावः पार आधिक्यं तच्छून्यं पारशून्यं तच्च तत् परं च तद्धाम चेति पारशून्यपरधामेति विग्रहः। यद्वा, हे पारशून्य त्रिधा परिच्छेदहीन। ते तव भगवतः श्रीकृष्णस्य परमुत्कृष्टं धाम निवासस्थानं लोकमूर्ध्नि जयतीति योजना। लोकं शास्त्रजातम्। लोकयतेऽनेनेति व्युत्पत्त्या लोकशब्दः शास्त्रपरः। तस्य मूर्द्धा वेदान्तभागस्तस्मिन् तत्प्रतिपाद्यतया, जयति स्वोत्कर्षमाविष्कुर्वन् प्रकाशते। तस्याऽलौकिकत्वं दर्शयन्नाह॥ अद्भुतमिति॥ तत्त्वं नाम नित्यं प्रतिक्षणं तत्रत्यानामपि द्रष्टॄणामपूर्वत्वेनाश्चर्यजनकम्। तत्र हेतुं दर्शयन् विशिनष्टि॥ चिद्घनमिति॥ प्रकाशानन्दमूर्तित्वात् प्राकृतसम्बन्धास्पृष्टमाहात्म्यमित्यर्थः। यदि मूर्त्तिस्तर्हि परिच्छेदो दुर्वार इत्याशङ्क्याह॥ व्यापकमिति॥ चकारात् परिच्छिन्नवदवभासमानत्वेऽपि तस्य व्यापकत्वं भगवद्विग्रहस्वरूपवत् परिच्छेदशून्यत्वात्। उभयत्राऽपि हेतुदर्शनाय विशेषणद्वयमाह॥ परिखा सरिद्वरेति॥ अचिन्त्यशक्तीति॥ तत्र परिच्छिन्नवद्भासमानत्वे प्रथमविशेषणम्। यस्य धाम्नः सरिद्वरा विरजा नदी परिखेति। व्यापकत्वे च द्वितीयं विशेषणम्। अचिन्त्या इयत्ताऽवच्छेदशून्याः शक्तयो यस्य तत्।

अचिन्त्यशक्तियोग एव सर्वविरोधपरिहारे हेतुर्ब्रह्मस्वरूपवद्बोध्यः। ननु यदुक्तं धाम्नश्चिद्घनत्वं तदयुक्तम् । अचेतनत्वेन भवतां पूर्वाचार्यैः सांप्रदायिकैरभ्युपगमत्वाद् अपसिद्धान्तापत्तेः । एतदुक्तं भवति । भगवतो धाम चेतनमचेतनं वा । नाद्यः । अपसिद्धान्तप्रसङ्गात् । न द्वितीयः । जडत्वयोगेन मुक्तोपसृप्यत्वासम्भवादिति चेन्न । उक्तचोद्यस्याज्ञकर्तृकत्वात् । तथाहि । चिद्रूपमेव तद्धाम, भगवन्महिममूर्त्तित्वेनाऽचिन्त्यशक्तियोगात् । स भगवः कस्मिन् प्रतिष्ठिते स्वमहिम्नीति छान्दोगाम्नानात् । नच, अथाप्राकृतं नाम त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनमिति श्रीदेवाचाऽऽर्योक्तिविरोधो दुष्परिहर इति वाच्यम् । तत्राचेतनपदयोगस्य धर्मभूतज्ञानानाधारत्वमात्रे तात्पर्यात् । अन्यथा त्रिगुणप्राकृतकालविलक्षणप्रकाशात्मकानावरकस्वभावत्वे सत्यऽचेतनत्वमिति । आदित्यवर्णं तमसः परस्तादिति श्रुतेः । आदित्यवर्णमिति दलेन प्रकाशरूपत्वम्, अनावरकस्वभावत्वं चोक्तम् । तमसः परस्तादित्यनेन दलेन तमःशब्दाऽभिधेयप्रकृतिकालाभ्यां विलक्षणं चेत्यर्थ इति श्रुतिमुखेन तद्व्याख्यातृश्रीसुन्दरभट्टपादोक्तबाधप्रसङ्गात् । तस्मादाचार्यतात्पर्याविदुषामेवेदं चोद्यमुपेक्षणीयं मनीषिभिरिति । नचोक्तश्रुतेः स्वरूपविषयकत्वान्नोक्तार्थे प्रमाणमिति वाच्यम् । तव पक्षे स्वरूपस्य वर्णाश्रयत्वानभ्युपगमात् । अन्यथाऽद्वैतभङ्गात् । ननु यदि स्वरूपस्यापि चिद्रूपत्वं धर्मज्ञानस्यापि तथात्वं भवतामभिमतं तर्हि ज्ञानत्वसाम्याद् गौरवमात्रमेव ज्ञानान्तराङ्गीकारस्येति चेन्न । महद्विशेषस्य सत्त्वात् । तथाहि । आत्मज्ञानस्य तावत्स्वायत्तस्थितित्वं ज्ञानान्तरमन्तरेणाहमिति स्वस्मै प्रकाशकत्वमन्यविषयाप्रकाशकत्वमप्रकाशत्वाभावश्च ।

धर्मभूतज्ञानस्य तु, पराऽश्रिताऽत्वस्थितित्वं, स्वस्मै प्रकाशकत्वं,

स्वाश्रयप्रकाशकत्वं, स्वविषयप्रकाशकत्व, सङ्कोचनविकाशयोग्यत्वं चेति विवेकः । अन्यथा सर्वदा सर्वत्र विषयप्रकाशापत्तेरिसल विस्तरेण । विशेषन्तरमाह ॥ नवमङ्गलध्वनीति ॥ नवा नवीना, जितं ते पुण्डरीकाक्ष इत्यादितत्स्वरूपगुणादिविषयकाः स्तोत्रपाठात्मकाः सामगानादिरूपा वा मङ्गलात्मका ध्वनयो यत्रेति तद् तथेति विग्रहः। तदेव, ब्रह्मलोक–परमपद–विष्णुपद–वैकुण्ठ–परमव्योम–परलोकादिशब्दाभिधेयम्। यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । धूत्वा शरीरमकृत कृतात्मा ब्रह्मलोकमभिसम्भवामि, स खल्वेवं वर्तयन् यावदायुर्ब्रह्मलोकमभिसपद्यते, न च पुनरावर्तते । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्। तद्विष्णोः परमं पदम् । सदा पश्यन्ति सूरय इति । मन्त्रोपासको वैकुण्ठभवनं गमिष्यति, योऽस्याध्यक्षः परमे व्योमन् । हिरण्मये परे लोके विरजं ब्रह्म निष्कलमित्यादिभ्यः । किञ्च, छान्दोग्ये तन्महिमत्वेन प्रतिपादनात्, स भगवः कस्मिन् प्रतिष्ठित इति स्वमहिम्नीति दिव्यब्रह्मपुरे ह्येष परमः प्रतिष्ठित इति, एष आत्मलोक इति, यत्तत्सूक्ष्मं परमं वेदितव्यम्, नित्यं पदं वैष्णवमामनन्ति । एतल्लोका न विदुर्लोकसारं विन्दन्ति वै कवयो योगनिष्ठा इति पिप्पलादशाखाया बृहदारण्ये षष्ठे। अणुः पन्था विततः पुराणो मा स्पृष्टोऽनुवित्तो मयैव, तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गलोकमितो विमुक्ता इति। अस्यार्थः । अणुः सूक्ष्मो दुर्ज्ञेयः सुषुम्णाख्यो मार्गो विततो विस्तीर्णः। संसारसमुद्रस्य तरणहेतुत्वात् । तथा पुराणः । अनादिपरम्पराप्राप्तः । मा मुमुक्षुं स्पृष्टः । मदन्तःकरणे प्रकटीभूतः । मयैव विन्नो ज्ञातः साक्षात्कृतः । साक्षात्कारोऽपि तदवलम्बेन मयैव मा-

म इत्यर्थः । तेनैव मार्गेणान्येऽपि धीरा ब्रह्मविदः सन्त इतः शरीरादुत्क्रम्य विनिर्मुक्ताः संसारात् स्वर्गलोकं चोत्क्रम्य यान्तीति । तत्रैवाग्रे, यस्मिञ्शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च । एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्चेति । यस्मिँल्लोके शुक्लं रजतस्फटिकेन्द्वादिसमवर्णं प्रासादादिसमुदायम् । उत पक्षान्तरे । नीलं नीलमणिवर्णपार्षदादिकम् । तथा पिङ्गलं पीतवर्णवस्त्वन्तरं च । एष पन्था ब्रह्मणा परमेश्वरेणैव वित्तो ज्ञातः । हेति प्रसिद्धौ । तेन पथा ब्रह्मविद् ब्रह्मज्ञः सन्, तैजसः, परमं यो महत्तेज इत्युक्तेस्तेजःशब्देन परमात्मा श्रीवासुदेवस्तदीयाः प्रपन्नाश्चेति यावत् । परभक्तिजन्यपुण्यवांश्च । एति यं लोकं प्राप्नोतीर्थः । एवमन्यान्यपि वाक्यान्यत्रानुसन्धेयानि । योगयाज्ञवल्क्ये ॐकाररथमारुह्य मनः कृत्वा तु सारथिम् । नरो ब्रह्मपदान्वेषी याति विष्णोः परं पदम् । भारते वनपर्वणि । यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम् * अनादिनिधनं देवं प्रभुं नारायणं हरिम् । ब्रह्मणः सदनात् तस्य परं स्थानं प्रकाशते । देवाश्च यं न पश्यन्ति दिव्यं तेजोमयं पदम् । अत्यर्कानलसंदीप्तं स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः । यतयस्तत्र गच्छन्ति देवं नारायणं हरिम् । वरेण तपसा युक्ता भाविताः कर्मभिः शुभैः । योगसिद्धा महात्मानस्तमोमोहविवर्जिताः । तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत । स्थानमेतन्महाराज ध्रुवमक्षयमव्ययम् । ईश्वरस्य सदा ह्येतत्प्रमाणं च युधिष्ठिर इत्यादिना सप्तलोकभिन्नत्व–देवाद्यगोचरत्व–तेजोमयत्व–सूर्यानलादिदीप्त्यतिक्रान्तत्व –प्रकाशत्व–देवादिप्रेक्षणानर्हत्व–तमोमोहादिशून्ययोगादिसाधनसिद्धपरमयोगिगम्यत्व–परिणामक्षयादिप्राकृतधर्मप्रत्यनीकनित्याक्षयाव्ययत्वादियोगस्मरणात् प्रकृतेः

परत्वं श्रीपुरुषोत्तमाधिष्ठितत्वं च सिद्धम् । न हि ब्रह्मलोकादीनां तद्विपरीतप्राकृतधर्मवत्ता प्रकृतिकार्यब्रह्माण्डमध्यगाना श्रुतिस्मृति-, निर्णीताप्रकृतानां पूर्वोक्ताना लिङ्गानाम् अध्वपारत्वादीना समन्वयभूमित्वं प्रतिपादयितुं शक्यम् ।

स्वत एव नाशयोगेन पुनरावृत्तिमत्त्वात् । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेति श्रीमुखगानात् । शान्तिपर्वण्यपि । ज्ञानविज्ञानिनः केचित् परम्पारं तितीर्षवः * अतीव तत्पदं पुण्यं पुण्याभिजनवन्दितम् । यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च । ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्वता इत्यादिना ज्ञानविज्ञानसंपन्नमुमुक्षुगम्यत्व—पुण्यतमत्व—च्युतिव्यथादिप्राकृतधर्मशून्यत्वोक्तेः । अन्यत्राऽपि, दिव्यस्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम् * गच्छ प्रभोरक्षरत्नस्मान् स्वमपस्मान् कल्पे कल्पे जायमानः स्वमूर्त्या इत्यादिना श्रीभगवतो देवानां विज्ञप्तिः । तत्र दिव्यस्थानत्वाजरत्वाप्रमाणातीतत्वदुर्विज्ञेयत्वशास्त्रैकवेद्यत्वादियोगोक्तेः । एतेन कश्चित् प्रदेशविशेषो वैकुण्ठाख्योऽयं सत्यलोकस्यैव, न प्रकृतेः परं किञ्चिद्विष्णुधामास्तीति केषाञ्चित् कुतर्कनिष्ठानां दुराग्रहो निरस्तः । प्राकृतप्रलये सत्यलोकाधिष्ठातुश्चतुर्मुखस्यापि स्वाधिकारावसाने स्वलोकस्थैः कैश्चिदधिकारिविशेषैः सह परमपदप्रवेशः स्मर्यते । ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे * परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यादिना । अतो वैकुण्ठपरमव्योमादिशब्दाभिधेयस्य श्रीविष्णुलोकस्य सत्यलोकादिवैलक्षण्यं प्रकृतिमण्डलबहिःस्थत्वं मुक्तोपसृप्यत्वं च सिद्धम् । उदाहृतशास्त्रात् । श्रीनारदपञ्चरात्रे, लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् * अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् । नित्यमुक्तैः समाकीर्णं तन्मयैः पाञ्चकालिकैः ।

सभामासादसंयुक्तं वनैश्चोपवनैः शुभैः । वापीकूपतडाकैश्च वृक्षखण्डैश्च मण्डितम् । अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम् । प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा । क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवेत्यादि । एवमन्याः स्मृतयोऽप्यत्राऽनुसन्धेयाः । अलं विस्तरेण ॥ १७ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीनियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते
सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने
श्रुत्यन्तसुरद्रुमे
भगवदीयधामनिर्णयशाखा द्वादशी ॥ १२ ॥

## अथ शाखा त्रयोदशी ।

अथाभीष्टपुरुषार्थसाधनेषु भक्तिमुररीकुर्वन् स्तौति ॥

सत्प्रसङ्गबललभ्यभक्तितो
लभ्य एव रसमूर्तिमान् भवान् ॥
सम्मुखानतु भवन्ति ये न ते
ते नियन्ति निरयान् विपद्गणान् ॥ १८ ॥

सत्प्रसङ्गबललभ्यभक्तित इत्यादिना ॥ सताम्, अनन्याश्रित्वचन्तो मां, तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवता इत्यादिश्रीमुखश्लाघ्यानां, परमज्ञानवैराग्यादिसम्पन्नानां, कारुण्यवात्सल्यादिभूषितानां, श्रीमुकुन्देतरसाधनप्रयोजनसम्बन्धगन्धाघ्रातमहिम्नां, भगवत्प्रसादैपणया तृणीकृतसर्वपुरुषार्थतत्साधनानां, द्याचार्यैकदेवतानाम, आकिञ्चन्यैकवित्तानां, श्रीमुकुन्दपादाम्बुजगन्धभृङ्गाणां, प्रसङ्ग इति ॥ प्रकर्षेण सङ्गः । प्रकर्षोऽत्र श्रद्धाविश्वासाऽऽर्जवप्रणिपातपरिप्रश्ननिर्मायिकसेवादिपरः । तत्पुरःसर इत्यर्थः । तदेव बलम् । तत्कृपाविषयत्वात् तत्प्रसादाभिमानरूपमिति भावः । तेन बलेन लब्धुं योग्यो लभ्या या भक्तिस्तया । तृतीयार्थे तसिल् प्रत्ययः । तथाभूतया भक्त्यैव भवान् स्वभावतोऽपास्तसमस्तदोषो निखिलज्ञानैश्वर्यादिवात्सल्यकारुण्यतितिक्षाक्षमार्जवस्वाम्याद्यनन्तस्वाभाविककल्याणगुणार्णवः श्रीवासुदेवो गोपीकान्तो रमानिवासो लभ्य एव । एतेन सत्सङ्गस्य भक्तिलाभेऽन्तरङ्गोपायत्वं निर्णीतम् । अत्रैवकार उभयत्रान्वयी । लाभक्रियासम्बन्धो त्यन्तायोगव्यवच्छेदार्थः । भक्तिशब्दान्वितश्चान्ययोगव्यवच्छेदार्थ इति विवेकः । अन्ययोगोऽत्र साधनान्तरकदम्बो

विवक्षितः । नाऽहं वेदैर्न तपसा न दानेन नचेज्यया * शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अह-मेवंविधोऽर्जुनाज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप इत्यन्वयव्यतिरेक-गर्भितश्रीमुखोक्तेः । द्वितीयश्च लाभशङ्कामतिशयेन व्यवच्छिनत्ति । रामो भवरयेवेतिवत् । भवानतिशयेन लभ्य एवेत्यर्थः । ननु स्या-देतद्, मदनन्यभक्त्या मम प्राप्तिस्तथाच मत्प्राप्त्यैव किम्, अन्य-पुरुषार्थानामप्राप्तेस्तादवस्थ्यादित्याशङ्कां निराकुर्वन् विशिनष्टि॥र-समूर्त्तिमानिति॥रस आनन्दः । रसं ह्येवायलब्ध्वानन्दी भवति, एष आनन्दयातीति श्रुतेः । परिपूर्णानन्दरूपा मूर्त्तिरस्यास्तीति तथा । इतरपुरुषार्थानामस्यैव लेशत्वान्नोक्तशङ्कावकाशः । एतस्यै-वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः । एतेन मा-यिकविग्रहवादिनो निरस्ताः । यदात्मको भगवाँस्तदात्मिका व्य-क्तिरिति श्रुते । मनुष्ययोगाच्च रूपाऽभिन्नविग्रहवादिनोऽपि त-थैवेति प्रासङ्गिकेनाऽलम् । तद्बहिर्मुखनिन्दया व्यतिरेकमुखेन तां दृढीकुर्वन्नाह ॥ ये अनादिसञ्चितदुष्कृतपुञ्जास्ते तव श्रीपुरुषोत्त-मस्य भगवतः, सम्मुखाननु न भवन्तीति ॥ सम्मुखान् अ-नन्याश्रितान् पूर्वोक्तलक्षणान् सत', अनु अनुयायिनो न भवन्तीति यावत् । न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः * माययापहृतज्ञा-नाआसुर भावमाश्रिताः । कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता इत्यादिश्रीमुखोक्तलक्षणा इत्यर्थः । ते उ-क्तलक्षणा बहिर्मुखा जीवन्तोऽपि विपद्गणान् नियन्तिनिःसंशयेन यन्तीति यावत् । मरणानन्तरं च निरयान् रौरवादीन् गच्छ न्तीति योजना । येन यन्तीति पाठे, येन यन्तीतिपदच्छेदो बो-ध्यः । यच्छब्दो हेतुपरः । येन हेतुना दुष्कृतयोगेनैव हेतुनेत्यर्थः ।

अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा स्वकर्मणा जायते तत्र तत्रेत्यादिश्रुतेः । तानहं द्विषतः क्रूरान् संसारेषु नराधमान् * क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति श्रीमुखवचनात् । पुण्डरीकाख्याने च । अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि * न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखा इति ॥ १८ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीनियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे भक्त्युत्कर्षशाखा त्रयोदशी ॥ १३ ॥

## अथ चतुर्दशी शाखा।

अथ ब्रह्माणि प्रमाणं कथयंस्तस्य बलाबलं निर्धारयति।

अक्षमेव सबलं प्रमाणतो
यद्यपीह कथयन्त्यपूर्वजाः॥
स्वत्स्वरूपगुणवर्णने विभो
वाक्यमेव सबलं प्रतीयते॥ १९॥

अक्षमेवेत्यादिना॥ प्रमाकरणं प्रमाणम्। तत्र तद्वति तत्प्रकारकं ज्ञानं प्रमा। असाधारणकारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः। प्रमाणं तावत् त्रिविधम्। प्रत्यक्षाऽनुमानशब्दभेदात्। तत्र विषयेन्द्रियसंनिकर्षजन्यं प्रत्यक्षम्। तत्रेन्द्रियं करणम्। तत्सन्निकर्षो व्यापारः। तथाच सन्निकर्षस्य इन्द्रियजन्यत्वात्, तज्जन्यविषयसाक्षात्कारज्ञानस्य च जनकत्वाल्लक्षणसमन्वयः। तद् द्विविधं— बाह्याभ्यन्तरभेदात्। तत्राद्यं पञ्चविधं = श्रावणस्पार्शनचाक्षुषरासनघ्राणजभेदात्। हरिगाथां शृणोमि, हरिजनचरणं स्पृशामि, श्रीगुरुं पश्यामि, हरिनिवेदितरसं रसयामि, तुलसीसौरभं जिघ्राणीति प्रतीतिभ्यः। श्रवणादीनि बाह्येन्द्रियाणि क्रमशः करणानि ज्ञेयानि। आन्तरं च सुखमनुभवामीत्यादिप्रतीतेर्मनोजन्यत्वात् सुखादीनां तत्करणं मन इति सङ्क्षेपः॥ १॥

अनुमितिकरणमनुमानम्। व्याप्तिज्ञानजन्यं ज्ञानमनुमितिः। लिङ्गपरामर्शोऽनुमानम्। महानसादौ धूमे व्याप्तिं गृहीत्वा पश्चात् पर्वतादौ धूमं पश्यति। ततो धूमो वह्निव्याप्य इत्येवंरूपं व्याप्तिस्मरणम्। तदनन्तरं, वह्निव्याप्यधूमवानयमिति परामर्श उच्यते।

सदेवानुमानम् । ततो वह्निमानयमिति ज्ञानं जायते इति । लीनं गमयतीति लिङ्गं हेतुसाधनादिशब्दाभिधेयम् । व्याप्तिबलेनार्थगमकत्वात् । साध्यवदन्यावृत्तित्वे सति, साध्यसामानाधिकरण्यं व्याप्तिः । भवति धूमस्य हेतोः साध्यवद्भ्योऽग्निमद्भ्यो महानसादिभ्योऽन्येषु ह्रदादिष्ववृत्तित्वं, साध्येन वह्निना च सामाधिकरण्यमिति लक्षणसमन्वयः । ईदृग्व्याप्तिग्रहणे एव धूमोऽग्निं गमयति, नान्यथेति युक्तमुक्तं– व्याप्तिबलेनेति । स्वार्थानुमानप्रकार उक्तः । स्वस्मै अनुमितिज्ञानहेतुत्वात् । अथ परार्थं नाम– उक्तप्रकारेण स्वयं धूमादग्निमनुमाय परं बोधयितुं प्रवृत्तः पञ्चावयवानुमानवाक्यं प्रयुङ्क्ते तत् परार्थानुमानम् । अवयवाश्च, प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्याः । तत्र साध्यविशिष्टपक्षबोधकं वाक्यं प्रतिज्ञा । यथा, पर्वतो वह्निमानिति । कुत इति शङ्कोपशमकं लिङ्गवचनं पञ्चम्यन्तं हेतुः । यथा, धूमवत्त्वादिति । धूमोऽस्तु वह्निर्मास्त्विति शङ्कोपशमकं वाक्यमुदाहरणम् । यत्र धूमस्तत्राग्निर्यथा महानस इति । हेतूदाहरणाभ्यां पर्यवसितविशिष्टपरामर्शजनकं वाक्यमुपनयः । यथा, तथाचाऽयं वह्निव्याप्यधूमवानयमिति वा । पक्षे साध्योपसंहाररूपं वाक्यं निगमनम् । तस्मात् तथेति । तस्माद्वह्निमानिति चेति नैयायिकाः । त एव प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायशब्देन वैशेषिकैरुच्यन्ते । लिङ्गं त्रिविधं– केवलान्वयि, केवलव्यतिरेकि, उभयरूपं च । तत्र वृत्तिमदत्यन्ताभावाप्रतियोगिसाध्यको हेतुः केवलान्वयी । यथेदं वाच्यं, ज्ञेयत्वादिति । भवति हि वाच्यत्वरूपसाध्यस्य वृत्तिमद्भ्यः पृथिव्यादिभ्यः स्वात्यन्ताभावप्रतियोगिभ्यो भिन्नत्वं तद्धेतुभूतस्य ज्ञेयत्वरूपलिङ्गस्य केवलान्वयित्वसिद्धिः । यद्वा, विपक्षशून्यो हेतुः केवलान्वयी । तत्र निश्चितसाध्याऽभाववान् विपक्षः । स च निश्चितवाच्यत्वाभाववान् कोऽपि ना-

स्ति। सर्वस्यापि वाच्यत्वात्। अनवगतसाध्यसाधनसाहचर्यको हेतुः केवलव्यतिरेकी। यथा पृथिवी इतरभिन्ना गन्धवत्त्वात्। अत्र गन्धस्य जलादिभेदसाहचर्यं कुत्राप्यदृष्टचरम्। किन्तु यत्रेतरत्वं तत्र गन्धाभाव इति इतरभेदाभावगन्धाभावयोरेव सामानाधिकरण्यमवगतम्। अतो व्यतिरेकयोः साध्याभावहेत्वभावयोरेव व्याप्तिग्रहात्, केवलव्यतिरेकी। यद्वा, सपक्षहीनो हेतुः केवलव्यतिरेकी। निश्चितसाध्यवान् सपक्षः। यथा धूमे हेतौ महानसादिः। स चाऽस्य नास्ति। पृथिवीमात्रस्य पक्षत्वात्। संदिग्धसाध्यवान् पक्षः। यथा तस्मिन्नेव हेतौ पर्वतादिः। एतेन सन्दिग्धविषये एवाऽनुमानसंचारो, न निश्चितविषये, न च निर्णीतेऽर्थे न्यायः प्रवर्त्तते, अपि तु सन्दिग्धेऽर्थे इति तार्किकोक्तेः। नच गन्धे हेतौ व्याप्त्यऽग्रहादितरभेदव्याप्यगन्धवानयमिति परामर्शासम्भवात् कथमनुमितिरिति वाच्यम्। साध्याभावव्यापकाभावप्रतियोगिहेतुमानयमित्येवं व्यतिरेकिणि परामर्शाऽङ्गीकारात्। यत्र साध्यहेत्वोस्तदभावयोश्च व्याप्तिरवगम्यते सोऽन्वयव्यतिरेकी। यथा यत्र धूमस्तत्र वह्निः। यथा महानसः। यत्र वह्न्यभावस्तत्र धूमाभावं इति। यथा महाह्रदः। इयांस्तु विशेषः। अन्वयव्याप्तौ यद्व्याप्यं तदभावो व्यतिरकव्याप्तौ व्यापकः। अन्वयव्याप्तौ यद्व्यापकं तदभावोऽत्र व्याप्य इति। तदुक्तम्॥

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते॥
तयोरभावयोस्तस्माद्विपरीतः प्रणीयते॥ १॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते॥
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः॥ २॥
व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्॥
एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतइ ति॥ ३॥

तत्रान्वयव्यतिरेकी हेतुः पञ्चविशेषोपपन्न एव साध्यं साधयितुं क्षमो, न त्वेकेनापि हीनः। विशेषाश्च-पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तत्वम्, अबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति। एते विशेषा धूमादावन्वयव्यतिरेकिणि हेतौ विद्यन्ते। धूमवत्त्वं हि पक्षस्य पर्वतादेर्धर्मस्तस्य सत्त्वात्। तथैव सपक्षे महानसादौ सत्त्वं विपक्षान्महाह्रदादेर्व्यावृत्तत्वम्। तत्राभावत्वात्। अबाधितविषयत्वं च धूमवत्त्वस्य हेतोर्विषयस्तत्साध्यो धर्मः।तच्च केनाऽपि प्रमाणेनाबाधितम्। एवमसत्प्रतिपक्षत्वम्। नास्ति प्रतिपक्षो हेत्वन्तरो बाधको यस्य सोऽसत्प्रतिपक्षः। तस्य भावस्तत्त्वम्। तथाच साध्यविपरीतसाधकहेत्वन्तरः प्रतिपक्षः। स विद्यते यस्य स सत्प्रतिपक्षः। स च धूमवत्त्वे हेतौ नास्त्येव। अनुपलम्भात्। पञ्चविशेषयोगादस्य साध्यगमकत्वम्। अग्निमत्त्वस्य साधकत्वम्। अग्नेः पर्वतादिपक्षधर्मत्वं, हेतोः पक्षधर्मताबलात् सिद्ध्यति। तथाहि। अनुमानस्य द्वे अङ्गे-व्याप्तिः पक्षधर्मता चेति। तत्र व्याप्त्या साध्यसामान्यसिद्धिः। पक्षधर्मताबलात् साध्यधर्मस्य पक्षसंबन्धित्वविशेष इति पक्षधर्मेण धूमवत्त्वेन वह्निरपि पर्वतसंबद्ध एवाऽनुमीयते। अन्यथा साध्यसामान्यस्य व्याप्तिग्रहादेव सिद्धेरलमनुमानेनेति संक्षेपः। केवलव्यतिरेकिहेतोस्तु सपक्षे सत्त्वं नास्ति। सपक्षाभावात्। केवलान्वयिहेतोश्च विपक्षव्यावृत्तत्वं नास्ति। विपक्षाभावात्। एवं त्रिविधोऽपि हेतुरनुमितिसाधकः॥

अथानुमितितत्करणज्ञानान्यतरबाधको हेतुर्हेत्वाभासः। हेतुलक्षणरहितत्वे सति हेतुवद्भासमानत्वं तत्त्वम्। सच पञ्चविधः असिद्धविरुद्धाऽनैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात्। आश्रयासिद्धाद्यन्यतमत्वम् असिद्धत्वम्। स त्रिविधः। आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्च। पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्ध-

त्वम् । यथा, गगनारविन्दं सुरभि, अरविन्दत्वात् । सरोजारविन्दवदित्यत्र पक्षतावच्छेदकं गगनीयत्वं प्रसिद्धेऽरविन्दे नास्तीति लक्षणसमन्वयः । पक्षे व्याप्यत्वाभिमतस्याभावः स्वरूपासिद्धत्वम् । यथा, जलं रसवद्, गन्धवत्त्वात् । अत्र गन्धवत्त्वस्य व्याप्यत्वाभिमतस्य हेतोर्जलेऽभावात् । व्याप्यभाववान् व्याप्यत्वासिद्धः । साध्याप्रसिद्धत्वं वा । स द्विविधः । व्याप्तिग्राहकप्रमाणशून्य एकः । सोपाधिको द्वितीयः । तत्राद्यो यथा, यत् सत् तत् क्षणिकं, सत्त्वात् घनवत् । सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकप्रमाणाभावात् । द्वितीयो यथा—क्रत्वर्था हिंसा, अधर्महेतुर्हिंसात्वाद्, बाह्यहिंसावत् । अत्राऽधर्मसाधनत्वे हिंसात्वं न प्रयोजकं, किन्तु निषिद्धत्वमेव प्रयोजकमुपाधिः । उपाधित्वं च साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । भवति हि निषिद्धत्वम् अधर्मेण व्याप्तम् । यत्र निषिद्धत्वं तत्राधर्मत्वमिति साध्यव्यापकत्वम् । यत्र हिंसा तत्र निषेध इति व्याप्तिर्नास्ति । क्रत्वर्थहिंसाया निषिद्धत्वाभावात् । प्रत्युत, वायव्यं श्वेतमालभेतेति विधिप्राप्तत्वात् साधनाव्यापकत्वमिति लक्षणसमन्वयः । उपाधिश्चतुर्विधः—केवलसाध्यव्यापकः, पक्षधर्मतावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापक, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । तत्र, धूमवान् अग्नेरिति प्रयोगे, आर्द्रेन्धनसंयोग आद्यः । तस्य केवलेन धूमेन व्यापकत्वात् । द्वितीयो, वायुः प्रत्यक्षः । प्रमेयत्वात् । अत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापक उद्भूतरूपवत्त्वमुपाधिः । अत्र पक्षभूतस्य वायोर्बहिर्द्रव्यत्वावच्छिन्नत्वात् तदवच्छिन्नमेव प्रत्यक्षत्वरूपं साध्यं व्याप्नोतीति ध्येयम् । तृतीयश्च— ध्वंसो विनाशी, जन्यत्वात् । अत्र, जन्यत्वरूपसाधनावच्छिन्नविनाशित्वेन साध्येन व्यापकत्वाद् भावत्वमुपाधिः । चतुर्थश्च—प्रागभावोऽविनाशी, अजन्यत्वात् । अत्राजन्यत्वावच्छिन्न-

नित्यत्वव्यापको भावत्वम् उपाधिः ॥ १ ॥ साध्याऽभावव्याप्तः साध्यसमानाधिकरणो वा हेतुर्विरुद्धः । यथा—शब्दो नित्यः, कृतकत्वात्, घटवदिति । कृतकत्वस्य हेतोर्नित्यत्वरूपसाध्याभावेनानित्यत्वेन सह व्याप्तत्वात् । यत्र कृतकत्वं तत्रानित्यत्वम् ॥ २॥ साध्यव्यभिचारितो हेतुरनैकान्तिकः । साधारणासाधारणानुपसंहारिभेदात् । स त्रिविधः । तत्र साध्यवदन्यवृत्तित्वं साधारणत्वम् । धूमवान् वह्नेरित्यत्र धूमवदन्यत्र तप्तायोगोलकादौ वृत्तित्वाद्वह्नेः । सपक्षाविपक्षवृत्तित्वं वा । यथा— शब्दो नित्यः, प्रमेयत्वात् । अस्योभयत्र वृत्तित्वात् । साध्यव्यापकीभूताभावप्रतियोगित्वमसाधारणत्वम् । सपक्षविपक्षव्यावृत्तत्वं वा । भूर्नित्या, गन्धवत्त्वात् । गन्धवत्त्वं हि उभयस्माद्व्यावृत्तम् । पृथिवीमात्रवृत्तित्वात् । शब्दो नित्यः, शब्दत्वात् । शब्दत्वं हि नित्यत्वव्यापको यः शब्दत्वात्यन्ताभावस्तत्प्रतियोगि । नचाऽनित्यः शब्दः, शब्दत्वादित्यत्राऽव्याप्तिः । तस्य सद्धेतुत्वात् । अथाऽन्वयव्यतिरेकिदृष्टान्तरहितोऽनुपसंहारी । यथा, सर्वमनित्यं प्रमेयत्वात् ।

अत्रोभयविधदृष्टान्ताभावात् । अवृत्तिसाध्यकत्वं वा । यथा— आकाशवान् धूमात् । आकाशरूपसाध्यवृत्तित्वं नास्ति । केवलान्वयित्वात् ॥ ३ ॥ साध्यविपरीतसाधकहेत्वन्तरं प्रतिपक्षः । स विद्यते यस्य स सत्प्रतिपक्षः यथा जलमुष्णं स्पर्शवत्त्वात् । जलं नोष्णम् । अतेजस्त्वादिति । स एव प्रकरणसम इत्युच्यते ॥ ४ ॥ पक्षे प्रमाणान्तरावगतसाध्याभावहेतुको हेतुर्बाधितः । पक्षे साध्यशून्यत्वं वा, साध्याप्रसिद्धको वा, हेत्वप्रसिद्धिर्वा । यथा जलमुष्णं वह्नित्वादिति । तथाच, पक्षे जले उष्णत्वरूपसाध्याभावस्य प्रत्यक्षेणावगतत्वात् । तथैव पक्षे जले उष्णत्वेन साध्येन शून्यत्वं, तस्यैवाप्रसिद्धत्वं, वह्नित्वहेतोरप्रसिद्धत्वं चेति लक्षणसमन्वयः । स

एवं कालात्ययापदिष्टशब्दवाच्यः ॥ ५ ॥

एतेषु बाधितस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन, साक्षादनुमितिप्रतिबन्धकत्वम् । इतरेषां परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभावतया, विरुद्धस्य समानाधिकरणाभावतया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभावतयाऽसाधारणानुपसंहारिणोर्व्याप्तिसंशयविधायकत्वेन च व्याप्तिप्रतिबन्धकत्वम् । आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । सोपाधिकस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धक इति संक्षेपः । विशेषस्य तन्त्रान्तरप्रसिद्धत्वात् ॥ २ ॥ अथ शब्दो निरूप्यते । आप्तप्रयुक्तं वाक्यं शब्दः । आप्तत्वं नाम— बुद्धिमान्द्येन्द्रियापाटवविप्रलिप्सादिभ्रमहेत्वयोगे सति यथार्थवक्तृत्वम् । तत्राप्ततमो वेदस्तदर्थस्मर्तारो मनुवाल्मीकिपराशरव्यासादयस्तद्व्याख्यातारो भाष्यकारादयश्च । तत्प्रयुक्तं वाक्यं शब्दरूपं प्रमाणमित्यर्थः । स च शब्दो वृत्तिद्वारा स्वार्थं बोधयति । वृत्तित्वं च परार्थाभिधानत्वम् । तत्त्वं नाम प्रकृतिप्रत्ययाभिधेयार्थभिन्नविशेषपदार्थत्वम् । यथा माधव इत्यत्र माशब्दो रमाभिधानपरः । धवशब्दश्च स्वामिपर्यायः । प्रत्ययश्च समासार्थः । तयोर्नित्यसंबन्धरूपार्थस्य प्रयुक्तार्थेभ्यो भिन्नत्वात् तत्र वृत्तिरिति लक्षणसमन्वयः । सा द्विधा—मुख्या जघन्या चेति । तत्र मुख्या शक्तिशब्दाऽभिधेया सा हि अभिधेतिसंज्ञिका पदार्थान्तरभूता सामान्यमात्राभिधानपरा संकेतलभ्येति कर्ममीमांसकाः । अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरसंकेतरूपा जातिविशिष्टपदार्थबोधनपरेत्यक्षपादानुधाविनः । अर्थैः साकं शब्दानां योग्यताख्यनित्यसंबन्धविशेषस्फोट इति शाब्दिकाः । अग्निनिष्ठस्वाभाविकदाहकत्वरूपसामर्थ्यवच्छब्दस्य च । स्वार्थज्ञापनादिसामर्थ्यं पदार्थान्तरमित्यौपनिषदा इति विवेकः ।

# विज्ञापनम् ।

बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः क्वचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन समाह्या तैस्तदेकैकस्य खण्डस्य कृते ॥।) मूल्यं प्रापणव्ययश्च =) देयं । अन्यैर्ग्राहकैर्यैः कानिचित् खण्डानि समाह्याणि तैश्च प्रत्येकं खण्डान कृते १) मूल्यं प्रापणव्ययश्च =) देयं इति ॥

## तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अङ्ग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ (प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहिते खण्डानि ३। द्वितीयभागः तृतीयकाण्डम् हेलाराजटीकासहितं खण्डानि ३) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | [illegible] | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुःसर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ ८ ०

वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचित.) खण्डानि ३ ३ ०

टुप्टीका खण्डानि ४ ४ ०

पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति ख० १ ०

व्याकरण मिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि १० १० ०

रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ ३ ०

भेदधिक्कार. व्याख्यासहित. श्रीमदप्पयदीक्षितकृत उपक्रम
पराक्रमसहितः खण्डे २ २ ०

बोधसारो नरहरिकृत तच्छिष्यदिवाकरकृतटीकया स० ख० १० ०

ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिर्विरचिता खण्डे २ २ ०

दैवज्ञकामधेनु. अर्थात् प्राचीनज्योतिषग्रन्थ. खण्डानि ३ ३ ०

श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् ।
गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-
व्याख्या समेतम् खण्डानि १५ १५ ०

तत्त्वशेखर. । श्रीभगवल्लोकाचार्यप्रणीतः । तथा—तत्त्वत्रयचुलुक
संग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । १ ०

श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्र-
तिपादनपरम् । यतीन्द्रमतदीपिका च । श्रीगोविन्दाचार्यसूनु-
श्रीनिवासाचार्यकृता । सकलाचार्यमतसंग्रहश्च ॥ खण्डे २ २ ०

गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायी-
व्याख्या । १ ०

आश्वलायनसूत्रप्रयोगदीपिका । श्रीविद्वद्वरमञ्चनाचार्यभट्ट-
विरचिता । १ ०

काव्यालंकारसूत्राणि । पण्डितवरवामनविरचितवृत्तिसमेतानि
कामधेनुसमाख्यव्याख्यासहितानि । १ ०

श्रुत्यन्तसुरद्रुमः । श्रीपुरुषोत्तमप्रसादविरचितः । २ ०

ब्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस सिटी

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

G. THIBAUT, PH. D.

*No. 141.*

---

# श्रुत्यन्तसुरद्रुमः ।

सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्यारूपः ।

विद्वद्वरश्रीपुरुषोत्तमप्रसादविरचितः ।

श्रुतिसिद्धान्तमञ्जरी च ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा रत्नगोपालभट्टेन संशोधितौ ।

## ŚRUTYANTASURADRUMA

BY

ŚRI PURUSHOTTAMA PRASÂDA,

*And Śruti Siddhântamanjari;*

EDITED BY RATNA GOPÂL BHATTA.

*Fasciculus III.*

BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1908.

# सूचीपत्रम्।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठ• | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रह• | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रह• | ० | १ | ६ |
| धातुपाठः ( शिला –) ) | ० | २ | ० |
| धातुरूपावली | ० | १ | ६ |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ७ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० | ० |
| शब्दरूपावली | ० | ० | ९ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| सांख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी ( प० वामनाचार्येण संशोधिता ) | २ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ८ | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | १ | ० | ० |

सा त्रिधा—रूढिर्योगो, योगरूढिश्चेति। समुदायशक्ती रूढिः। यथा, गौर्नीलं शुक्लो डित्थो मोष्ट इत्यादि। रूढाः शब्दा द्विविधाः— अनेकार्थाः, पर्यायरूपाश्च। तत्राद्या हरिगोपतङ्गसैन्धवादयः। द्वितीयाश्च हस्तकरादयः। अवयवशक्तिर्योगः। यथा, माधवो गोपीकान्तो वासुदेवो गोवर्द्धनधरो मुकुन्द इत्यादयः। उभयत्र शक्तिस्तृतीया। यथा विष्णुः, व्यापनप्रवेशनयोगाद् विष्णुः परमेश्वरः। विष्णुनामा स वेदेषु वेदान्तेषु च गीयते * इति रूढ्यापि स एवार्थो बोध्यते। जघन्याऽपि द्विधा, लक्षणा गौणी चेति। शक्यसम्बन्धो लक्षणा। स्ववाच्येन सह नियमरूपव्याप्तिरेव लक्षणेति मीमांसकाः। तच्चिन्त्यम्। मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य मञ्चस्थपुरुषेषु लक्षणाऽभावप्रयोगात्। मञ्चपुरुषयोर्व्याप्तेरनियतत्वात्। गङ्गादिपदानां तीरादौ शक्तिरेव। सर्वेषामपि पदानां सर्वत्र शक्तिमत्त्वाल्लक्षणाया भिन्नत्वेन वृत्तित्वमेव नास्तीति शाब्दिकानामेकदेशिनः। तदुक्तम्। सर्वेषां पदानां सर्वपदार्थोपस्थापकशक्तिमत्त्वे सर्वेष्वपि वाक्यस्थपदेषु एकतमेनापि सर्वपदार्थोपस्थित्यापत्त्या तस्यैव पदस्य सर्वपदार्थोपस्थापनाय पौनःपुन्येनानुपूर्वीरचनयाऽपि सर्ववाक्यार्थसिद्धिप्रसङ्गात्। पदान्तरप्रयोगवैयर्थ्यप्रसक्तेः। घटपदार्थबोधार्थं पटादिप्रयोगस्याऽपि साधुत्वप्रसङ्गात्। मातृपदार्थोपस्थित्यर्थं भार्यापदप्रयोगस्यापि साधुतापत्तेश्चेति तात्पर्यार्थः। सा त्रिधा— जहत्स्वार्थाऽजहत्स्वार्था, जहदजहत्स्वार्था चेति। तत्र शक्यार्थत्वावच्छिन्नार्थपरित्यागेनान्यत्र वृत्तिः प्रथमा। यथा, गङ्गायां घोष इत्यत्र गङ्गाशब्दस्य शक्यस्तत्प्रवाहस्तस्य सर्वांशत्यागेन तीरादौ वृत्तित्वाल्लक्षणसमन्वयः। स्वार्थत्यागेनान्यत्र वृत्तिर्द्वितीया। सा च शक्यार्थापरित्यागाच्छक्तिसादृश्यवती। यथा, काकेभ्यो दधि रक्ष्यताम्। दध्युपघातकत्वेन

काकपदस्य स्वशक्येषु काकेषु तदितरमार्जारादिषु च वृत्तिः। शक्यैकदेशत्यागे तदवशिष्टशक्यैकदेशवृत्तिस्तृतीया। यथा, घटो नित्य इत्यत्र व्यक्तौ नित्यत्वाऽयोगात् तत्त्यागेन तदेकदेशभूते घटत्वसामान्ये वृत्तिः। इयमेव भागलक्षणेति शब्द्यते। शक्यवृत्तिलक्ष्यमाणगुणसम्बन्धो गौणी। यथा सिंहो देवदत्त इत्यत्र सिंहवृत्तिशौर्यक्रौर्यादिगुणानां लक्षणया तद्वति देवदत्ते वृत्तिः। लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणतेति लक्षणवचनात्। सैव लक्षितलक्षणेति कथ्यते इति सङ्क्षेपः। अन्येषां चार्थापत्त्यादीनामत्रैवान्तर्भावात् पार्थक्याभ्युपगमे गौरवमावश्याच्च त्रीण्येव प्रमाणानीति राद्धान्तः। तथाचैतेषां बलाबलत्वं परीक्ष्यते। अत्र प्रत्यक्षं प्रबलं शब्दो वेति संशये प्रत्यक्षमेवेति पूर्वपक्षमाह ॥ अक्षमेव सबलमिति ॥ इह प्रमाणबलाबलविचारे, प्रमाणात् इति ॥ अक्षादिप्रमाणानां मध्ये निर्धारणार्थषष्ठ्यर्थे तसिप्रत्यय इत्यर्थः। अक्षमेव प्रत्यक्षमेव सबलमिति ॥ अपूर्वजा आधुनिकाः कथयन्तीति योजना। पूर्वजा इति पाठे तु परिहासार्थकश्लाघापरत्वं बोध्यम्। अन्धस्य कमलनयनसंबोधनवत्। एवकारोऽत्रान्ययोगव्यवच्छेदार्थः। ॥ च प्रमाणान्तरं व्यावर्त्तयति। शब्दादीनां प्राबल्यं नास्तीत्यर्थः। कुतः। प्राथम्यात्। यथा परमते श्रुत्यादिषु षट्प्रमाणेषु पूर्वपूर्वस्यैव श्रुत्यादेः प्राबल्यनिरूपणात्। तथात्राप्यनुसंधेयम्। प्राथम्यप्रयोगसाम्यात्। तथात्र प्रयोगः सूचितः। प्रत्यक्षं प्रबलं भवितुमर्हति। प्राथम्यात्। मीमांसकोक्तश्रुत्यादिन्यायवदिति, मोक्षहेतुभूतचरमप्रत्यक्षवच्चेति। किञ्चागमजन्यज्ञानस्याऽपि अपरोक्षत्वेनैव मोक्षासाधारणकारणत्वं, न शाब्दमात्रस्य। तस्माच्छब्दतोऽपि प्रत्यक्षप्राबल्यस्यैव वक्तव्यत्वात्। उपलक्षणं चैतत्। व्याप्तिमूलत्वेनानुमानादपि प्राबल्यं बोध्यमि-

ति प्राप्ते, राद्धान्तमाह ॥ त्वत्तस्वरूपगुणवर्णन इत्यादिना ॥ हे विभो त्वत्स्वरूपादीनां निर्णयमुखेन प्रतिपादने तु वाक्यमेव सबलं प्रतीयते निश्चीयते इत्यर्थः । भगवत्स्वरूपगुणशक्तीनामलौकिकत्वेन प्रत्यक्षाद्यन्यमानाविषयत्वात् । नेन्द्रियाणि, नानुमानमितिश्रुतेः । यदुक्तं, प्रत्यक्षस्य प्राबल्यं प्राथम्यात् । तत्तुच्छम् । असम्भवात् । न हि प्राथम्यं तावत् प्रबलत्वे मानम् । अपि तु अबाधितविषयकत्वम् । तस्य तु व्यभिचारस्तत्र तत्र दृश्यते । तथाच मायामूर्द्धादिप्रत्यक्षे बाधितविषयकत्वं सुव्यक्तम् । सूर्यादिमण्डलपरिमाणविषये चायथार्थत्वविषयकं शास्त्रसिद्धम् । इदं रजतमित्यादिप्रतीतौ चेति । तस्मात् सत्प्रतिपक्षोऽयं हेतुर्न प्रामाण्यपदवीं स्यातुमर्हः । तथा प्रयोगः । प्रत्यक्षं निर्बलं, व्यभिचारादिमत्त्वात् । सूर्यमण्डलपरिमाणप्रत्यक्षवत् । बाधितविषयत्वाच । शुक्त्यादौ रजतादिप्रत्यक्षवदित्याभाससाम्यात् । ननु इदं रजतमितिप्रत्यये किंप्रकारकमिदं रजतमिति विवेचनीयमित्याशङ्कायामाहुः केचिद्-- असदेवेति । तत्तुच्छम् । असतः प्रत्यक्षासंभवात् । इन्द्रियसन्निकर्षाभावात्, संविदभिन्नत्वासंभवाच । ननु विषयस्य सर्वसामर्थ्याभावेऽपि पूर्वविज्ञानसामर्थ्यादुपजातं प्रकाशयति असत्प्रकाशनशक्तिरेवाऽस्य । अत एवानुभवः--असदेवेदं रजतमभादितिचेन्न । शक्याभावे शक्तेरेवासिद्धत्वात् । नचासदेवास्य शक्यमिति वाच्यम् । विकल्पासहत्वात् । तथाहि । तद्विज्ञानकार्यं वा, ज्ञाप्यं वा । नाद्यः । असतः कार्यत्वासम्भवात । द्वितीये विज्ञानान्तरद्वारा विज्ञानमसत्प्रकाशकम्, उत विज्ञानमेव तत्प्रकाशकमिति । विज्ञानान्तरानुपपत्तेः । अनवस्थापातोच । नान्त्यः । सदसतोः संबन्धासम्भवात् । न ह्यतीतानद्ध वस्तुजातमपि विज्ञानानि प्रकाशयितुं शक्यानि । नचासदधीननिरूपकत्वं सतो विज्ञानस्या-

ऽसता विषयेण संबन्ध इति वाच्यम् । असतो निरूपकत्वासम्भवा-
दिति सङ्क्षेपः । इत्यसत्ख्यातिवादनिरासः ॥

अन्ये तु– सदेव रजतमित्याहुः । तच्चुच्छतरम् । विकल्पासह-
त्वात् । तथाहि । तत्सद्रूपं रजतमान्तरं बाह्यं वा । नाद्यः । तस्य
ज्ञानाभिन्नत्वे मानाभावात् । सुखादिवत् । केवल ।क्षिवेद्यत्वल-
क्षणस्यान्तरत्वस्य योगाचार्यैर्विज्ञानत्वाभ्युपगमात् । सत्त्वस्य वि-
ज्ञानाभिन्नत्वे रजतं जानामीति भेदानुभवविरोधात् । प्रपत्तुः प्रत्य-
यानतिरेकेणाहं रजतमिति प्रत्ययापत्तेश्च । नन्वनुभव एव मान-
मिति चेन्न । विकल्पासहत्वात् । तथाचेदं रजतमिति प्रत्ययो
रजतस्यान्तरत्वे मानं ? नेदं रजमिति बाधप्रत्ययो वा । नाद्यः । त-
स्येदन्त्वरजतत्वसामानाधिकरण्यबोधकत्वेन तन्मात्रे एव मानत्वा-
त् । नाऽपि द्वितीयः । न हि, नेदं रजतमिति ज्ञानं तस्य ज्ञाना-
कारत्वमवगाहते, अपि तु पुरोवर्तिनि तद्भेदमात्रम् । इदंत्वेन
निषिद्धस्य रजतस्य देशान्तरसत्त्वेनाप्युपपत्तेः । तस्मान्नोक्तानुभव-
स्यान्तरत्वे प्रामाण्यमिति ।

किञ्च, रजतस्य ज्ञानाऽऽकारत्वं स्वाभाविकं, हेत्वन्तराऽधीनं वा ? ।
नाद्यः । सर्वज्ञानानां रजताकारतापत्तेः । न द्वितीयः । विज्ञानतो-
ऽन्यद्वस्त्वन्तरानङ्गीकारात् । किञ्च, आन्तरं रजतं बाह्ये शुक्त्यादावध्य-
स्यते ? आन्तरे रजते बहिष्ट्वं वा ? । नाद्यः । तत्र पक्षे बाह्यस्यालीकत्वेन
तत्राऽध्यासायोगात् । नापि द्वितीयः । रजतस्यापि बाधितत्वेन तत्र बहि-
ष्ट्वारोपायोगात् । बाधस्य च, नेदं रजतमिति विशिष्टरजतविषयस्या-
नुभवसिद्धत्वेन तत्कल्पनासम्भवात् । अत एव, नेदं रजतं किन्तु
शुक्तिरिति बाध्याधिष्ठानाऽवधिको बाधः । अन्यथा, नेदं रजतं कि-
न्त्वान्तरमिति प्रत्ययापत्तेः । तस्मान्नान्तरं रजतमध्यासविषय इति
सिद्धम् । नापि बाह्यं तस्य विषयः । तथाचास्मिन् पक्षे रजतं पुरो-

वर्त्ति, देशान्तरस्थं वा । आद्येऽपि तद्रजतं पुरोवर्त्तिद्रव्यस्याविद्याया वा परिणामः । नाद्यः । शुक्त्यवयवोत्पन्नस्य रजतस्य शुक्तेरिव पारमार्थिकत्वेन बाधासम्भवात् । द्वितीये तु, न केवलाविद्यापरिणामः । रजतावयवानां वस्तुतरजतोत्पादकानां अभावे दोषादिसहकारिमात्रेणाविद्यायास्तदुत्पादकत्वायोगात् । किञ्च, रजतं नाविद्यापरिणामः । सर्वज्ञानानां यथार्थत्वेन भ्रमत्वाऽनुपपत्तेः । तस्मान्न पुरोवर्त्तिरजतमध्यासविषयः । देशान्तरवर्त्तित्वाभ्युपगमपक्षेऽपि न तावत्केवलाचक्षुषस्तद्विषयकज्ञानस्य जन्म । तस्यासन्निकर्षात् । इन्द्रियाणां समीचीनज्ञानजननसामर्थ्यनियमात् । नाऽपि दोषसहकृतात् । दोषस्य प्रकृतकार्योपजननसामर्थ्यविघातमात्रहेतुत्वात् । तस्मान्न देशान्तरवर्त्तिरजतारोपसम्भव इत्यासख्यातिवादनिरासः ॥ २ ॥

इतरे तु भ्रान्तिज्ञानमेव नास्ति । सर्वज्ञानानां यथार्थत्वात् । विमतिपन्नाः सर्वे प्रत्यया यथार्थाः । प्रत्ययत्वात् । घटादिप्रत्ययवदित्यनुमानात् । नचायथार्थाऽनङ्गीकारे विसंवादिप्रवृत्त्यभावप्रसङ्गो वक्तव्यः । इष्टभेदाग्रहादेव तदुपपत्तेः । यद्वा, स्वरूपतो विषयतश्चाऽगृहीतभेदग्रहणस्मरणात्मकज्ञानद्वयस्यैव प्रवर्तकत्वान्नोक्तदोषावकाश इत्याहुः । तच्चिन्त्यम् । अस्ति तावत् पुरोवर्त्तिनि, इदं रजतमिति सामानाधिकरण्यप्रत्ययो, रजतार्थिप्रवृत्तिश्चेति निर्विवादः । तत्र भेदाग्रहमात्रान्नभवितुमर्हति । चेतनव्यवहारस्य ज्ञानपूर्वकत्वात् । अन्यथा सुषुप्तावपि तत्प्रसङ्गात् । यदप्युक्तम् । स्वरूपतो विषयतश्चाऽगृहीतभेदग्रहणस्मरणात्मकज्ञानद्वयस्य प्रवृत्तिहेतुत्वम् । तदप्ययुक्तम् । उक्तलक्षणज्ञानद्वयाङ्गीकारे, इदं साक्षात् करोमि, रजतं स्मरामीति स्वार्थविवेचकानुव्यवसायप्रसङ्गस्य दुर्वारत्वात् । किञ्च, विप्रतिपन्नं ज्ञानं रजतत्वप्रकारकम् । तत्प्रका-

रकप्रवृत्तिजनकत्वात् । उभयसिद्धसमीचीनरजतज्ञानवदित्यनुमानात् पुरोवर्तिनि रजतत्वसिद्धौ तस्य च बाधदर्शनेन मिथ्यात्वावगमात् । तज्ज्ञानविषययथार्थत्वानुमानस्यापि बाधितत्वादयथार्थत्वसिद्धेरिति यावत् । इत्यख्यातिवादनिरासः ॥ ३ ॥

अपरे तु— इदं रजतमिति ज्ञानमयथार्थमेव। तद्वति तत्प्रकारकत्वाभावात् । ननु तस्यायथार्थत्वे रजतार्थिप्रवृत्त्यभावप्रसङ्ग इति चेन्न । पुरोवर्तिविशेष्यकरजतत्वप्रकारकविशिष्टज्ञानस्य तत्प्रवृत्तिहेतुत्वेन क्लृप्तस्यैव तत्र विषयत्वाभ्युपगमात्प्रोक्तदोषावकाश इति तन्न । विकल्पासहत्वात् । तथाहि । देशान्तरीयं रजतमसन्निकृष्टं भासते, सन्निकृष्टं वा । नाद्यः । सन्निकर्षाभावे तद्वति तत्प्रकारकसामग्रीविरहात् । विशेष्यसन्निकर्षवद्विशेषणसन्निकर्षस्यापि विशिष्टज्ञाने हेतुत्वात् । अन्यथा व्यवहितदण्डके पुंसि दण्डीति विशिष्टप्रत्यक्षप्रसङ्गात्। नच जन्ययथार्थप्रत्यक्षे एव विशेष्यसन्निकर्षो हेतुरिति वाच्यम् । लाघवाज्जन्यप्रत्यक्षत्वावच्छिन्न एव तस्य हेतुत्वात् । सङ्कोचे मानाभावाच्च । अन्यथा वह्निसन्निकर्षाभावेन सन्निकृष्टेऽपि पर्वतादौ वह्निविशिष्टप्रत्यक्षाभाववर्णनं तव मतेऽपि विरुद्ध्येत् । नापि द्वितीयः । सन्निकर्षासिद्धेः । तथाहि । तव मते सन्निकर्षो द्विविधः— लौकिकालौकिकभेदात् । तत्र को वा सन्निकर्षोऽभिमत इति वक्तव्यम् । आद्यो, द्वितीयो वा । नाद्यः । इन्द्रियस्य देशान्तरीयविषयेण सह संयोगसमवायादेरसम्भवात् । द्वितीयेऽपि सामान्यप्रत्यासत्तिर्विवक्षिता, ज्ञानप्रत्यासत्तिर्वा । नाद्या । प्रमाणाऽभावात् । नच व्याप्तिग्रहान्यथानुपपत्तेरेवात्र मानत्वादिति वाच्यम् । सिद्धान्ते सन्निकृष्टधूमादिव्यक्तिविषयत्वेन सर्वधूमाविषयतया तस्य सामान्यप्रत्यासत्तिकल्पनायोगात् । नच धूमो वह्निव्यभिचारी न वेति संशयानुपपत्तिरिति वाच्यम् । तस्य तत्तद्धूमत्वेन वह्निसा-

मानाधिकरण्यनिश्चयोऽपि प्रसिद्धधूमे एव । अप्रसिद्धधूमाविषयत्वात् । तस्मात्र सामान्यप्रत्यासत्तिरिति सिद्धम् । नापि ज्ञानप्रत्यासत्तिसम्भावना । प्रमाणाभावसाम्यात् । नच घटमहं न जानामीति अनुव्यवसायस्यात्र मानत्वमिति वाच्यम् । तस्य स्वप्रकाशतया मनोजन्यज्ञानान्तरानपेक्षत्वादिति सङ्क्षेपः । इत्यन्यथाख्यातिवादनिरासः ॥ ४ ॥

इतरे तु, इदं रजतमितिप्रत्ययस्तावद् भ्रम एव । नच तथात्वे विषयासिद्ध्या तत्र रजतार्थिप्रवृत्त्यसम्भवो भावनीयः । अनिर्वचनीयतत्कालोत्पन्नरजतस्य तत्र सत्त्वात् । तदेव प्रवृत्तिहेतुत्वेन कल्प्यते । ननु तत्कालोत्पन्नरजते न किञ्चित्प्रमाणं दृश्यते इति चेन्न । इदं रजतमिति प्रत्ययस्यैव तत्र मानत्वात् । न तावदसतश्चान्तरस्य वा तत्र विषयत्वयोगः । पूर्वमेव निरस्तत्वात् । नापि व्यवहितस्य देशान्तरीयरजतस्य तत्त्वायोगः । तथाभूतस्य प्रत्यक्षासम्भवात् । परिशेषादनिर्वचनीयं तात्कालिकं रजतं तत्रोत्पद्यते इति कल्प्यते । अन्यथा प्रत्ययस्य निर्विशेषत्वापत्तेरिति कल्पयन्ति । तत्तुच्छम् । अनिर्वचनीयवादस्य लक्षणप्रमाणासिद्ध्या पूर्वमेव विस्तरशो निराकृतत्वात् । किञ्च, न तत्कालोत्पन्नरजते किञ्चिन्मानमस्ति । नचोक्तप्रत्ययस्यैव तत्र मानत्वमुक्तमेवेति वाच्यम् । तस्य सत्त्वेनापि विषयेण नैराकाङ्क्ष्यसम्भवेनाप्रामाण्यशङ्कास्पदत्वादवस्थ्यादित्यनिर्वचनीयख्यातिवादनिरासः ॥ ५ ॥

वस्तुतस्तु सद्रूपमेव रजतम् । असत आरोपासंभवात् । पञ्चीकृतरूपेण तेजसः सतः कारणस्य तत्र सत्त्वात् । अन्यथा खपुष्पादीनामप्यारोपापत्तेः । नच तथा दृष्टं श्रुतं वा । सर्वानुभवविरोधात् । ननु दोषरूपकारणस्यापि तत्र सत्त्वेन तत एवोत्पत्तिः संभाव्यते इति चेन्न । दोषस्यापि तत्र मतेऽसत्त्वसाम्यात् । असत्त्वस्य कार-

णत्वायोगात् । ननु सत्ख्यातिवादेऽपि स्वाप्नगजादौ विषयो दुर्निरूप्यस्तथाच निर्विषयत्वात्तज्ज्ञानस्यायथार्थत्वमेवेति चेन्न । विषयस्य सर्वत्र सत्त्वात् । तथाहि । न तावत्स्वाप्नपदार्थज्ञानस्याऽयथार्थत्वं शङ्कनीयम् । तत्पदार्थानां परमेश्वरसृज्यत्वात् । ननु यदि पारमेश्वरी स्वाप्नसृष्टिस्तर्हि तात्कालिकबाधो न स्यादन्यैश्च समीपवर्त्तिभिः पुरुषैरनुभूयेत, न तु तदृश्यते । तस्माज्जीवसृष्टिरेव । तस्या मिथ्यात्वं च सुतरां वक्तुं शक्यमिति चेन्न । न तावदीश्वरसृष्टेः सर्वस्या अपि बहुकालस्थायित्वनियमो वक्तुं शक्यः । तत्संकल्पानुसारित्वात् । कस्यचिद्राकाशादेर्महाप्रलयावसानत्वम् । अन्यस्य देवदत्तपुत्रादेर्यत्किञ्चित्कालावस्थायित्वं, कस्यचिद् वस्तुनस्तत्कालोत्पत्तिर्नाशश्चेति प्रत्यक्षादिप्रमाणसिद्धम् । तस्मात्तत्स्थितिकालस्य परमपुरुषसंकल्पाधीनत्वेन बहुकालाल्पकालानियमाशेक्तदोषावकाशः । यदप्युक्तमन्यैः समीपवर्त्तिभिरननुभूयमानत्वान्मिथ्यात्वम् । तदयुक्तम् । देवदत्तमनोगतदुःखादेरन्यैरननुभूयमानेऽपि न तस्य मिथ्यात्वयोगः । तद्वदत्रापि भाव्यम् । नच सुखादीनां मनोजन्यत्वेन जीवकर्तृकत्वाद् दृष्टान्तवैषम्यमिति शङ्कनीयम् । सुखादीनामीश्वरकर्तृकत्वमेवेति । सुखं दुःखं भावो भवो भयं चाभयमेव च ॥ अहिंसा समता तुष्टिस्तपोदानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधा इति श्रीमुखोक्तेर्दृष्टान्तसिद्धः सामञ्जस्यमिति । किञ्च, स्वाप्नपदार्थास्तत्तत्प्राणिपुण्यापुण्यानुरूपास्तत्तत्पुरुषविशेषानुभाव्यास्तावत्कालावसानाश्च परमात्मना मत्संकल्पेन सृज्यन्ते, न जीवैरिति । तथाच जीवानां सत्यसंकल्पत्वाभावात् स्रष्टृत्वासंभवः । अन्यथा तेषां सर्वदा सुखानुभव एव भवेन्न कदापि दुःखयोगः । जाग्रदवस्थादिष्वपि स्वसंकल्पानुसारिणीः क्रियाः कुर्युः । तु न तथा दृश्यते । प्रमाणविरोधात् । तथा स्वप्नेऽपि बोध्यम् ।

किञ्च, य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणस्तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमुच्यते, तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति स्वाप्नसृष्टिविधायकवाक्योक्तलिङ्गानां न जीवात्मनि समन्वेतुं शक्यम्। अत्यन्तासम्भवात्। तस्मात् परमात्मसृष्टत्वात्तद्विषयकज्ञानस्य यथार्थत्वमिति सिद्धम्। ननु स्यादेतत्, तथापि रज्जावयं सर्प इति ज्ञानस्य तु अयथार्थत्वमेव। तत्र सर्पस्याऽत्यन्ताभावप्रतियोगित्वादितिचेन्न। तस्यापि तद्रूपसर्पज्ञानजन्यत्वेन सत्त्वात् तद्विषयकज्ञानमपि यथार्थमेव। अन्यथा सत्यसर्पज्ञानाभाववतो बालस्यापि ज्ञानं स्यात्। तत्तु नास्त्येव। अदृष्टचरत्वात्। एतद्विस्तारस्तु पूर्वमेव निरूपितः। अत्रानुवादमात्रं कृतं बोध्यं, न पुनरुक्तिः। किञ्च, नापि मरीचिकायां जलज्ञानस्यायथार्थत्वम्। तस्यापि पञ्चीकरणप्रक्रियया तत्र सत्त्वात्। तत्र पार्थिवभागस्य भूयस्त्वेन तदग्रहो व्यवहारासाधकत्वमप्यविरुद्धम्। अत एव तत्र भ्रम इत्युपचर्यते। एवमेव शुक्तिरजतादावपि स एव न्यायोऽवतारणीयः। अपिच, पीतः शङ्ख इत्यादौ नयनवर्तिपित्तद्रव्यासंव्याप्ता नयनरश्मयः शङ्खेन संयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः शङ्खस्थितशुक्लिमा न गृह्यते। अतः सुवर्णाऽनुलिप्तशङ्खवत् पीतः, शङ्ख इति प्रतीतिर्जायते।

सूक्ष्मत्वात् पीतिमा स्वनयननिष्क्रान्ततया स्वेनैव गृह्यते, न त्वन्यैः। जपाकुसुमसमीपवर्त्तिस्फटिकमणिरपि रक्त इति गृह्यते। दिग्भ्रमोऽपि तथैव। दिशि दिगन्तरस्य विद्यमानत्वात्। अदृष्टवशेनैतद्दिगंशावियुक्तो दिगन्तरांशो गृह्यते। अवच्छेदकमन्तरेण दिशो द्रव्यान्तरानङ्गीकाराच्च। अलातचक्रेऽपि शैघ्र्यादन्तरालाग्रहणात् तत्तद्देशसंयुक्तत्वद्रव्यस्तुन एव चक्राकारेण ग्रहणम्। दर्पणादिषु निजमुखादिप्रतीतिरपि। दर्पणादिप्रतिहतगतयो नयनरश्म-

यो दर्पणादिग्रहणपूर्वकं निजमुखादीन् गृह्णन्ति। तत्राप्यतिशैघ्र्यात्तदन्तरालाग्रहणम्। तथा द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भतिमिरादिभिर्नयनतेजोगतिभेदेन सामग्रीभेदात्। एवं सामग्रीद्वयमन्योन्यानिरपेक्षं चन्द्रद्वयग्रहणे हेतुर्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु किञ्चिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणेऽपि ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च, द्वौ चन्द्राविति भवति प्रतीतिविशेषः। देशान्तरस्य तद्विशेषणत्वं, देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति। तत्र सामग्रीद्वित्वं पारमार्थिकम्। तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम्। ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम्। तत्र विशेषणद्वयावच्छिन्नचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञा तु केवलचक्षुषः सामर्थ्याभावाच्चाक्षुषं ज्ञानं तथैवावतिष्ठते। द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजःसामग्रीद्वयं भवतीति कार्य्यकल्प्यम्। अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणनैयत्यात् एकचन्द्र इति प्रत्ययो भवति। दोषकृतं तु सामग्रीद्वित्वं, तत्कृतं ग्रहणद्वित्वं, तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम्। ननु सत्याया एव सामग्र्याः कार्योत्पत्तिरिति नियमो वक्तुमशक्यः। व्यभिचारस्य मानासिद्धत्वात्। तथाहि। असन्नपि स्वाप्निकः स्त्रीप्रसङ्गो वीर्यपतनं सुखानुभूतिं च कार्यं जनयति। प्रतिबिम्बं च बिम्बसाधकं रेखारोपितवर्णश्चार्थसाधकः। वर्णदैर्घ्यादिकं च, नगो नाग इति भेदस्य ज्ञापकम्। शङ्काविषस्य मरणजनकत्वं, सवितृसुषिरादीनां चाऽनिष्टादिसाधकत्वं दृश्यते। नैतेषु कारणेषु कस्यापि सत्त्वं वक्तुं शक्यते। अपि

तु मिथ्यात्वमेव । तस्मादुक्तसिद्धान्तस्याप्रामाण्यमेवेति चेन्न । सर्वत्रापि कारणस्य सत्त्वादेव नोक्तदोषावकाशः । तथाहि । न तावत् स्वाप्निकस्त्रीसङ्गजन्यसुखादौ असत्यायाः कारणत्वं, किन्तु तज्ज्ञानं तज्जन्यसंस्कारश्च । तस्य च सत्त्वात् । अन्यथा बालस्यापि तथानुभवो भवेत् । स तु नास्त्येव । तद्विषयकज्ञानाभावेनानुद्बुद्धसंस्कारत्वात् । किञ्च, प्रतिबिम्बे बिम्बाभावत्वदन्तस्तित्वरूपव्याप्तेः सत्त्वादेव बिम्बानुमितिजनकत्वम् । अपि च, रेखाया वर्णे पदस्यार्थ इव सङ्केतितत्वेन रेखास्मारितवर्णस्यैव बोधकत्वात्, रेखावर्णभेदज्ञानवतामपि बोधात् दैर्घ्यादिकं वर्णगतं सत्यमेव तार्किकाणां मते नानादैर्घ्यादियोऽनित्या, वर्णा अपि सिद्धान्ते नित्या एव । शास्त्रयोनित्वाधिकरणभाष्ये भवतामपि वेदस्य नित्यत्वाङ्गीकारात् । दैर्घ्यादिज्ञानस्यैव हेतुत्वेन मतान्तरेऽप्युपपत्तिसंभवात् । किञ्च, विषभक्षणज्ञानजन्यशङ्कानिमित्तभयजन्यधातुव्याकुलत्वस्यैव मरणहेतुत्वात् । पुत्रमरणश्रवणवत् । न तथाभूतविषभक्षणस्य । तस्य तु सत्यमेव । तथैव नवितृसुपिरज्ञानस्यैवानिष्टादिहेतुत्वम् । तस्य तु सत्यत्वमेव । सत्येऽप्यर्थे तदज्ञाने च भयाद्यभावदर्शनात् । तस्मात् सतः कारणत्वं कार्योत्पादनशक्तिमत्त्वादिनियमस्याव्यभिचारित्वसिद्ध्योक्तसिद्धान्तस्यैव वरीयस्त्वं श्रेयस्कामैरनुभाव्यमित्यलं विस्तरेण ॥

प्रकृतमनुसरामः । यदप्युक्तम् । आगमजन्यज्ञानस्यापि प्रत्यक्षेणैव मोक्षहेतुत्वं, न शाब्दमात्रस्य । तस्मादपि प्रत्यक्षस्यैव प्राबल्यमिति । तन्न । निदिध्यासनजन्यपरमयोगिसाक्षात्कारप्राबल्यस्य शास्त्राधीनत्वेनेष्टत्वात् । अयं भावः । नास्माकं प्रत्यक्षादिप्रमाणान्तरानङ्गीकारे तात्पर्यम् । अपि तु तेषां शास्त्रम् ऋते स्वातन्त्र्येण प्राबल्यनिषेधमात्रे एव । तथाच भगवत्स्वरूपगुणादी-

नामचिन्त्यानन्तालौकिकतया प्रत्यक्षादिप्रमाणविषयानर्हत्वात् तत्प्रतिपादने तु श्रुतेरेव सामर्थ्यात्तस्यैव प्राबल्यम् । तन्मूलस्मृत्यादेश्चानुमानप्रत्यक्षादेश्चेति सङ्क्षेपः । श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् * निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च । या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इत्यादिस्मृतेः । किञ्च, सर्वे वेदा यत्पदमामनन्ति, शास्त्रयोनित्वात्, वेदैश्च सर्वैरहमेव वेद्यः, वेदे रामायणे पुण्ये पुराणे भारते तथा * आदावन्ते च मध्ये च हरिः सर्वत्र गीयते । नावेदविन्मनुते तं बृहन्तमित्याद्यन्वयव्यतिरेकशास्त्राच्छब्दस्यैव प्राबल्यमिति सिद्धान्तः । शास्त्रं च, वेदतदविरुद्धस्मृतीतिहासपुराणब्रह्मसूत्रपञ्चरात्रादि । तथाच स्मृतिः—ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् * मूलरामायणं चैव शास्त्रमित्यभिधीयते । यच्चानुकूलमेतस्य तच्च शास्त्रं परं मतम् । अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तदित्यादि । एतेन, शास्त्रयोनित्वादित्यधिकरणं ग्रन्थकृद्भिर्व्याख्यातम् । तुल्यार्थकत्वाच्छ्लोकस्य । तस्माच्छास्त्रैकप्रमाणगम्योऽन्यप्रमाणागोचरश्च त्वमसीति भावार्थोऽधिकरणप्रतिपाद्य इति सङ्क्षेपः ॥ १९ ॥

इति श्रीहयग्रीवानुग्रहलब्धविवेकेन श्रीमन्नियमानन्दानुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते
सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने
श्रुत्यन्तसुरद्रुमे

ब्रह्मणि प्रमाणतद्बलाबलविचारशाखा चतुर्दशी ॥ १४ ॥

---

## अथ शाखा पञ्चदशी ।

अथ भगवतो ध्रुवास्मृतिमत्ता परमयोगिनाम् औत्कर्ष्यं द-र्शयन्नुपमासूर्यकादिवदित्यधिकरणं व्याचष्टे ।

एकधा च बहुधा प्रदृश्यते
यत्र यत्र तव बिम्बमात्मनः ॥
उत्तमश्च खलु भग्यवत्सु स
सोऽपि युक्ततम एव सद्वरः ॥ २० ॥

एकधेति ॥ यत्र यत्रेति ॥ यस्मिन् यस्मिन्नधिकारिवि-शिष्टे स्वत्प्रसादैकभाजने चरमजन्मनि ज्ञानिनि आसन्नमोक्षके पुरुषविशेषे ॥ आत्मन इति ॥ विश्वस्यान्तरात्मनः । एष सर्वभू-तान्तरात्मा, दिव्यो देव एको नारायण इत्यादिश्रुतेः ॥ तवेति ॥ सर्वज्ञत्ववात्सल्यकारुण्याद्यनन्ताचिन्त्यस्वाभाविकयावदात्मवृत्ति कल्याणगुणवरुणालयस्याऽस्पृष्टदोषगन्धमाहात्म्यस्वभावस्य श्री-मुकुन्दस्य, बिम्बमिति ॥ मूर्तिरिति यावत् ॥ एकधा बहुधा च प्रदृश्यते इति ॥ कर्मकर्तृप्रयोगः, स्वाभाविकदयादिसद्गुणवि-शेषपारवश्येन हेतुना स्वेनैव प्रकाश्यते स सद्वर इत्यन्वयः । य-मेवैष वृणुते तेन लभ्य इति श्रुतेः । स इति भिन्नाभिन्नब्रह्मविषय-कध्रुवास्मृतिमान् पुरुषः । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशि-ष्यते * प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितः स हि युक्तात्मा मा-मेवानुत्तमां गतिमिति श्रीमुखोक्तेः । तमशब्द उत्कर्षद्योतनपरः । त-त्त्वं च, दर्शने कालव्यवच्छेदशून्यत्वम् । वार्षिकनद्याः प्रवाह-वदनवच्छिन्नदर्शनरूपाक्रियावाचक इत्यर्थः ॥ एकधेति ॥ चे-तनाचेतनविश्वात्मतया सर्वव्यापकतया सर्वाधारतया स्वातन्त्र्य-

सत्तायोगतया चैकधाऽभेदेनेति यावत् । सर्वव्यापी सर्वभूतान्तराऽऽत्मेति यः सर्वाँल्लोकान् व्याप्नोति स्नेहो यथा पललपिण्डमिति । यस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेत्यादिश्रुतेः । किञ्च, बहुधेति ॥ चेतनाचेतनस्वात्मीयस्वव्याप्यस्वाधेयस्वाधीनसत्ताकस्वाद्यवच्छिन्नविशेषरूपेण बहुधा भेदेनेति यावत् । एक एव हि भूतात्मा भूते भूते व्यवस्थितः * एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति श्रुतेः । एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमिति श्रीमुखोक्तेश्च । अथोक्तलक्षणं भागवतं विशिनष्टि ॥ खलु भाग्यवत्सु स उत्तम इति ॥ खल्विति अवधारणार्थः । स एव उत्तम इत्यर्थः । भाग्यवन्तः पुरुषार्थभाजस्तेषु मध्ये । निर्धारणार्थे सप्तमी । तेषु मध्येऽसौ परमपुरुषाऽर्थमोक्षभागित्वादिति भावः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां स उत्तमः पुरुष इत्यादिश्रुतेः । किञ्च, सोऽपि युक्ततम एवेति ॥ अपीति निश्चये । स युक्ततम एव । अतिशयेन युक्त एवेति यावत् । योगिनामपि सर्वेषां मद्गतेनान्तरात्मना * श्रद्धावान् भजते यो मां स मे युक्ततमो मत इति गानात् । एकवचनोक्तिश्चात्र तस्य दौर्लभ्यद्योतनार्था । मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये * यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत इति शास्त्रात् ॥

ननु एक एव हि भूतात्मेत्यादिश्रुतिरुपमा सूर्यकादिवदिति सूत्रं च प्रतिबिम्बप्रतिपादनपरमिति चेन्न। तयोः प्रतिबिम्बपदाऽदर्शनात् । प्रत्युत, अच्छायमिति श्रुत्यन्तरेण निषेधश्रवणाच्च । पूर्वमेव बहुशो निरस्तत्वाच्च । श्रुत्यर्थस्तु—भूतात्मा भगवान् वासुदेव एक एव भूते भूते व्यवस्थित इति । पूर्वभूतशब्दो देवतिर्यङ्मनुष्यादिचेतनवर्गपरः । द्वितीयो भूतशब्दश्चाचेतनपरः । तथाचोत्तममध्यमादिचेतनेषु प्रधानादिजडवर्गेषु च व्यवस्थितोऽपि अप्रच्युतस्वरूपोऽजहद्गुण--

शक्त्यादिश्च महात्मभिर्दृश्यते । नन्वेवं कथं तद्गुणदोषैर्न लिप्यते इत्याशङ्क्य दृष्टान्तमुखेन निराकरोति । जलचन्द्रवदिति । यथा चन्द्रः श्रीगङ्गादिपुण्यतीर्थजलेषु शूकरादिविलोडितगर्तादिजलेषु च स्वकरानिकरव्याप्त्या तत्र तत्र वर्तमानोऽपि न तद्गतगुणैर्दोषैर्वा युज्यते । एवं ब्रह्मादिश्वपाकान्तेषु सर्वत्र साम्येन स्वरूपव्याप्त्या तिष्ठन्नपि न तद्गतगुणदोषैर्युज्यते । अस्पृष्टस्वभावत्वात् । सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः * एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य इत्यैक्यार्थश्रुत्यन्तराच्च । तत्रैकधा समष्ट्यन्तरात्मत्वेन, बहुधा व्यष्ट्यन्तरात्मत्वेनेति संक्षेपः । एतेन सूत्रमपि व्याख्यातं बोध्यम् । तुल्यार्थत्वात् ॥ २० ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीमत्प्रियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे पञ्चदशी शाखा ॥ १५ ॥

## अथ षोडशी शाखा ।

अथाहमर्थस्य प्रत्यगात्मस्वरूपत्वं प्रतिपादयन्नाह ।

द्व्यंशताऽपि न च भाति चेतने-
ऽहम्प्रतीतिविषयेऽहमर्थके ॥
स्वच्छरीरमिति हेतुवर्णना-
स्वन्य आत्मपरिशीलने कुतः ॥ २१ ॥

द्व्यंशतेति ॥ अहं जानामि, करोमि, पश्याम्यनुभवामीति प्रत्ययोऽहमर्थः प्रकृतिकार्याऽहंकारो वा, प्रत्यगात्मस्वरूपो वेति संशये । प्राकृताहङ्कार एवेति पूर्वः पक्षः । तस्य सुषुप्त्यादावननुगतत्वात् । अथात्मादेशः, अथाहङ्कारादेश इति श्रुत्योभयोः पार्थक्येन निर्देशात् । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधेति भगवद्वचनाच्च । अहमर्थो नात्मा, सुषुप्त्याद्यवस्थास्वननुगतत्वात् । स्थूलदेहादिवत् । करणत्वात् । चक्षुरादिवदित्यनुमानाच्चेति प्राप्ते राद्धान्तमाह ॥ द्व्यंशतेति ॥ अहमर्थके द्व्यंशताऽपि न भातीति योजना । अहमर्थ एवाहमर्थक इति स्वार्थे तद्धितः । अहमर्थके प्रत्यगात्मनि द्व्यंशतेति । द्वयोरंशौ द्व्यंशौ तयोर्भावो द्व्यंशता चेतनाहङ्काराध्यासरूपतेति यावत् । तत्र हेतुमाह ॥ अहम्प्रतीतिविषये इति ॥ अहं जानामीत्यादिप्रतीतिविषयत्वात् । ननु पूर्वोक्तरीत्या प्रतीतिविषयो नात्मा, किन्त्वहङ्कार एवेति पूर्वमेवोक्तम् । व्यभिचारादिना तस्यानात्मत्वमेवेति चेन्न । उक्तहेतोः स्वरूपासिद्धत्वेनाभासमात्रत्वादित्याह ॥ चेतन इति ॥ चेतनाभिन्नत्वान्न व्यभिचारो वाच्यः । तस्य मानासिद्धत्वात् । एतावन्तं कालं सुखमहमस्वाप्सम्, एतावन्तं कालं मूर्छित एवासं, न किञ्चिदवेदिषमि-

स्यादिस्मरणस्य योऽहमस्वाप्सं स एवाहं जागर्मीति प्रत्यभिज्ञानस्य च मानत्वात् । सर्वावस्थास्वननुगतत्वादित्याकारस्य हेतोः स्वरूपाऽसिद्धत्वयोग इति सुषुप्त्यादावपि सुखाज्ञानविषयकज्ञानाश्रयाभिन्नोऽहमर्थोऽनुगत एव । अभिज्ञाप्रत्यभिज्ञयोरनुभवस्मरणयोश्च सामानाधिकरण्यनियमात् । नहि अन्येनाभिज्ञातमनुभूतं चान्येन प्रत्यभिज्ञातुं स्मर्तुं वा शक्यते । अत्यन्तासम्भवात् । ननु ज्ञातुः सत्त्वे विशेषज्ञानं किमिति न स्यादितिचेन्न । तत्र विषयस्याभावात् । न हि ज्ञातुः सत्त्वमात्रं विशेषानुभवे प्रयोजकम्, अपि तु विषयस्य सत्त्वमपीति तस्माज्ज्ञातुः सत्त्वेऽपि विषयाभावाद्विशेषज्ञानाभावोऽविरुद्ध इति भावः । नचैतावन्तं कालं मामप्यहं नावेदिषमिति प्रतीतेरस्मदर्थाभावविषयिकाया अपि प्रसिद्धत्वेनापह्नोतुमशक्यत्वात् तथात्वे व्यभिचारस्य तादवस्थ्येनास्मत्प्रयुक्तहेतुसिद्धिरित्याशासनीयम् । त्वदुक्तप्रत्ययेऽपि तस्यानुगतत्वेन प्रयुक्तहेत्वसिद्धेस्तादवस्थ्यात् । तथाहि । तत्र, मामिति द्वितीयान्तस्य कर्मरूपास्मदर्थस्य जाग्रदाद्यवस्थानुभूताऽनादिकर्मसंस्कारप्रयुक्तात्मत्वाभिमतदेहाद्यवच्छिन्नो विषयः । अहमिति प्रथमान्तस्य कर्तुरस्मदर्थस्य देहेन्द्रियादिविलक्षणशुद्धब्रह्मात्मकप्रत्यगात्मा ज्ञाता विषयः । एवं मामिति द्वितीयान्तपदार्थस्य जाग्रदाद्यवस्थानुभूतस्य देहेन्द्रियादिसम्बद्धस्य तत्राभावान्निषेधविषयत्वं सूपपन्नम् । तथैवाहमिति देहादिवियुक्तस्य तद्विशिष्टाभावविषयकानुभवाश्रयाभिन्नस्य तत्रापि सत्त्वाज्ज्ञातृतया भानमपि सूपपन्नतरम् । इत्थमहमर्थस्यानुभवितुः सर्वावस्थानुगतत्वेन हेत्वसिद्धेस्तादवस्थ्यमेव । एतेन न जानात्ययमहमस्मीति श्रुतिरपि व्याख्याता । तस्या अपि विशिष्टप्रतियोगिकाभावविधानपरत्वसाम्यात् । अन्यथा, नात्मानं न पराँश्चेति श्रुतेः सुषुप्तावात्माभावोऽपि स्वीकार्यो देवानाम्प्रियैरिति भावः ।

किञ्च, यद्यहमर्थस्य परामर्शो न चेत् तर्हि स कथमात्मन्यहं ज्ञानादन्य आत्मेति परामर्शो न दृश्येत । अस्वाप्समित्यत्रापि उत्तमपुरुषप्रयोगो वा कथं स्यात् ।'उत्तमपुरुषप्रयोगान्यथानुपपत्त्यापि तस्यात्मत्वमित्यवगम्यते । अन्यथाऽहमर्थव्यावृत्तवस्त्वन्तरविषयकपरामर्शाङ्गीकारे, एतावन्तं कालं सुप्तोऽहं वाऽन्यो वेति संशयः स्यात् । न त्वहमेवेति निश्चयः । ननु, नाहमंशे परामर्शः, किन्तु परामृश्यमान आत्मा इदानीं जातेनाहङ्कारेणावच्छेदादहंत्वं भासस्तथाऽनुभूयते इति चेन्न । न किञ्चिदवेदिषमित्यादावज्ञानांशेऽप्यपरामर्शत्वापातात् । न ह्यज्ञानादिकं निराश्रयमन्याश्रयं वा परामृश्यते, किन्त्वहमर्थाश्रयम् । एतावन्तं कालं स्वप्नं पश्यन्नासं जाग्रदासमित्यत्रैवाहमस्वाप्समित्यत्राप्यहमंशे परामर्शानुभवाच्च । इतरथा, यः पूर्वं दुःखी स्वप्नं चापश्यत् सोऽधुना सुखी जातः सुप्त इतिवद् यः पूर्वं मदन्यः सुप्तः सोऽधुनाहं जात इति धीः स्यात् । नन्वहङ्कारे परामृश्यमानात्मैक्यारोपात्तज्ज्ञाने परामर्शत्वाभिमान इति चेन्न । अपरामर्शे परामर्शारोपादर्शनात् । सिद्धेऽहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः, सिद्धे च तस्मिन् सुषुप्त्यादावप्रकाशेनाऽहमर्थस्यात्मान्यत्वमिति अन्योन्याश्रयाच्च । अहमित्यतोऽन्य आत्मपरामर्शो नेत्युक्तत्वेन दृष्टहानादृष्टकल्पनापाताच्च । किञ्च, सुषुप्तावहमर्थाभावेऽहं विदुःखः स्यामितीच्छायाः सुषुप्तौ मत्यप्रयोगः । योऽहं सुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञानबाधश्च । योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमीति प्रत्यभिज्ञानुपपत्तेश्च । अहंव्यक्तिभेदात् कृतनाशाकृताभ्यागमप्रसङ्गश्च । कर्तुर्भोक्तुश्चाहमर्थस्य भिन्नत्वात् । अभिन्ने च चैतन्ये कर्तृत्वाद्यनङ्गीकारात् । कर्तृत्वाद्यारोपस्य च देहादावपि सत्त्वात् । अहङ्करोमीत्येव प्रतीत्याहमर्थान्यात्मनि कर्तृत्वारोपस्याप्यभावाच्च । किञ्च,

स्वन्मतेऽहङ्कार एव क्रियाशक्त्या प्राणो, विज्ञानशक्त्या मन इति । तथाच सुषुप्तौ लये प्राणकार्यं निःश्वासादि न स्यात् । ननु प्राणस्याऽहङ्काराद्भिन्नत्वपक्षेऽहङ्कारस्य लयो युक्तः । अभेदपक्षेऽपि प्राणाद्यविहीनस्य लयाङ्गीकारान्नोक्तदोषप्रसङ्ग इतिचेन्न । प्राणस्याहमर्थत्वाभावे कर्तृत्वस्य प्राणोपाधिकत्वेनाहङ्कृतेति बुद्ध्ययोगात् । अहमर्थत्वे तु सुषुप्तावप्यहमुल्लेखापातात् । तस्मादहमर्थस्य सर्वावस्थानुगतत्वेनात्मस्वरूपाभिन्नत्वं,तद्विषयिका त्वहज्ञानामीत्यादिमतीतयइतिसिद्धम् । पूर्वोक्तश्रुतिस्मृत्योस्तु, गर्वोऽभिमानोऽहङ्कार इत्यभिधानाद् गर्वादिवाचकाहङ्कारविषयकत्वात् तथाभूताहङ्कारस्तु प्राकृत एव । तद्वाचकशब्दस्याऽव्ययरूपत्वान्मकारान्तत्वाच्च । आत्मवाचिनस्तु शब्दस्य दकारान्तत्वादस्मच्छब्दसिद्धत्वाच्च महान् विशेष इति विवेक इति दिक् ॥

किञ्चास्तां दूरतरा सुषुप्त्यादावहमर्थस्याननुगतत्वशङ्का, मोक्षदशायामपि तस्यानुगतत्वेनात्मस्वरूपाभिन्नत्वात् । तथाहि । प्राकृते प्रलये विश्वलयावसानेऽवशिष्यमाणस्यैकाद्वितीयादिशब्दाभिधेयस्य परब्रह्मणः श्रीपुरुषोत्तमस्य नित्यमुक्तत्वे न कश्चिद्विवादः । तथाच तस्यापि ज्ञानभिन्नाहमर्थत्वमेव स्वरूपमिति श्रूयते, ब्रह्मैवेदमग्र आसीत्, स चात्मानं वेदाहं ब्रह्मास्मि इति, बहु स्यां प्रजायेय नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतं करवाणीत्यादिभिः निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुत्या तत्साम्ययापन्नाना तथात्वयोगऽपि विवादानवसरत्वात् । अभयं वै जनक प्राप्तोऽसि यदात्मानमेव वेदाहं ब्रह्मास्मीति । अहं मनुरभवं सूर्यश्चेति श्रुत्यन्तरान्मुक्तानुभवश्रवणात् । न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ॥ न चैव न भविष्यामः सर्वे वयमतः परमित्यादिना काल्त्रयाऽत्राध्य–त्वमहमर्थस्य श्रीमुखेन निर्णीतत्वाच्च।किञ्च, वेदमातरि गाय-

ऽप्यामपि प्रत्यगात्मप्रयोगस्थानेऽस्मच्छब्दस्यैव प्रयोगदर्शनादपि, अहमर्थ एवात्मस्वरूपम् । ननु बुद्ध्यवच्छिन्नविषयकोऽयमस्मच्छब्दप्रयोगो, नात्मस्वरूपविषयक इतिचेन्न । धीशब्दस्य पृथक् प्रयोगात् । किञ्चाहमर्थो मोक्षान्वयी । तत्साधनकृत्याश्रयत्वात् । चैतन्यादिवत् । अहमर्थोऽनर्थनिवृत्त्याश्रयः। अनर्थाश्रयत्वात् । सम्मतवत् । अनात्मत्वं नाहमर्थवृत्ति । अनात्ममात्रवृत्तित्वात् । घटत्वादिवत् । अहमर्थ आत्मस्वरूपाभिन्नः । मोक्षान्वयित्वात् । सार्वज्ञादिवद् इत्याद्यनुमानमत्रानुसन्धेयम् ॥

ननु यद्यहमर्थस्य अंशतायोगो नास्ति तर्हि केवलचेतनस्य कर्तृत्वाद्ययोगादित्याशङ्कानिवृत्तये हेतुमाह ॥ स्वच्छरीरमिति हेतुवर्णनादिति ॥ यस्यात्मा शरीरमित्यादिश्रुत्या भगवच्छरीरत्वमतिपादनाच्छरीरगतकर्तृत्वादेरात्मपारतन्त्र्यात् तत्सत्ताकत्वनियमान्नोक्तदोषाऽवकाशः । स्वशरीरिप्रयुक्तकर्तृत्वाद्याश्रयत्वात् सर्वं समञ्जसमिति भावः । एतद्दूषणं पराभिमतहेतुना निराकृतम् । इदानीं स्वाभिमतेन हेतुना तन्निराकरोति ॥ मन्य आत्मपरिशीलने कुत इति ॥ आत्मपरिशीलनं नाम तत्स्वरूपादिविषयकयाथात्म्यविचारः । तथाचाहमर्थस्य आत्मपरिशीलने तत्त्वयाथात्म्यविचारे पूर्वोक्तरीत्या मनने कृते सति कुत उक्तशङ्का इत्यहं मन्ये इति योजना । तदात्मीयस्वतन्त्रस्वरूपस्थितिप्रवृत्तिकत्वतदाधेयत्वादिभिः स्वात्मप्रयुक्तकर्तृत्वादेः सर्वस्य सामञ्जस्यादिति भावः ॥ २१ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीनियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने श्रुत्यन्तसुरद्रुमे अहमर्थयाथात्म्यशाखा षोडशी ॥ १६ ॥

## अथ शाखा सप्तदशी ।



ननु यदुक्तम्— अहमर्थस्य सर्वत्रानुगतत्वं, तदसङ्गतम् । सर्वस्य प्रपञ्चस्य दृष्टिसृष्टित्वेन तस्यापि तत्रान्तःपातित्वाद् अयुक्तमेतिति चेत् तत्राह ।

> दृष्टिसृष्टिरपि नैव संमता
> दर्शनात् तव फलं यतः स्थिरम् ॥
> सार्थको भवति यत्र शब्दकः
> सर्व एव परदेवतात्मनि ॥ २२ ॥

**दृष्टिसृष्टिरपीति** ॥ अपीति निश्चये । दृष्टिसृष्टिः श्रुत्यभियुक्तानां संमता नास्तीत्यन्वयः । असम्भवात् । तथाहि । को वा दृष्टिसृष्टिपदार्थ इति पृष्टे दृष्टौ सृष्टिर्दृष्टिरेव सृष्टिरिति वेति ब्रूते । तथाच देवदत्ते सुप्ते तद्देहादिकं तं प्रति नास्त्येव । जाग्रतो यज्ञदत्तादेस्तु भ्रान्त्या तस्य भानम् । सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञा तु, सोऽय दीप इत्यादिवद् भ्रान्तिरेवेतिचेन्न । त्वद्वचनविरोधात् । जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा * अविद्या तच्चितोर्योगः षडस्माकमनादय इति वचनेन नौद्धं प्रति प्रत्यभिज्ञादिना विश्वस्य स्थायित्वप्रतिपादकविवरणवचनबाधात् । दृगन्यस्य दृश्यस्य सर्वस्यापि दृष्टिसृष्टित्वे तत्तत्कार्यस्य प्रतीतिमात्रशरीरत्वेन नियततत्कारणाजन्यत्वेन श्रुतषु स्वर्गाद्यर्थं ज्योतिष्टोमादिविधेर्ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वोक्तेश्च बाधाच्च । तत्रापि तृप्त्यर्थं भोजनादौ परप्रत्यायनार्थं शब्दोच्चारणादौ च प्रवृत्त्ययोगेन स्वक्रियाविरोधाच्च । ननु उक्तश्रुत्यादीनामपि स्वाप्नश्रुत्यादितुल्यत्वान्नोक्तशङ्कावकाश इति चेन्न । तर्ह्यद्वैतश्रुतीनामपि तन्मीमांसादेश्च तथात्वस्य वक्तुं शक्यतया न तेनाद्वैतसिद्धिः ।

किञ्च, तस्मिन् पक्षे घटादेः स्वदृष्टेः पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थाऽनुपपत्तेः शुक्तीदमंशस्यापि रूप्यवदिदं रूप्यमिति ज्ञानात् प्रागसत्त्वेन संप्रयोगादिहेतुत्रयजन्यत्वरूपस्याध्यासतटस्थलक्षणस्य सत्यस्य मिथ्यावस्तुसंभेदावभासत्वरूपस्वरूपलक्षणस्य चायोगात् । इदं रूप्यमिति ज्ञानसमये शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाया विरोधाच्च । इदं रूप्यं, नेदं रूप्यमित्युभयज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधकभावासंभवाच्च । रूप्यादिबाधस्यापि दृष्टिसृष्टित्वेन रूप्यादिमिथ्यात्वासिद्धेश्च । सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्यातीतत्वेनाविद्यमानतया प्रत्यहं प्रतिप्रलयं मुक्तस्य पुनः संसारित्वापाताच्च । सुप्तं प्रति संस्कारादेरप्यभावेन पुनरुद्बोधायोगाच्च । मोक्षस्यापि दृगन्यत्वेन स्वाप्नमोक्षवद् दृष्टिसृष्टिमात्रत्वापाताच्च । चिन्मात्रस्यैव घटादिसृष्टित्वे तस्यैव सदा प्रतीत्यापत्त्या विशिष्टस्य तत्त्वे वाच्ये तस्यापि विशिष्टस्य दृष्टिसृष्टित्वेऽनवस्थादिप्रसङ्गाच्च । उक्तन्यायेन दोषाज्ञानद्रष्टृदेहेन्द्रियादीनामभावे भ्रान्त्ययोगेन तेषामपि दृष्टिसृष्टित्वेऽनवस्थापाताच्च । घटादिर्दृष्टिसृष्टिरित्यस्यापि ज्ञानस्य तत्साम्येन घटादेरदृष्टिसृष्ट्यापाताच्च । सोऽयं घट इति प्रत्यभिज्ञाविरोधाच्च ।

ननु सोऽयं दीप इति प्रत्यभिज्ञावत् तस्या अपि भ्रान्तियोग एव पूर्वमेवोक्तत्वात्रोक्तदूषणयोग इति चेन्न ।

दृष्टान्तवैकल्यात् । तथाच दीपादौ परिणामादिभेदस्य तद्बाधकस्य सत्त्वेन तद्भ्रमकृते बाधकाभावात् । बाधकाभावस्यापि भ्रान्तिरूपत्वाङ्गीकारे घटादेरप्येकस्मिन् क्षणे भेदस्य तथात्मनोऽपि प्रतिक्षणं भेदस्य च वक्तुं शक्यत्वात् । तथाच सोऽयं देवदत्त इति दृष्टान्तेन तत्त्वमस्यादौ भागलक्षणया ऐक्यपरत्वोक्त्यसंभवाच्च । भेदस्य तद्बाधकाभेदज्ञानस्य च दृष्टिसृष्टित्वसाम्येन बाध्यबाधकत्वासंभवा-

च। तस्मात् प्रत्यभिज्ञानस्य निर्बाधत्वं शास्त्रसिद्धमेव। ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे * ध्रुवाः समुद्रा नद्यश्च ध्रुवं विश्वमिदं जगदित्यादिश्रुतेः। ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमित्यादिस्मृतेः, मत्त्राचावरस्य, असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषादिति सूत्राच्च। महत्त्वापीपानयं पक्ष इत्यादि तात्पर्यं द्योतयन्नाह ॥ दर्शनात्तव फलं यतः स्थिरमिति ॥ यतस्तव दर्शनात् स्थिरं फलं श्रूयते इति संबन्धः। यतो हेतोरचिन्त्यानन्तस्वाभाविकगुणाद्याश्रयस्य अस्पृष्टदोषमाहात्म्यस्वभावस्य श्रीमुकुन्दस्य तव दर्शनात् साक्षात्कारानुभवात् स्थिरफलं मोक्षलक्षणं शास्त्रे श्रुतं तस्माद् दृष्टिसृष्टिः शास्त्रसंमता न भवतीति योजनीयम्।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् * तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति, ब्रह्मविदाप्नोति परं, जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोक इत्यादिश्रुतिभ्यः। किञ्च, शास्त्रसार्थक्यानुपपत्तिमपि स्वकार्ये प्रमाणयन्नाह ॥ सार्थको भवति यत्र शब्दकः सर्व एव परदेवतात्मनीति ॥ यत्र यस्मिन् दृष्टिसृष्टिवादनिराकरणे सर्व एव शब्द उभयकाण्डरूपो, ज्योतिष्टोमेन यजेत स्वर्गकामः, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिरूपः सार्थको भवतीति, साफल्यमाप्नोतीति यावत्। इतरथोक्तरीत्या बाध्येतेत्यर्थः। को वा तस्य प्रतिपाद्योऽर्थ इत्याशङ्कां निरासयन्नाह ॥ परदेवतात्मनीति ॥ परा देवता एवात्मा परदेवतात्मेति विग्रहः। तत्र पूर्वकाण्डरूपविधिवाक्यस्य परदेवतायां तत्तदिन्द्रादिदेवतान्तरात्मतया वर्तमाने त्वयि समन्वयेन सार्थक्यम्। उत्तरकाण्डरूपविधिवाक्यस्य च त्वत्प्राप्तिहेतुभूतनिदिध्या-

त्तेरप्यत्र प्रामाण्यम् । अपिच परमेश्वरपाल्यत्वादपि विश्वस्य न दृष्टिसृष्टित्वमिति । तथाहि—

परमेश्वरस्य प्रपञ्चमिथ्यात्वविषयकापरोक्ष्यं त्वयाभ्युपेयते, न वेति विवेचनीयम् । नाद्यः । मिथ्यात्वेन ज्ञाते तव पालनार्थप्रवृत्त्यसम्भवात् । द्वितीये परमेश्वरेऽपि भ्रान्तियोगेन सार्वज्ञनाशमसङ्गात् । यः सर्वज्ञः सर्वविदित्यादिश्रुतिव्याकोपाश्च । नन्वैन्द्रजालिकवत्तस्य मिथ्यावस्तुपालनं भवत्विति चेन्न । दृष्टान्तवैषम्यात् । तथाहि । ऐन्द्रजालिको मन्त्रौपधादिबलादतीतानागतान् देशान्तरस्थितांश्च सत एव पदार्थान् प्रदर्शयत्येव, नह्यपरोक्षतया जानाति पालयति वा ।

नन्वैन्द्रजालिकस्य स्वमायाऽमोहितस्य तदापरोक्ष्याभावे, पश्यन्त्विदमाम्रफलमित्यादिव्यवहारानुपपत्तेस्तस्य तद्विषयकापरोक्ष्यं स्वीकार्यम् । तद्दृष्टान्तेन परमेश्वरस्यापि तत्पालनप्रवृत्तिघटनादिति चेन्न । असम्भवात् । यथा वैद्यो गुरूपदेशादिना ज्ञातौषधप्रभावो रोगनाशाद्यपरोक्षाभावेऽपीदमौषधमाभिर्मं रोगं नाशयति तत्प्रभावं पश्यन्त्विति वदति, तथैन्द्रजालिकोऽपि अस्मन्मन्त्रादेरेते भ्राम्यन्तीति ज्ञातमन्त्रादिप्रभावो, यूयं पश्यन्त्विति वदति । नचैन्द्रजालिकोऽपि ऐन्द्रजालिकान्तरात् स्वसृष्टान् रक्षतीति वाच्यम् । भ्रमजनकस्वमन्त्रौपधादिगतसामर्थ्यस्यैव रक्षणात् । ईश्वरस्य तु सर्वत्र सर्वदा सर्ववस्तुविषयकनित्यापरोक्षाऽनुभवाश्रयत्वात् कथमपि मिथ्यावस्तुपालने प्रवृत्त्यसम्भवात् । एतेनैन्द्रजालस्यासत एवाऽर्थक्रियाकारित्वदर्शनादुक्तार्थसिद्धिरित्यपि निरस्तम् । तत्रापि मणिमन्त्रौषधानां सद्रूपाणामेव कार्यजनकत्वात् । तत्सिद्धं जगतः परमेश्वरसृज्यत्वादर्थक्रियाकारित्वाच्च सत्यत्वमिति दिक् ॥

ननु पूर्वमयुक्ताद्वितीयश्रुतेर्बाधस्तथाप्यविशेष इतिचेन्न । तस्या

विश्वकारणैकत्वविधानपरत्वेनैव नैराकाङ्क्ष्यात् । नाप्युक्तार्थानुपपत्तेरप्रामाण्यं वक्तुं शक्यम् । कारणैक्यप्रतिपादनेनैवोपपत्तेरुक्तत्वादित्यलं कुतर्कनिरासैः ॥ ९२ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीभगवन्नियमानन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने
श्रुत्यन्तसुरद्रुमे
दृष्टिसृष्टिवादनिरासशाखा सप्तदशी ॥ १७ ॥



सन्निधानेन विश्वात्मनि त्वय्येव साक्षात्समन्वयेन सार्थक्यमिति भावः ॥

ननु प्रपञ्चजातं दृष्टिसृष्टिमात्रमेव । मानसिद्धत्वात् । तथाहि । प्रपञ्चो मिथ्या । दृष्टिसृष्टिमात्रत्वात् । स्वाप्नसृष्टिवदित्यनुमानात् । एकमेवाद्वितीयमिति अद्वैतश्रुतिप्रामाण्यान्यथानुपपत्तेश्चेति चेन्न । उक्तानुमानस्य हेतुदृष्टान्तविकलत्वात् । तथाहि । प्रपञ्चजातं सत्यम् । अर्थक्रियाकारित्वात् । प्रमाणजन्यप्रमावदिति सत्प्रतिपक्षत्वेन हेत्वाभासत्वादुक्तहेतोरप्रामाण्यम् ।

ननु तत्र प्रयुक्तस्य हेतोरप्याभासत्वमेव । अर्थक्रियाकारित्वस्य सत्त्वयोगानियमाद् अप्रयोजकत्वसिद्धिः । असतोऽपि रज्जुकल्पितसर्पस्य भयकम्पाऽऽदिजनकत्वेन तत्र व्यभिचारस्य प्रसिद्धत्वादिति चेन्न ।

असतः सर्वथाऽपि कार्यजनकत्वाभावात् । प्रातीतिकसर्पस्य न तावद्भयादिकार्यजनकत्वमपि तु सद्रूपस्य तज्ज्ञानस्यैवेति पूर्वमेव विस्तृतत्वाद् न भूय उपन्यासापेक्षेति । तत् सिद्धमुक्तहेतोराभासत्वयोगः । दृष्टान्तविकलत्वादपि तस्य प्रमाणत्वाभावः । स्वाप्नसृष्टेरपि परमेश्वरीयत्वेन सत्त्वमेव । ननु, न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते, न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते, न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्तेति श्रुतेः स्वाप्नसृष्टेर्जीवकर्तृत्वावगमात् । तथाच स्वाप्नपदार्थस्य बहुलकालस्थायित्वानियमाद्, आकाशादीनामपि जीवाज्ञानविजृम्भितत्वेऽपि दीर्घस्वप्नवद् बहुकालस्थायित्वमप्यविरुद्धमितिचेन्न । स्वप्नश्रुतेरपि परमेश्वरकर्तृकत्वविधानपरत्वात् । तथाहि । स्वाप्नरथाद्यर्थजातं स्वेतरपुरुषमात्राननुभाव्यतया तत्तत्कर्मा-

तुमारेण तत्तद्देकैकद्रष्टृनुभवार्थं यत्किञ्चित्कालस्थायि वस्तु परमेश्वरेणैव सृष्टमित्यवगम्यते। तथाभूताश्चर्यमयी सृष्टिः सत्यसङ्कल्पं श्रीपुरुषोत्तमम् ऋते तदितरेषु कर्माधीनेषु संसरत्सु क्षेत्रज्ञेषु कथमप्यनुपपन्ना। तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमुच्यते * तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति तत्रैवोपक्रमोपसंहाराभ्यां परमात्मासाधारणलिङ्गानां निरूपणात्। स हि कर्तेति च तथा श्रुतैकार्थ्याच्च। न हि, य एतेषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाण इति श्रुत्युक्तं सर्वेषु सुप्तेषु ज गरणं यथासंकल्पं सृष्टिकरणं सर्वानतिक्रमणीयत्वं च तदसाधारणलिङ्गं संसारिणि स्वमद्रष्टरि क्षेत्रज्ञे कथमप्युपपद्यते। सर्वथाऽसम्भवात्। तस्माज्जीवाऽऽत्मनामल्पाल्पतराऽदृष्टसंस्कारानुगुणकर्मफलानुभवार्थं तावन्मात्रकालावसानाँस्तदेकपुरुषभावाभवार्हान् अर्थान् श्रीभगवन्निर्मितानेव स्वप्नावस्थायां गतो जीवविशेषोऽनुभवति, न तु स्वयं निर्मिमीते। अशक्तत्वात्। किञ्च, स्वाप्नस्य शुभाशुभसूचकत्वमपि। यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति * समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने। अथ यदा स्वप्नेषु पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादिकया श्रुत्याऽवगमात् स्वाप्नसृष्टेरीश्वरसृज्यत्वमेव। अन्यथा जीवसङ्कल्पायत्ता चेत् तर्हि शुभमेव सङ्कल्प्य शुभसूचकमेव पदार्थं पश्यन् सुखमेवानुभूयेत, न तु तदस्ति। तस्माच्छुभाशुभभावसूचकश्रुत्यन्यथानुपपत्तेरपि स्वाप्नपदार्थस्य परमेश्वरसृज्यत्वे मानत्व वाच्यम्। अतः सत्कर्तृकत्वसत्फलत्वाभ्यां विश्वस्य सत्त्वमिति सिद्धम्।

किञ्च, सन्मूलाः सोम्येमाः सर्वाः प्रजा इति श्रुतौ सर्वशब्दप्रयोगोऽपि स्वाप्नसृष्टे परमेश्वरकर्तृकत्वावगमः सुव्यक्तः। इतरथा सर्वप्रयोगानुपपत्तेः। संकोचे मानाभावाच्च। एतच्छ्रुत्यन्यथानुपप-

## अथ शाखा अष्टादशी ।

अथ कैश्चिदभ्युपगतं ब्रह्मणोऽज्ञानाश्रयत्वं तद्विषयत्वं च, तन्निराकुर्वन् स्तौति ॥

नाश्रयो न विषयो भवान् यतो-
ऽज्ञानतोऽपि करुणानिधे तव ॥
सत्स्वरूपमत आमनन्ति हि
विग्रहं परममङ्गलं परम् ॥ २३ ॥

नाश्रय इति ॥ हे करुणानिधे भवान् ज्ञानत आश्रयो न भवतीति योजना । तत्र करुणा नाम परदुःखासहिष्णुत्वं, तस्या अव्यभिचरिताश्रयः। एतेन जगतो दुःखनिवृत्तये प्रार्थना सूचिता । अनादिकर्मजन्यासंख्येयदुःखाश्रयो बद्धजीवसंघातः । भवान् स्वाभाविककरुणाद्याश्रयः । अतस्तद्दुःखसहनं भवतो ह्ययुक्तमिति सम्बोधनप्रयोगतात्पर्यम् । यद्वा, अन्ये तत्र मायामोहितचित्ताः स्वाज्ञानं त्वय्यारोपयन्तो दुःखिनस्तेषामपि स्वविषयकज्ञानदानेनाऽज्ञानं निरस्य, तेऽपि त्वयैवानुग्राह्या इति करुणाशब्दस्य भावार्थः॥भवानिति॥ सार्वज्ञ्याद्यनन्तमद्रूपस्वाभाविककल्याणगुणाश्रयः । अज्ञानत आश्रयो न भवतीति षष्ठ्यर्थे तसिल्प्रत्ययः । अज्ञानस्येत्यर्थः । परमतकल्पिताज्ञानाश्रयो दुर्निरूप्य इति भावः । तथाहि । किं वा भवतोऽज्ञानाश्रयत्वेनाभिमतं शुद्धं चिन्मात्रं वा, सर्वज्ञरूपं वा, जीवो वेति । अत्रैके–चिन्मात्रमेवाज्ञानाश्रयः । तदन्यस्याज्ञानकल्पितत्वेन तदाश्रयत्वासम्भवात् । आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला * पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर इति विवरणोक्तेः । दर्पणस्य

मुखभावमभ्यन्येऽपि प्रतिमुखे मालिन्यवत् प्रतिबिम्बे जीव एव संसारी, न तु बिम्बे ब्रह्मणि । उपाधेः प्रतिबिम्बपक्षपातित्वादित्याहुः । तन्न सम्यक् । ज्ञानाज्ञानयोस्तम प्रकाशयोरिवाधाराधेयभावस्यात्यन्तविरुद्धत्वात् । ज्ञानानिवर्त्यस्याज्ञानत्वायोगाच्च । ज्ञानाऽज्ञाने हि ज्ञातुरर्थप्रकाशाप्रकाशौ । तथात्वे स्वरूपनाशप्रसङ्गात् । चैतन्यस्याज्ञानाविरोधित्वाङ्गीकारे घटादिसाम्यापत्त्या ज्ञानत्वायोगात् । तथात्वेऽनिवृत्तिप्रसङ्गाच्च । चिन्मात्रं न ज्ञानस्वरूपम् । अज्ञानानिवर्तकत्वाद् अज्ञानाविरोधित्वाद्वा । घटादिवत् । नन्वन्तःकरणपरिणामे ज्ञानत्वोपचार इति विवरणोक्तेर्वृत्तिज्ञानात्तन्निवृत्तिरिति चेन्न । औपचारिकज्ञानस्य वास्तवज्ञानत्वायोगेन मुख्याऽज्ञाननिवर्तकत्वानर्हत्वात् । इतरथा आदित्यो यूप इति श्रुत्या औपचारिकादपि यूपलक्षणसूर्यात्तमोनिवृत्तिर्भवद्भिर्मनीषिभिरभ्युपगन्तव्या । औपचारिकत्वसाम्यात् । किञ्च, चिन्मात्राश्रितमज्ञानं स्वाभाविकमौपाधिकं वा ? । नाद्यः । आनन्दादिवदनिवृत्तिप्रसङ्गात् । नान्त्यः । विकल्पासहत्वात् । तथाहि । को वात्रोपाधिः ? स्वयमेव, तदन्यो वा । आद्ये आत्माश्रयदोषापत्तेः । द्वितीयेऽन्योन्याश्रयचक्रकानवस्थाप्रसङ्गादित्यलं विस्तरेण ॥

अन्ये तु सर्वज्ञ एवाज्ञानाश्रय इत्याहुः । तत्तुच्छम् । बालभाषितत्वात् । सूर्योऽन्धकाराश्रय इतिवत् तस्योपहासविषयमात्रत्वात्, तुरीयं सर्वदृगित्यादिना अविद्यारहितस्यैव सार्वज्ञ्यश्रवणाच्च । ननु माऽस्तु सर्वज्ञे अविद्यायोगः । मायायोगस्य तु तल्लीलोपकरणत्वेनावश्यमङ्गीकर्तव्यत्वादिति चेत् तत्र पृच्छामः । मायाशब्दाभिधेयोऽज्ञानविशेषो वा, देवासुरसंग्राम इव बाह्यसाधनमनपेक्ष्यैव वह्निजलादिसद्वस्तुसर्जनशक्तिर्वा, ऐन्द्रजालिकस्येवाविद्यमानविषयप्रदर्शनशक्तिर्वा । नाद्य । पूर्वोक्तरीत्या सामान्याज्ञाना-

सिद्ध्या विशेषस्य सुतरामसिद्धेः । अज्ञानस्य लीलोपकरणत्वाऽदर्शनाच्च । सार्वज्ञहानेः सार्वज्ञश्रुतिव्याकोपाच्च । अज्ञाने मायाशब्दप्रयोगादर्शनाच्च । ऐन्द्रजालिकस्यापि अविद्यमानविषयदर्शयितृत्वं नाज्ञानहेतुकम्, अपि तु मणिमन्त्रादिसद्वस्तुकारणजन्यमेवेति भावः । नाऽपि द्वितीयः । इष्टत्वात् । श्रुतिस्मृतिसिद्धत्वाच्च । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीत्यादिश्रुतेः । शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ॥ यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति स्मृतेः । सर्वोपेता चेति न्यायाच्च । न तृतीयः । व्यामोहनीयजीवाऽभावेन व्यामोहनाऽयोगात् । कल्पितदर्शनस्य च भ्रान्तिं विनाऽसम्भवात् । कल्पितत्वेन तद्दर्शने च तद्व्यामोहनायोगात् । तस्याऽपि द्वितीयचन्द्रदर्शनस्येवाविद्याविलासाऽसम्भवाच्च । किञ्च, तच्छक्तेः सत्यत्वे द्वैतहानिः, जीवकल्पितत्वे च तद्व्यामोहकत्वयोगः । ब्रह्मकल्पितत्वे च तस्याज्ञानावश्यम्भावः । तस्मात् सर्वथानुपपत्तिरेव । ननु अविद्यादिदौर्घट्यमस्माकं भूषणमेवेति चेन्न । तथात्वे तत्र प्रमाद्युक्तयोगादुक्तरीत्या निराश्रयत्वनिर्विषयत्वयोः सिद्धयोः सतोस्तस्या अविद्याया आत्मस्वरूपत्वापातात् । प्रतीत्यनुसारेण तस्या आश्रयत्वाद्यङ्गीकारे तु घटमहं जानामीतिप्रतीत्याऽहमर्थाश्रयत्वजडविषयकत्वादिप्रसङ्गात् । अनादित्वादिनाऽनुपपत्तिपरिहारायोगाच्च । किञ्चाज्ञानासम्भवादिदौर्घट्यरूपसिद्धान्तभङ्गोऽपि यदि भवद्भिर्भूषणत्वेनाभिमतस्तर्हि संसारानिवृत्तेर्नित्यदुःखानुभवस्य च भूषणशिरोमणित्वेनाङ्गीकारेऽपि का क्षतिरित्यलं मासङ्गिकेन । नाऽपि तृतीयोऽज्ञानाश्रयः । जीवस्याज्ञानकल्पितत्वेनान्योन्याश्रयप्रसङ्गात् । अज्ञानकार्यत्वेन तदाश्रयत्वायोगाच्चेति सङ्क्षेपः ॥ अज्ञानविषयोऽपि दुर्निरूप्य इति विवक्षया गौति ॥ न विषय

इति॥ भवानज्ञानस्य विषयोऽपि न भवतीत्यनुषङ्गः। तथाच कस्तावत् तस्य विषयः? चिन्मात्रं वा, तदन्यो वा। नाद्यः। तत्रावरणकृत्याऽसम्भवात्। ननु तस्याकल्पितत्वेन स्वप्रकाशत्वेन चावरणकृत्यसम्भवादितिचेन्न। विकल्पासहत्वात्। तथाहि। किं तावत् तत्रावरणकृत्यं— स्वाभाविकप्रकाशस्य लोपः, स्वभावसिद्धप्रकाशानुत्पत्तिर्वेति। नाद्यः। स्वप्रकाशस्य नित्यसिद्धत्वेन प्रकाशान्तरानपेक्षितत्वेन च लोपायोगात्। अन्यथा तस्य स्वरूपत्वेन तल्लोपे स्वरूपनाशप्रसङ्गात्। स्वरूपभिन्नधर्मानङ्गीकाराच्च। एतेनोक्तयोर्हेत्वोर्विरुद्धत्वमुक्तं भवति। साध्याभावव्याप्तत्वात्। तथाच प्रयोगः। चिन्मात्रं वस्तु, आवरणानर्हम्। अकल्पितत्वात्। स्वप्रकाशत्वाच्च। व्यतिरेके घटादिवदिति। न द्वितीयः। किं तावत् प्रकाशानुत्पत्तिः। स्वतः प्रकाशस्य विषयासम्बन्धो वा, नास्ति न प्रकाशत इत्यादिव्यवहारो वा। नाद्यः। ज्ञानस्य विषयसम्बन्धस्वभावत्वात्। स्वतोज्ञानरूपत्वेन सम्बन्धानपेक्षणाच्च। न द्वितीयः। नास्तीति भ्रान्तेरावरणसाध्यत्वेनावरणत्वायोगात्। सुषुप्तौ व्यवहाराभावेनानावरणप्रसङ्गाच्च। तथात्वे सर्वमोक्षप्रसङ्गाच्चेत्यलं विस्तरेण। किञ्च, चिन्मात्रस्याज्ञानविषयत्वाऽभ्युपगमे तस्य ज्ञानविषयत्वमप्यकामेनाऽपि त्वयाऽवश्यमभ्युपेयम्। अज्ञानतन्निवर्तकज्ञानयोरेकविषयत्वानियमात्। अन्यथाऽनिवृत्तिप्रसङ्गात्। ज्ञानविषयत्वे च मिथ्यात्वयोगोऽप्यवश्यम्भावि। तथाच प्रयोगः— "चिन्मात्रं वस्तु मिथ्या। अज्ञानविषयत्वे सति ज्ञानविषयत्वात्" घटवदित्यादि। नाऽपि तदन्योऽज्ञानविषयः। तस्याज्ञानकल्पितत्वात्। जडत्वेन स्वयमेव प्रकाशहीने आवरणकृत्याभावाच्च। ननु गृहोदरवर्त्तितमसो यथा गृह एवाश्रयो विषयश्चेति प्रत्यक्षप्रमाणसिद्धं तथा प्रकृतेऽपि शुद्धं ब्रह्मवाज्ञानाश्र-

यस्तद्विषयश्चेति संगच्छत इतिचेन्न । दृष्टान्तवैषम्यात् । तथाहि । गृहतमसोरुभयोरज्ञानरूपत्वेनेतरेतराविरोधात् । प्रकृते तु ज्ञानाज्ञानयोर्महद्वैलक्षण्येनात्यन्तविरोधित्वात् । न हि सूर्यस्यान्धकाराश्रयत्वं कोटिचतुर्मुखैरपि सम्भावयितुं शक्यते इत्यलं कुतर्कनिरासैः । विस्तरस्त्वन्यत्र द्रष्टव्यः । किञ्च, यत इति ॥ यस्माद् भवानऽज्ञानस्याश्रयो विषयश्च न, अतोऽस्मादेव हेतोः । हीति निश्चये । तत सत्स्वरूपमामनन्तीति । तत्र अचिन्त्यानन्तज्ञानशक्तिबलाद्याश्रयस्य भगवतः श्रीपुरुषोत्तमस्य सत्स्वरूपं प्रतिपादयन्ति श्रुतय इति संबन्धः । सत्यं ज्ञानमनन्तं ब्रह्म, यः सर्वज्ञः सर्ववित्, य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः । सत्यकामः सत्यसंकल्प इत्याद्याः । ननु ब्रह्मण्यज्ञानानङ्गीकारे कथं तस्य विग्रहादियोग इत्याशङ्क्य समादधदाह ॥ विग्रहं परममङ्गलमिति ॥ श्रुतय आमनन्तीति योजना । यथा स्वरूपं सत्यत्वाद्याश्रयत्वेनामनन्ति तथा विग्रहमपि परममङ्गलरूपत्वेनामनन्तीति भावः । न हि सर्वामङ्गलरूपाज्ञानस्य कार्यं मङ्गलं भवितुमर्हति । किन्तु सर्वोत्कृष्टमेव वस्तु मङ्गलपदार्थ इत्याशयेन विशिनष्टि ॥ परममिति ॥ स्वरूपवत् प्रकाशरूपं क्षराक्षरवस्तुविलक्षणमिति भावः । हिरण्यकेशः हिरण्यश्मश्रुः, आप्रणखात् सुवर्णः, यदात्मको भगवाँस्तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः, अस्नाविरं शुद्धमपापविद्धम्, अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितं, दुर्दर्शमतिगम्भीरमजं श्यामं विशारदम् । पुरुषं कृष्णपिङ्गलं, जरामरणनिर्मुक्ताः सर्वधर्माः स्वभावत इत्याद्याः श्रुतयोऽत्रानुसंधेयाः । जरामरणादेरात्मन्यप्रसक्तत्वात् । शरीर एव तन्निर्मुक्तवचनमिति भावः । तथा वैष्णवे, समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥ तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्मह-

त । वाराहे च, सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः ॥ हानोपादानरहिता नैव प्रकृतिजाः क्वचित् । परमानन्दसंदोहा ज्ञानमात्राश्च सर्वशः । सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिता इत्यादिस्मृतयश्च । ईश्वरविग्रहो नित्यः । ईश्वरकरणत्वात् । सार्वज्ञ्यादिवदित्यनुमानं च । एतेनाविर्भावतिरोभावादिमत्त्वादनित्यत्वमिति मन्दानां कल्पना निरस्ता । श्रुतिमानहीनत्वात् । ननु आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिश्रुतिभिर्ब्रह्मज्ञानार्थं विचारो विधीयत इत्यावयोर्निर्विवादः । एवं यद्यज्ञानमत्र नास्ति, तर्हि किमर्था जिज्ञासेति । तथाचोक्तश्रुतीनां बाधात् तत्साफल्यार्थं अवश्यमज्ञानं त्वयाप्येष्टव्यमितिचेदुच्यते । श्रुतयः अज्ञाननिवृत्तये ब्रह्मजिज्ञासां तदुपायत्वेन बोधयन्तीति सत्यम् । तथापि न तासामज्ञानस्य ब्रह्माश्रितत्वे तद्विषयकत्वे वा तात्पर्यं, किन्तु जीवगतानादिकर्माख्याज्ञानं ब्रह्मसाक्षात्कारप्रतिबन्धकं संसारापादकं चाज्ञानशब्दाभिधेयं विवक्षितम् । अविद्यया मृत्युं तीर्त्वा, अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा । संसारतापानखिलानवाप्नोत्यतिसंततान् । तथा तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तत इति श्रुतिस्मृतिभ्यां तन्निवृत्तये जिज्ञासायाः साफल्यान्नोक्तदोषावकाश इति ॥ २२ ॥

इति श्रीहयग्रीवाऽनुग्रहलब्धविवेकेन श्रीभगवत्प्रियमाऽऽनन्दाऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने

श्रुत्यन्तसुरद्रुमे

ब्रह्मणोऽज्ञानाश्रयत्वतद्विषयत्वनिरसनशाखाऽष्टादशी ॥ १८ ॥

## अथ शाखा एकोनविंशी ।

इत्थं पूर्वत्र श्रीभगवतः पुरुषोत्तमस्याऽज्ञानादिदोषास्पृष्टमाहात्म्यवत्त्वं निरूपितम् । इदानीं तत्साक्षात्कान्तरङ्गोपायं ध्यानं वादिकल्पितानुपपत्तिनिरासपूर्वकं श्रुतिमुखेन प्रतिपादयन्नौति ।

ध्यानमङ्गमिति यन्मतान्तरं
' तन्न युक्तमत एव माधव ॥
यद्यपि श्रवणतोऽपवर्गदो-
ऽङ्गं तथापि सुवचं शुभ यतः ॥ २४ ॥

ध्यानमङ्गमिति ॥ आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतौ निदिध्यासनं विधीयते । तदेवात्र विषयः । ध्यानं श्रवणस्याङ्ग, ध्यानस्य श्रवणमङ्गं वेति संशयः । तत्र पूर्वपक्षमाह ॥ ध्यानमङ्गमिति यन्मतान्तरमिति॥ ध्यानं श्रवणस्याङ्गमिति यन्मतान्तरं पूर्वपक्षिणोऽभिमतं भवति । एतदुक्तं भवति।आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यत्र श्रवणमेवाङ्गीत्यभ्युपगन्तव्यम् । यत् साक्षात्फलसाधनत्वेन श्रूयते तदेवाङ्गि शेषि प्रधानमित्यादिसंज्ञां लभते । तत्सन्निधौ फलं विना यत्कर्तव्यत्वेन श्रुतं तत्तस्याङ्गं शेषः सहकारीति चोच्यते । यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधिना दर्शपूर्णमासाऽऽग्नेयादयः षड्यागाः साक्षात्फलसाधनत्वेन विहितास्त एवाङ्गिनस्तत्प्रकरणे, व्रीहीन् प्रोक्षति, समिधो यजतीत्यादिना प्रोक्षणादयः समिधादयश्च साक्षात्स्वर्गफलमन्तरेण कर्तव्यतया विहितास्तेऽङ्गानि । फलवत्सन्निधावफलं तदङ्गमिति न्यायात् । अङ्गानि द्विविधानि–स्वरूपोपकारीणि फलोपकारीणि चेति।तत्रप्रोक्षणादीनिस्वरूपोपकारीणि,त.न्येव सन्निपत्योपकारीण्युच्यन्ते ।प्रयाजादीनि तु फलोपकारी-

णि। तान्येवारादुपकारीणीति सर्ववादिसंमता प्रक्रिया। एवं प्रकृतेऽपि वेदान्तश्रवणं प्रमाणविचारात्मकतया साक्षाद्ब्रह्मप्रत्यक्षानुभूतिफलसाधनत्वेन विहितत्वादङ्गि। विवेकादिगुरूपसदनान्तानि तत्संनिधौ विहितानि स्वरूपोपकारकाङ्गानि। तेषां ज्ञानातिरिक्तफलान्तराश्रवणात्। मननादीनि फलोपकार्यङ्गानि। फलं विना तत्संनिधौ विहितत्वात्। तथाच मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सहश्रवणं नामाङ्गि विधेयम्। तथाचात्र प्रयोगः। श्रोतव्यो मन्तव्य इत्यत्र श्रवणमङ्गि। साक्षाद्ब्रह्मप्रत्यक्षप्रमारूपं फलं प्रति साधनत्वेन श्रुतत्वात्। यदेवं तदेवम्। दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इत्यादिश्रुतदर्शादिवदिति इति पूर्वः पक्षः। तन्निराकरोति ॥ तन्न युक्तमिति ॥ तत्र हेतुमाह ॥ अत एवेति ॥ तदुक्तहेतोः साध्यासहचारित्वादेवेत्यर्थः। वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारानुभूतिफलकत्वनियमस्य श्रुत्यैव निरादरणात्। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, शृण्वन्तोऽपि बहवो यं न विद्युरित्यादिकया उक्तहेतोरनैकान्तिकत्वयोगादाभासत्वमिति भावः। परोक्षत्वेन साध्याभावेन सह व्यापनाद्विरुद्ध श्चेति। ननु तव मते परोक्षप्रमाजनकत्वमेव श्रवणस्य। अस्माकं तु विषयसंनिकृष्टेऽपरोक्षप्रमाजनकत्वं, तदसंनिकृष्टे च परोक्षप्रमाजनकत्वमित्यङ्गीक्रियते। यथा महाराष्ट्रे गोदावरी, द्राविडे कावेरीत्यादिवाक्यस्यासन्निकृष्टविषयकत्वात् परोक्षपरत्वम्। अयं घटोऽयं देवदत्त इत्यादेश्च सन्निकृष्टविषयकत्वादपरोक्षजनकत्वमितिविवेकइतिचेन्न। सन्निकृष्टविषयेऽपि वाक्यस्य आलोकादिसहकृतचक्षुरादिद्वारैवाऽपरोक्षकरणत्वमिति ब्रूमः। एवं, चक्षुरादेरेव प्रत्यक्षप्रमाकरणत्वं, न तु वाक्यस्य। तथाच श्रवणाद्यनन्तरमालोकस्थानीयश्रीकृष्णाऽनुग्रहसहकृतचक्षुरादिस्थानीयनिदिध्यासनेनैव ब्रह्मसाक्षात्कार इ-

स्यादरेणाह श्रुतिः— यमेवैष वृणुते तेन लभ्यः, ततस्तु तं पश्यति निष्कलं ध्यायमानः, ते ध्यानयोगानुगता अपश्यन्नित्यादिका । तस्मात् साक्षात्फलसाधनत्वेन श्रूयमाणत्वमिति शेषिलक्षणस्य निदिध्यासने एव समन्वयात् तस्यैवाङ्गित्वम् । श्रवणादेस्तु परोक्षाऽनुभवजनकत्वाद् आरादुपकार्यङ्गत्वयोग इति सिद्धम् । श्रवणं न निदिध्यासनस्याङ्गि, साक्षात्फलसाधनत्वेनाश्रूयमाणत्वात् । व्रीहीन् प्रोक्षति इत्यादौ श्रुतप्रोक्षणादिवत् । वेदान्तवाक्यं न साक्षात्कारप्रमाकरणम् । परोक्षज्ञानहेतुत्वात् । महाराष्ट्रे गोदावरीति वाक्यवत् । श्रवणं न ब्रह्मसाक्षात्कारहेतुः । शृण्वन्तोऽपि बहव इत्यादिश्रुतिनिरादरविषयत्वात् । यन्नैवं तन्नैवम् । ततस्तु तं पश्यति निष्कलं ध्यायमान इत्यादिकण्ठरवेण साक्षात्फलसाधनत्वेन श्रूयमाणनिदिध्यासनवदित्याद्यनुमानान्यत्रानुसन्धेयानि । उक्तप्रक्रिया चास्माकमपि संमता तथाच, निदिध्यासनमङ्गि । साक्षाद् ब्रह्मप्रत्यक्षफलकरणत्वेन श्रूयमाणत्वात् । श्रवणमननयोस्तदङ्गत्वं ब्रह्मसाक्षात्कारभूतफलमन्तरेण कर्तव्यतया विहितत्वात् । ते च स्वरूपोपकारिणी इति राद्धान्तः । ननु, द्रष्टव्यः श्रोतव्य इति दर्शनाऽव्यवधानपाठरूपसन्निधानाच्छ्रवणस्याङ्गित्वमितिचेन्न । उक्तहेतोरप्रयोजकत्वात् । तथाहि । न तावत्सन्निधिमात्रमङ्गित्वे प्रयोजकम्, अपि तु तद्गतफलजननानुकूलसामर्थ्यम् । तस्य पूर्वोक्तप्रकारेण श्रवणे व्यभिचारान्नोक्तार्थसिद्धिः । अन्यथा प्रोक्षणादीनामपि सन्निधिपठितानामपि अङ्गित्वापत्तेः । सन्निधिपाठसाम्यात् । क्लीबसान्निध्यादपि स्त्रियः प्रजोत्पत्तिप्रसङ्गाच्च हेतोरप्रयोजकत्वं सिद्धमिति भावः । अपिच श्रवणस्य साक्षात्कारप्रमाजनकत्वाभ्युपगमेऽपि निदिध्यासनं तदङ्गमिति वचनं तु बालभाषितमेव । कथमप्यसम्भवात् । न ह्ययं घट इति वाक्याद् घटविषयकप्रत्यक्षे जा-

ते सति पुनस्तत्र ध्यानापेक्षा कस्यचिद पुंसो जायते, दृष्टश्रुताऽगोचरत्वादनुपपत्तेश्चेति तस्मादुक्तसिद्धान्त एव श्रेयस्त्वाच्छ्रेयोऽर्थिभिर्ध्येय इति सङ्क्षेपः ॥

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ * संशयं च पराणुद्य लभते ब्रह्मदर्शनमिति स्मृत्या श्रवणमननयोरज्ञानसंशयादिनिवृत्तावेवोपक्षीणत्वान्नैराकाङ्क्ष्यमित्यवगम्यते । तस्मात् तयोः साध्ये साक्षात्कारप्रयोजके निदिध्यासनेऽङ्गता सुप्रसिद्धेति तात्पर्येणाह ॥ यद्यपि श्रवणतोऽपवर्गद इति ॥ यद्यपि श्रवणतः श्रवणादपि भगवाञ्छ्रीपुरुषोत्तमस्त्व निदिध्यासनसाक्षात्कारद्वारा परम्परयाऽपवर्गदो मोक्षदो भवसि तथापि तस्य परोक्षज्ञानहेतुत्वेन बहिरङ्गत्वान्निदिध्यासनाङ्गत्वमेव मत इति । यद्वा, वाक्यं तत्सुवचनं शुभं यथार्थं भवतीति वाक्यार्थः । तथाच निदिध्यासनं साक्षाद्ब्रह्मदर्शनहेतुत्वादन्तरङ्गसाधन, श्रवणमनने च निदिध्यासनाऽङ्गे इति भावः । मनसैवानुद्रष्टव्य इत्यवधारणसहकृतया श्रुत्या मनस एव करणत्वविधानादुभयपक्षस्याप्यसिद्धिरितिचेद्, मनसः करणत्वम्, अस्माकमप्यभीष्टत्वात् । नचोक्तसिद्धान्तभङ्ग इति वाच्यम् । निदिध्यासनस्य साक्षाद्दर्शनोपायत्वेन मनसः करणत्वेऽपि ध्यानस्य तद्व्यापारत्वादविरोधः । ततस्तु तं पश्यति निष्कलं ध्यायमान इति श्रुत्यन्तरे स्पष्टं कण्ठरवेण श्रूयमाणत्वात् । ननु, यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति, यन्मनसा न मनुते इति च श्रुत्या मनसोऽगोचरत्वं ब्रह्मणः श्रूयतेऽतो मनसः करणत्वाभाव इति वाच्यम् । तस्या अशुद्धमनसो निषेधविषयत्वात् । कार्त्स्न्यागोचरत्वेनेयत्तावच्छिन्ननिषेधपरत्वाद्वा नोक्तदोषावकाशः । इतरथा तयैव श्रुत्या, यतो वाच इति शब्दनिषेधस्यापि साम्याच्छ्रवणस्यापि करणत्वानुपपत्तिस्तुल्यैव । यत्रोभयोः समो दोषः

परिहारोऽपि वा समः * नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे इति वचनात् । ननु मास्तु ब्रह्मण उभयोरपि गोचरत्वमितिचेन्न । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, दृश्यते त्वग्र्यया बुद्ध्येति श्रुतिव्याकोपात्, दर्शनाभावेऽनिर्मोक्षमसङ्गान्मोक्षविधायकश्रुतिव्याकोपाच्च । नन्वस्तु ब्रह्मदर्शने मनसः करणत्वं, तथापि तस्य जन्यत्वेनानित्यत्वावश्यम्भावात् । ब्रह्मसाक्षात्कारोऽनित्यः । मनोजन्यत्वात् । घटादिप्रत्यक्षवदित्यनुमानादिति चेन्न । शब्दकरणत्वेऽपि तुल्यत्वात् । ब्रह्मसाक्षात्कारो मिथ्या शाब्दज्ञानजन्यत्वात् । इदं रजतमिति वाक्यजन्यरजतज्ञानवदिति प्रयोगसाम्यात् । नच शाब्दज्ञानस्याऽऽवरणभङ्ग एवोपयोगः । दर्शनस्य स्वत एव सद्भावाभ्युपगमादिति वाच्यम् । सिद्धान्तेऽपि दर्शनप्रतिबन्धकनिवृत्तावेवोपयोगाभ्युपगमान्न तु साक्षात्कारे, तस्य प्रतिबन्धकनिवृत्तावेवोपक्षीणत्वात् । सिद्धान्ते ध्यानसन्तत्या प्रीतः श्रीपरमेश्वरः स्वसाक्षात्कारप्रतिबन्धकं नाशयित्वा स्वात्मानं च प्रकाशयति, ब्रह्मभावापत्तिं प्रापयतीति तात्पर्यार्थः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मन इत्यादिश्रुतेः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययमिति भगवदुक्तेश्च । ननु ध्यानस्य मनोनैश्चल्यपूर्वकत्वात् तस्य तु निरतिशयचञ्चलत्वात् कथं ध्यानयोगोपपत्तिरितिचेन्न । तस्य निरतिशयचाञ्चल्येऽपि अभ्यासवैराग्याभ्यां नैश्चल्यसम्भवात् । तथोक्तं श्रीमुखेन । असंशयं महाबाहो मनो दुर्निग्रहं चलम् * अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते इति । आवृत्तिरसकृदुपदेशादिति सूत्राद्वाभ्यासेन प्रतिबन्धकनिवृत्तिः । वैराग्येण च विक्षेपनिवृत्तिस्तदुभयविरोध्यभावे नैश्चल्यमिति । तत्र विरागो नाम विषयभोगेऽलम्बुद्ध्या हेयत्वनिश्चयपूर्वकविषयत्यागः । स च विषयेषु

परीक्षया दोषोद्भावनजन्यः । परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्, नास्त्यकृतः कृतेन ।

परीक्षायाश्च गुरूपदेशापेक्षत्वात् प्रथमं गुरूपासनं कार्य्यम् । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ * तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इत्यादिश्रुतेः । श्रोत्रियं शब्दब्रह्मनिष्णातम् अन्यथा शिष्यसंशयनिरासकत्वायोगात् । किञ्च, ब्रह्मनिष्ठं परब्रह्मस्वरूपगुणादिविषयकानुभूतिपूर्णम् । अन्यथा शिष्यानुभाविकत्वायोगात् । उक्तलक्षणगुरूपसत्तिर्मुमुक्षुणा कर्त्तव्येति वाक्यार्थः । गुरुश्च तस्य श्रद्धार्जवादिनिर्णयपूर्वकं परीक्षाप्रकारं तस्मा उपदिश्य ब्रह्मविद्यां दद्यात् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय * येनाऽक्षरं परमं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति श्रुतेः । विश्वासार्जवशमादिसंपन्नेन मुमुक्षुणोक्तलक्षणगुरोर्मुखाद्वेदान्तानां ब्रह्मस्वरूपगुणादिप्रतिपादनपरत्वस्य श्रवणपुटेनावधारणं श्रवणम् । श्रुतार्थस्य स्वानुभूतिविषयीकरणाय शास्त्रानुकूलयुक्तिभिरवधारणं मननम् । मननावधारितपदार्थस्य नैरन्तर्येण ध्यानविषयीकरणाय ध्यानसन्ततिर्निदिध्यासनम् । तथाभूतध्यानस्यात्यन्ताप्राप्तत्वाद् अपूर्वविधिरेवायम् । निदिध्यासितव्य इति दर्शनस्य तु, दृश्यते त्वग्र्यया बुद्ध्येत्यादिना प्राप्तत्वाद् । द्रष्टव्य इत्यनुवाद एव । तव्यप्रत्ययो योग्यार्थक एव । श्रवणमननयोस्तु ध्यानसहकारित्वात् तदङ्गत्वमिति निर्गलितार्थः । आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः * इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा । स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातु चित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः । तेषां सततयुक्तानाम् । इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु प-

रमो धर्मो यद्योगेनात्मदर्शनमित्यादिस्मृतिभ्यः। परीक्षानाम-आदावन्ते च मध्ये चानन्तविचित्रासंख्येयदुःखसन्तानस्य स्वस्मिन्नत्र जन्मनि जन्मान्तरेषु च प्रत्यक्षानुमानाभ्यां भूयोऽनुभूय शास्त्राऽनुमानाभ्यामन्येष्वपि देवतिर्यङ्मनुष्यादिवद्धक्षेत्रज्ञमात्रेषु तत्त्वाऽनुसन्धानेन तत्रालम्बुद्ध्या जिहासोत्पादनमिति यावत्। तथाहि। वर्त्तमाने जन्मनि तावदनेकदुःखानि सर्वैरप्यनुभूयन्ते इति प्रत्यक्षेण, अहं दुःखी रोगीत्यादिप्रत्ययेभ्यः,— अहं पूर्वजन्मस्वपि दुःखी अभवं, कर्मपरतन्त्रत्वादिदानीन्तनजन्मवदित्यादिप्रयोगात्। सर्वेऽपि बद्धजीवा दुःखभागिनः, कर्मपरवशत्वाद्, अस्मदादिवदित्यनुमानात्। यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते, मृत्वा पुनर्मृत्युमापद्यतेऽद्यमानः स्वकर्मभिरित्यादिश्रुतिभ्यः। आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन *। स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः। मोक्षधर्मे सुलभा — यथा जतु च काष्ठानि पांशवश्चोदविन्दवः * संश्लिष्टानि तथा राजन् प्राणिनामिह सम्भवः। अहं च त्वं च राजेन्द्र ये चाप्यऽन्ये शरीरिणः। बिन्दुन्यासादयोऽवस्थाः शुक्रशोणितसम्भवा इति।

तत्रैव भीष्मः— प्रजापतीनृषींश्चैव मार्गांश्चैव बहून् वरान् * महर्षींश्च बहून् ज्ञात्वा राजर्षींश्च परन्तप। सुरर्षीश्चार्हतश्चान्यान् ब्रह्मर्षीन् सूर्यसन्निभान्। ऐश्वर्याच्च्यावितान् दृष्ट्वा कालेन महता नृप। वैतरण्यां चापि दुःखं पतितानां यमक्षये इति। तत्रैवाजगरो मुनिः प्रह्लादं प्रति— अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः * उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते। जङ्गमस्थावराणां च भूतानाममुरााधप। पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः। अन्तरिक्षचराणां च दानवोत्तमपक्षिणाम्। उत्तिष्ठते यथाकालं मृत्युर्बलवतामपि। इतिभूतानि संपश्यन्नुपक्तानि मृत्युना। सर्वं साम्यतो विद्वान्

कृतकृत्यः सुखं स्वपे इति । तत्रैव नारदः शुकं प्रति— अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ॥ आरोग्यप्रियसंवासो गृध्येत् तत्र न पण्डितः । सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् । अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् । तस्मात् सन्तोषमेवेह धनं पश्यन्ति पण्डिता इति स्मृतिभ्यः । तथाच—

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ॥ सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तक इति शास्त्राज्जन्मसमये श्रीभगवता स्वासाधारणकारुण्यार्द्रया दृष्ट्यावलोकितः सात्त्विको जात आदितः प्रवृत्तिमार्गेऽनर्थसततिं मीमांसमानः सत्सङ्गलभ्यकथाश्रवणादिजन्यविवेको वेदोक्तस्वाधिकारधर्माऽनुष्ठानपरिशुद्धसत्त्वः परीक्षायामधिकारी ।

तथाच मोक्षधर्मे श्रीनारदः—

अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।

निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते इति । दुःखं तावत् त्रिविधं— तापजं, गर्भाद्यवस्थोद्भवं, नरकयातनोद्भवं चेति ।

तत्राद्यं त्रिविधम्—

आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । तत्राद्यं द्विविधं— शारीरं मानसं चेति । तत्र शारीरं ज्वरशूलामयपक्ष्मकुष्ठादिकरोगजं, मानसं च कामक्रोधलोभमोहासूयापमानादिजम् । द्वितीयं च मृगपक्षिमनुष्यव्याघ्रपिशाचादिजन्यं, चरमं शीतोष्णवातवर्षादिजन्यम् । तथाच वैष्णवे, आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ॥ उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयमित्यादिना तापजन्यदुःखभोगप्रकार उक्तः । अवस्थोद्भवं च, अवस्थानां बहुत्वाद् बहुविधम् । तत्र मूत्रपुरीषाऽसृक्कृमिपरिपूर्णागारे गर्भे उल्वण-

चेष्टा गुणपृथ्वीशक्तिमत्त्वाकिरणेन अङ्गमलारणाद्यभावतयान-
स्थाने शकृन्मूत्रादिपङ्कशयनम्। तत्र जायमानशतजन्मानुभूतदुःखस-
न्ततिस्मृतिजन्यं चेति । अथ जन्मावस्थे ऊर्ध्वं च प्रबलैः प्रसूतिमा-
रुतैः प्राजापत्येष्णप्रखरवायुना च पीड्यमानास्थिबन्धनेन कण्ट-
कैस्तुद्यमानेनेव क्रकचैर्विदार्यमाणेनेव, यन्त्रे निष्कृष्यमाणेनेव, पू-
तिवगात्र क्रमिणव मातृयोनेर्बहिर्मूर्च्छया धरणिपातः । शैशवाव-
स्थोद्भवं च गात्रपरिवर्तनकण्डूयनाद्यशक्तिजं परेच्छया दत्तस्तन्य-
पानादिजं अशुचिमूत्रार्द्रप्रस्तरशयनादिकं च ।

बाल्यावस्थोद्भवं च—

कोऽहं कुतः किमात्मकः, किं हेयं किमुपादेयं, किं का-
र्यं किमकार्यं वा किं वाच्यं किमवाच्यं, को धर्मः को ह्यधर्म इ-
त्याद्यज्ञानजम् । यौवनावस्थोद्भवं च— कामाहङ्कारादिव्याकुलत्या-
द्योग्यं दीप्सयाऽनेकविधारम्भजन्यं तदप्राप्त्या सन्तापादिकं च । ज-
रोद्भवं च—देहे कम्पः सर्वावयवशैथिल्यं शीर्णदशनत्वं हानिमण-
ष्टदृष्ट्यादिजन्यं नवपृष्ठमन्दजठराग्निवद्भोजनाभिलाषाल्पचेष्टा-
दिजं स्मृतयौवनावस्थाजातविलासादिकं, तत्क्षणानुभूतवस्तुस्मृतिहा-
नि पराधीनोत्थापनोपवेशनादिजं, भृत्यपुत्रादिकृतापमानजं, सर्व-
शास्त्रक्रियाहानिः विहाराहारादिबहुलस्पृहादिजन्यं स्वजनबन्धुपरिहा-
सजन्यं पूर्वानुभूतसुखैश्वर्यादिस्मृतिजन्यतापगृहीतदीर्घश्वासादिज-
न्यं मरणोन्मुखत्वेऽपि मम पुत्रादयः कथं जीविष्यन्तीति चिन्ताजात
चेति । मरणावस्थोद्भवं च वक्तुकामो वक्तुमशक्तः पुत्रादि द्रष्टुका-
मो दृष्टिहीनः श्रोतुकामः श्रोत्रहीनोऽमर्त्येयदंशवृश्चिकादि-
दश्यमान इव शरीराद्विच्छिद्यमान इव वज्रैर्विदीर्यमाण इव मूर्च्छि-
तो हस्तपादादि विक्षिपन्महद्दुर्निर्वचनीयैः क्लेशैर्नितरां दुःखमरणमिति ।
अथ तृतीयम्— आदौ यमनरकयातनासमानि नरकाणां दर्शनात्, ततः

पाशानन्धनभत्र उल्कावह्नि रज्जुशस्त्रादिभिर्ज्वलितमार्गगमनञ्जातम् । तत्र कुठारैः कृन्तनं, तप्तभूमिनिखननशूलारोपणव्याघ्रादिमुखप्रवेशनगृध्रादिभक्षणतैलनलकाथनक्षारकर्दमपातनादिजं तमिति सङ्क्षेपः ॥

किञ्च, पुनश्च गर्भे पतति जायते च पुनः पुनरिति शास्त्रात् पुनर्गर्भप्रवेशादिकं च संसारचक्रभ्रमणजं दुःखदुरन्तानन्तम् । तच्च गर्भोपनिषदि पुराणादिषु च प्रसिद्धम् ।

तेषु कानिचिद्बाल्यादिसमयेऽनुभूतानि स्मृत्याऽवगन्तव्यानि । कानिचिच्चानुमानादिभिः स्वस्यापि पुत्रपित्रादिदृष्टान्तैर्जन्ममरणादिदुःखभोगानुभवं निश्चिनुयात् ।

अहमपि जन्मादिजं दुःखं ह्यनुभवं, कर्माधीनत्वात् । मम पुत्रादिवत् । ममापि मरणदुःखमवश्यं भावि, कर्मपारवश्याज्जन्मवत्त्वाच्च । अस्मत्पितृपितामहादिवत् । ममाप्यैश्वर्यं नाशि, कर्मजन्यत्वात् । दुर्योधनाद्यैश्वर्यवत् । ममापि जरादिदुःखमवश्यं भावि, कर्मपारतन्त्र्यात् । मम पितामहादिवदित्यादिभिः । परीक्षाप्रकारश्च भीष्मेण स्पष्टमुक्तः । गजेन कश्चित् पुरुषः कानने समभिद्रुतः * जिघांसाभयसन्त्रस्तः प्रविवेश महद्वनम् । अथ पश्यति तत्रस्थं सिंहयूथमवास्थितम् । तं दृष्ट्वा स निवर्त्तेन दिशामन्यामथाव्रत । तत्रापश्यत् खड्गहस्तां भीमकन्यां च दारुणाम् । आधावन्तीमभिमुखं तिष्ठतिष्ठेति चाऽब्रवीत् । तां दृष्ट्वा स निवर्तित्वा दिशामन्यामधावत । तस्यामपश्यत् तत्रस्थं प्रदीप्तं वनं वह्निना । स तत्र चिन्तयामास अहो कष्टमवस्थितम् । इतो गज इतः सिंह इतः कन्या ततो दव । निराशो जीविते प्राप्तस्तत्र कूपमपश्यत । कक्षायतनमत्यन्तमन्धकारमनन्तकम् । स तत्र कूपे पुरुषः पपात भयपीडितः । अधस्तात् वीक्ष्य पतस्तत्र सर्पं क्रूरं ददर्श । जृम्भमाणं घोरास्य धरमन्तं लेलिहाननम् । वल्लीमादाय राजेन्द्र तत्रे-

ऽतिष्ठदधोमुखः । अलाबुरिव तत्रासौ तस्यां वल्ल्यां प्रलम्बितः ।
तस्या वल्ल्यास्तु मूलानि व्यच्छिनत्तत्र मूषकः । उपद्रवास्तु तत्रा-
ऽन्ये दंशाका मत्कुणादयः । तत्राप्यन्यद्रसोत्पन्नं क्षौद्रं मधुकराहृ-
तम् । तत्तं तच्चाल्यमानं तु घृष्यमाणमभिद्रुतम् । अपिबन्मधु तत्र-
स्थं पतितं तस्य मूर्द्धनि । पतितं मस्तके तस्य मधु तन्मुखमाविश-
त् । पतितं मस्तके सर्वमपिबत् स पिपासितः । यथा स पुरुषो
वत्स घोरे वर्त्तते सङ्कटे । तथा शरीरिणः सर्वे घोरे वर्तन्ति संश-
ये । अथाऽस्यार्थः । योऽसौ गजो महावीचिर्विद्धि देहि हिताहि-
तम् * सिंहान् भोगान् विजानीहि विहाराहारसम्भवान् । असि-
हस्ता तु या कन्या सा जरा दुरतिक्रमा । यो दावाग्निः स शो
को वै लोभमोहभवाश्रयः । कूपस्तु मानुषो लोकः कालो जगदुप-
द्रवः । आयुर्वल्ली तथा प्रोक्तं मूषको मृत्युरुच्यते । योऽसौ कूप-
तले सर्पः स भयः काल उच्यते । कामं मधुरसं विद्धि संशयो ना-
ऽत्र विद्यते । मधुनश्चाऽपि यत्स्वाद्यं कामस्वाद्यो हि स स्मृतः ।
एवं श्रुतगुणो वत्स धर्मोत्कृष्टमतिर्भवेत्यादिभिः । मोक्षधर्मे श्रीसन-
त्कुमारः– सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः * येन सर्वं
परित्यक्तं स विद्वान् [redacted] च पण्डितः । अस्थिस्थूणं स्नायुयुतं मांस-
सशोणितलेपनम् । चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः । जरा-
शोकसमाविष्टं पञ्चानिलसमन्वितम् । रजस्वलमिमं नित्यं भूतावा-
समिमं त्यजेत्यादि । वैष्णवे च– गर्भो विलीयते भूयो जायमा-
नोऽस्तमेति च * म्रियते जातमात्रश्च बालभावेऽथ यौवने । म-
ध्यमं वा वयः प्राप्य वार्द्धके वा ध्रुवा मृतिः । यावज्जीवति ता-
वच्च दुःखैर्नानाविधैः प्लुतः । द्रव्यनाशे तथोत्पत्तौ पालने च त-
था नृणाम् । भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु । यद्यत्प्रीतिकरं
पुंसां वस्तु मैत्रेय जायते । तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ।

कलत्रपुत्रभृत्यादिगृहक्षेत्रधनादिकैः । क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखमित्यादिना इत्येवं शास्त्राचार्योपदेशेन परीक्ष्यमाणस्य पुंसो विरागो जायते एव । तथाचाभ्यासविरागाभ्यां मनोनैश्चल्ये सिद्धे निदिध्यासनमुपपद्यत इति भावः ॥ २४ ॥

इति श्रीहयग्रीवानुग्रहलब्धविवेकेन श्रीमन्नियमानन्दा-
ऽनुयायिना श्रीपुरुषोत्तमप्रसादेन विरचिते
सविशेषनिर्विशेषश्रीकृष्णस्तवव्याख्याने
श्रुत्यन्तसुरद्रुमे
ध्यानस्यान्तरङ्गत्वनिर्णयशाखा एकोनविंशी ॥ १९ ॥



ऽतिष्ठदधोमुखः । अलाबुरिव तत्रासौ तस्यां वल्ल्यां मलम्बितः । तस्या वल्ल्यास्तु मूलानि व्यच्छिनत्तत्र मूषकः । उपद्रवास्तु तत्राऽन्ये दंशाका मत्कुणादयः । तत्राप्यन्यद्रसोत्पन्नं क्षौद्रं मधुकरावृतम् । तत्तं तच्चाल्यमानं तु घृष्यमाणमभिद्रुतम् । अपिबन्मधु तत्रस्थं पतितं तस्य मूर्द्धनि । पतितं मस्तके तस्य मधु तन्मुखमाविशत् । पतितं मस्तके सर्वमपिबत् स पिपासितः । यथा स पुरुषो वत्स घोरे वर्त्तति सङ्कटे । तथा शरीरिणः सर्वे घोरे वर्तन्ति संशये । अथाऽस्यार्थः । योऽसौ गजो महावीचिर्विद्धि देहि हिताहितम् * सिंहान् भोगान् विजानीहि विहाराहारसम्भवान् । असिहस्ता तु या कन्या सा जरा दुरतिक्रमा । यो दावाग्निः स शोको वै लोभमोहभवाश्रयः । कूपस्तु मानुषो लोकः कालो जगदुपद्रवः । आयुर्वल्ली तथा मोक्तं मूषको मृत्युरुच्यते । योऽसौ कूपतले सर्पः स भयः काल उच्यते । कामं मधुरसं विद्धि संशयो नाऽत्र विद्यते । मधुनश्चाऽपि यत्स्वाद्यं कामस्वाद्यो हि स स्मृतः । एवं श्रुतगुणो वत्स धर्मोत्कृष्टमतिर्भवेत्यादिभिः । मोक्षधर्मे श्रीसनत्कुमारः— सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः * येन सर्वं परित्यक्तं स विद्वान् स च पण्डितः । अस्थिस्थूणं स्थूणयुतं मांसशोणितलेपनम् । चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः । जराशोकसमाविष्टं पञ्चानिलसमन्वितम् । रजस्वलमिमं नित्यं भूतावासमिमं त्यजेत्यादि । वैष्णवे च— गर्भो विलीयते भूयो जायमानोऽस्तमेति च * म्रियते जातमात्रश्च बालभावेऽथ यौवने । मध्यमं वा वयः प्राप्य वार्द्धके वा ध्रुवा मृतिः । यावज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः । द्रव्यनाशे तथोत्पत्तौ पालने च तथा नृणाम् । भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु । यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते । तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ।

राकाङ्क्षया।दित्यलं विस्तरेण। अथ ब्रह्मस्वरूपगुणादिविषयकनिदिध्यासनफलरूपा द्वितीया अपुनरावृत्तिलक्षणाऽर्चिरादिरूपा। सापि श्रीपुरुषोत्तमकृपाकटाक्षावलोकितानिवृत्तिमार्गनिष्ठं, स्वोचिताऽधिकारानुरूपतदर्पितनिष्कामधर्माऽनुष्ठानप्रीणितश्रीपुरुषोत्तमप्रसादजन्यशुद्धसत्त्वं श्रीगुरुप्रसादजन्यविवेकनिरस्तसर्वसंशयविपर्ययादिकं पूर्वोक्तविवेकजन्यविरागाभ्यासभूषितं निदिध्यासनपरायणं चरमजन्मानमधिकृत्य विधीयते। अथ य दु वै वास्मिञ्छव्यं कुर्वन्ति यद्व नार्चिषमाभिसम्भवन्ति। अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति तान्मासान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति, एष देवपथो ब्रह्मपथ, एतेन प्रतिपद्यमाना इम मानवावर्त्तं नावर्तन्ते न स पुनरावर्तते इत्यादिश्रुते। अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥ तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते। मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मनः संसिद्धिं परमां गता इति श्रीमुखोक्तश्च। अत्र परैः स्वबुद्ध्युत्प्रेक्षितानुपपत्तयः पूर्वोक्ता निरस्ताः। अथोभयोर्मार्गोक्ताचारशून्य तद्विरुद्धाचारिण विहितधर्मत्यागिनमधिकृत्य विधीयमाना नरकरूपा गतिस्तृतीया। अथैतयोः पथोर्न कतरेण तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीय स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत। तदेष श्लोकः— स्तेनो हिरण्यस्य सुरां पिबश्च गुरोस्तल्पमावसन् ब्रह्महा च ॥ एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः। अयं लोको नास्ति न पर इति मानी पुनः पुनर्वशमापद्यते मे। यमं वैवस्वतं संगमनं जनानां यमं राजानमित्यादिश्रुतेः। सर्वे चैते वशं यान्ति यमस्य भगवन् किल ॥। माय-

## अथ शाखा विंशी ।

---

अथ गतिस्तावत् त्रिधा— पुनरावृत्त्यपुनरावृत्तिनारकिभेदात् । तत्राद्या पुण्यात्मकर्मफलरूपा धूममार्गगतिः । तथाहि । स्वर्गकामो यजेतेत्यादिना सकाममधिकृत्य विधीयमानानां सुकर्मणां पुनरावृत्तिलक्षणं स्वर्गाद्येव फलम् । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति, धूमाद्रात्रिं, रात्रेरपरपक्षमपरपक्षाद्यान् षड् दक्षिणैति मासांस्तानेति संवत्सरमभिमाप्नोति मासेभ्यः पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वाऽथैतमध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति इह व्रीहिर्वा यवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते माप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोति यः, तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे पशुरेव स देवानामित्यादिश्रुतेः । धूमो रात्रिस्तथा कृष्णः । षण्मासा दक्षिणायनम् * तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेत्यादिस्मृतेश्च । ननु, अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपामसोमममृता अभूम, यत्र नोष्णं नच शीतं स्यान्न ग्लानिर्नाप्यरातय इत्यादिभिस्तस्याप्यक्षयत्वप्रतिपादनात् कथं तस्य नाशयोग उच्यते इतिचेन्न । यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते इत्यादिभिर्बाधात् । नचोक्तश्रुतिविरोधस्तत्रापि समान इति वाच्यम् । निषेधवाक्यस्य प्राबल्यात् तर्कसहकृतत्वाच्च । नच तथापि श्रुतिबाधस्तत्राप्यनिष्टो वैदिकत्वादिति वाच्यम् । तासां स्वर्गादिफलप्राशस्त्यबोधकत्वेन नै-

राकाङ्क्षया।दित्यलं विस्तरेण । अथ ब्रह्मस्वरूपगुणादिविषयकनिदिध्यासनफलरूपा द्वितीया अपुनरावृत्तिलक्षणाऽर्चिरादिरूपा । सापि श्रीपुरुषोत्तमकृपाकटाक्षावलोकितनिवृत्तिमार्गनिष्ठं, स्वोचिताऽधिकारानुरूपतदर्पितनिष्कामधर्माऽनुष्ठानप्रीणितश्रीपुरुषोत्तमप्रसादजन्यशुद्धसत्त्वं श्रीगुरुप्रसादजन्यविवेकनिरस्तसर्वसंशयविपर्ययादिकं पूर्वोक्तविवेकजन्यविरागाभ्यासभूषितं निदिध्यासनपरायणं चरमजन्मानमधिकृत्य विधीयते । अथ य इ वै चास्मिञ्छवं कुर्वन्ति यदु नार्चिषमभिसंभवन्ति । अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण।पक्षाद्यान् षडुदङ्ङेति तान्मासान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति, एष देवपथो ब्रह्मपथ, एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते न स पुनरावर्तते इत्यादिश्रुते । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् * तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मनः संसिद्धिं परमां गता इति श्रीमुखोक्तश्च । अत्र परैः स्वबुद्ध्युत्प्रेक्षितानुपपत्तयः पूर्वेण निरस्ताः । अथोभयोर्मार्गोक्ताचारशून्य तद्विरुद्धाचारिणं विहित कर्मत्यागिनमधिकृत्य विधीयमाना नरकरूपा गतिस्तृतीया । अथैतयोः पथोर्न कतरेण तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीय स्थानं तेनासौ लोको न सपूर्यते तस्माज्जुगुप्सेत । तदेष श्लोकः— स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा च * एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः । अयं लोको नास्ति न पर इति मानी पुनः पुनर्वशमापद्यते मे । यम वैवस्वत संयमनं जनाना यम राजानमित्यादिश्रुतेः । सर्वे चैते वशं यान्ति यमस्य भगवन् किल * । माम-

मामेव कौन्तेय ततो यान्त्यधमां गतिमिति स्मृतेश्च । एतास्तिस्रोऽपि मानुष्यजन्मनैव साध्याः । तस्मान्मानुष्ये चात्रिस्तत्रात्मा स हि विज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति श्वस्तनं वेद लोकालोकौ मर्त्येनाऽमृतत्वमीप्सत्येवेत्यादि । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम * कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयादितिश्रुतिस्मृतिश्लाघितं मानुष्यं लब्ध्वा श्रेयसे यतेतेति तात्पर्यार्थं उभयमार्गभ्रष्टाञ्निरयाधिकारिणः शोचन्निन्दयँश्चाह ।

प्राप्य जन्म यदि मानुषं नरः
सेवते न तव पादपङ्कजम् ॥
धिक् च जन्मकुलमादिदेव तद्
यौवनादि सकलं न शोभते ॥ २९ ॥

प्राप्य जन्मेति ॥ हे आदिदेव ॥ देवानां ब्रह्मरुद्रादीनाम् आदिः कारणम् । स चासौ देवश्च तथोक्तः । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते इत्यादिश्रुतेः । यो नरो मानुषं जन्म प्राप्य तव पादपङ्कजं न सेवते तस्य जन्मादिधिगित्यन्वयः । अत्र, नर इति सामान्यशब्दप्रयोगात् सर्वेषामपि भगवदाराधनेऽधिकारं सूचयञ्जात्यादिविशेषं वारयति स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति श्रीमुखेनापि, मानव इति सामान्यवचनप्रयोगात् । त्वत्पादसेवने जात्यादिनियमो वारितः । मानुषं पूर्वं श्रुतिस्मृतिमुखेन श्लाघितं यदृच्छया भगवत्प्रसादेन माप्य लब्ध्वा । तवेति जगज्जन्माद्यभिन्ननिमित्तोपादानकारणस्य शास्त्रैकप्रमाणवेद्यस्य मुक्तोपसृप्यस्य नित्यजननानित्यसेवितस्य मुमुक्षुध्यानविषयस्य सार्वज्ञवात्सल्यादिस्वाभाविकानन्ताचिन्त्यगुणगणार्णवस्य श्रीपगन्धाऽम्र.तमाहात्म्यस्य श्रीदामविप्रमित्रस्य पार्थ-

सारथेर्गोपीजनमनोहरस्य रमानिवासस्य सत्यभामावक्रोक्तिश्रवणोत्सवस्य ब्रह्मरुद्रादिनिकायकिरीटकोटीडितपादपीठस्य श्रीमुकुन्दस्य भगवतस्तवेति यावत्। पादपङ्कजमिति पङ्कजशब्दो निरतिशयसौन्दर्यसौकुमार्यलावण्यमाधुर्यसौगन्ध्यसौरस्यसुस्पर्शत्वाऽऽदिगुणद्योतनार्थः। एवञ्चोक्तगुणाश्रयं, ब्रह्मादिवन्दितं, कमलाभिलालितं, गोपीकटाक्षार्चितं, तृणचरानुगं, परमयोगिहृत्पङ्कजमध्यगं, प्रपन्नसंरक्षणलब्धदीक्षकं, स्वजनैकजीवनं, मुमुक्षुध्येयं, ध्यातृभीष्टफलदानाध्यक्षं, गङ्गादिसर्वतीर्थास्पदं, ब्रह्मादिश्वपाकान्तस्य सामान्यतः शरण्यं, संसारसागरस्य पोतं, भक्ताभिलषितपरिपूरणाय निबद्धकक्षमिति यावत्॥ न सेवते इति॥ सर्वपुरुषार्थसाधनसाध्यतयाऽवश्यार्थे आत्मात्मीयार्पणसंप्रदानतया नाभ्युपगम्यते, तत्तस्येति पूर्ववत् सामान्यप्रयोगात् सर्वमनुष्यत्वावच्छिन्नग्रहणार्थः। उत्तममध्यमादिकुलोद्भवस्य यस्य कस्य चेति यावत्। धर्मबाह्यस्यासुरभावमाश्रितस्य दुष्कृतपुञ्जवतः पाप्मनो मनुष्यमात्रस्येत्यर्थः॥ जन्मेति॥ शौक्रं, सावित्र्यं, दैक्ष्यं त्रिविधमपि धिक्, निरत्ययनिन्दास्पदमिति। तत्र शौक्रम् ऋष्यादिशुक्रोद्भवं, सावित्र्यम् उपनयनसंस्कारजं, दैक्षं यज्ञादिदीक्षोद्भवमिति विवेकः। कुलमिति ब्राह्मणादिवैदिकवर्णपरम्पराप्राप्तं धिक्कारास्पदं महन्निन्दागोचरमित्यर्थः। अत एव, न शोभत इति॥ शवालङ्कारादिवन्न केवलं जन्मादिकं धिक्कारास्पदम्, अपि तु, यौवनादि सकलमपीति॥ यौवनस्य सर्वास्ववस्थासु श्रेष्ठत्वात् तस्य ग्रहणं सर्वावस्थोपलक्षणार्थम्। तस्य सर्वा अप्यवस्थाः शवशोभना इत्यर्थः। आदिशब्देन तस्य तेजोवीर्यबलादयो गृह्यन्ते। सकलशब्दो लौकिकवैदिकक्रियासंग्रहार्थः। चकारः क्रियाहेतुभूतज्ञानशक्तिचक्षुरादीन्द्रियपाटवादिग्रहणाऽर्थः। तस्य तेजोबलप्रभृ-

तयो लौकिकवैदिकाः क्रियाज्ञानचातुर्यवैभवादयश्च सर्वैर्निन्द्यत्वात् शवशोभना एव । भगवद्बहिर्मुखत्वेन संसारचक्रभ्रमणहेतुत्वाद् धिक्कारविषयत्वाच्च । न चेदवेदीन्महती विनष्टिः, असुर्या नाम ते लोका अन्धेन तमसा वृताः * तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः, न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव, नीहारेण प्रावृता जल्प्याश्चासुतृप उक्थशासश्चरन्ति स्वकर्मणा जायते तत्र तत्र मृत्वा पुनर्मृत्युमापद्यतेऽद्यमानः स्वकर्मभिः, अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितं मन्यमानाः, जङ्घन्यमाना आपि यन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धा इत्यादिश्रुतिभ्यः । न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः * मायापहृतज्ञाना आसुरं भावमाश्रिताः । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । शोचनीयः स बन्धूनां जीवन्नपि मृतो नरः * यः पादपङ्कजं विष्णोर्न पूजयति भक्तितः । किं जपैस्तस्य मन्त्रैर्वा किं तपोभिः किमाश्रमैः । यस्य नास्ति परा भक्तिः सततं मधुसूदने । वृथा व्रतं वृथा यज्ञा वृथा वेदा वृथा श्रुतम् । वृथा तपश्च कीर्तिश्च यो द्वेष्टि मधुसूदनमिति वामनपुराणे । भारते—

कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः । जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचनेत्यादिस्मृतेश्च । यस्माद्भगवद्बहिर्मुखस्य जन्मकुलज्ञानक्रियादिकं सर्वं शवशोभनं धिक्कारास्पदं च तस्माच्छ्रुतिनिषिद्धाचारं निरयप्राप्तिहेतुं त्यक्त्वा तद्वत् काम्यानामपि संसारचक्रभ्रमणहेतुत्वसाम्यात्, सर्वे पाप्मानः प्रदूयन्त इत्यादिवाक्येषु पुण्य-

स्यापि पापराशौ निवेशितत्वेनाम्नानाच्च तदपि निषिद्धवत् त्यक्त्वा श्रेयसे यतमानैः श्रीभगवत्पदारविन्दावेव सेवनीयाविति वाक्यार्थः । या वै साधनसंपत्तिः पुरुषार्थचतुष्टये * तया विना तदाप्नोति नरो नारायणाश्रय इति शास्त्रादसौ श्रेयसां सिद्धिरित्यवगम्यते । यमेवैष वृणुते तेन लभ्यः, तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् । ध्यायेद् दामोदरं यस्तु भक्तिनम्रोऽर्चयेन्नरः * न स संसारगर्तेऽस्मिन् मज्जते दानवेश्वर । कल्यमुत्थाय ये भक्ताः स्मरन्ति मधुसूदनम् । स्तुवन्ति अपि शृण्वन्तो दुर्गाण्यतितरन्ति ते । अनन्यमनसो भक्ता ये नमस्यन्ति केशवम् । शुचयस्ते महात्मानस्तीर्थीभूता भवन्ति ते । येनाऽर्चितो हि भगवाँश्चतुर्बाहुस्त्रिविक्रमः । तेनाऽर्चिता न संदेहो लोकाः सामरदानवाः । माप्नुवन्ति न ताँल्लोकान् यतिनो वा तपस्विनः । प्राप्यन्ते ये तु कृष्णस्य नमस्कारपरैर्नरैरिति वामनपुराणे चेत्यादिश्रौतस्मार्तवाक्येभ्यः । अथोक्तविवेकजन्यविरागसंपन्नो विश्वामाऽऽर्जवादिभूषणो हरिगुरुभक्तिपरायणो भगवद्भावापत्तिकामो जिज्ञासुरत्राधिकारी । परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् । यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इत्यादिश्रुतेः । अशेषदोषासंस्पृष्टमाहात्म्योऽचिन्त्यानन्तस्वाभाविकासंख्यातगुणगणार्णवो ब्रह्मरुद्रादिगुरुर्जगज्जन्मादिहेतुर्भगवाञ्छ्रीमुकुन्दोऽस्य विषयः । सर्वे वेदा यत्पदमामनन्ति, तं त्वौपनिषदं पुरुषं पृच्छामः, वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्, शास्त्रयोनित्वादित्यादिशास्त्रात् । भगवद्भावापत्तिलक्षणो मोक्षः प्रयोजनम् । परमं साम्यमुपैति, तन्महिमानमिति वीतशोको धातुः प्रसादादिति श्रुतेः । एता मद्भावमाग-

तां। मन्नक्त एतद्विज्ञाय मन्नावायोपपद्यते इत्यादिस्मृतेश्च। प्रतिपाद्यप्रतिपादकभावः संबन्धः। तत्तु समन्वयात्। नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वतीत्यादिशास्त्रादस्याऽनुबन्धचतुष्टयं बोध्यम्॥ २८॥

अथाऽस्य ग्रन्थस्य सूचनिकाश्लोकाः-

श्रुत्यन्तसुरद्रुमेऽस्मिन् विशच्छाखाः प्रकीर्तिताः॥
तत्रादौ लक्षणं प्रोक्तं ब्रह्मणः परमात्मनः॥ १॥
द्वितीयायां तु वाक्यस्य सविशेषेतरस्य च॥
अविरोधप्रकारार्थः प्रमाणेन निरूपितः॥ २॥
शरणागतियोगस्तु तृतीयायामुदाहृतः॥
तुरीयायां नेति नेतीत्यादीनामर्थसङ्ग्रहः॥ ३॥
पञ्चम्यां तत्त्वमस्यादिवाक्यार्थः समुदाहृतः॥
षष्ठयां श्रीहरिजन्मादेर्दिव्यत्वं प्रतिपादितम्॥ ४॥
प्रसक्ततत्त्वं ततः प्रोक्तं सप्तम्यां श्रुतिमानतः॥
अष्टम्यां पद्धतिः प्रोक्ता भगवत्प्राप्तिहेतुका॥ ५॥
नवम्यां च फलं प्रोक्तं शास्त्रमानेन तत्त्वतः॥
समन्वयो हरौ प्रोक्तो दशम्यां विधिपूर्वकः॥ ६॥
कुयुक्तीनां निरासश्च ह्येकादश्यां समासतः॥
द्वादश्यां च हरेर्धामनिर्णयः श्रुतिमानतः॥ ७॥
त्रयोदश्यां भक्तियोगः प्रोक्तः कृष्णवशीकरः॥
ततः प्रमाणप्राबल्यं चतुर्दश्यामुदाहृतम्॥ ८॥
भगवद्ध्याननिष्ठानामौत्कर्ष्यं च ततः परम्॥
पञ्चदश्यां च षोडश्यामद्वयार्थो निरूपितः॥ ९॥
दृष्टिसृष्टिनिरासश्च सप्तदश्यां प्रमाणतः॥

आश्रयत्वं गोचरत्वमज्ञानस्य यदीरितम् ॥ १० ॥
अष्टादश्यां तन्निरस्तं ब्रह्मणः शास्त्रमानतः ॥
ऊनाविंश्यां च ध्यानस्य ह्यन्तरङ्गत्वमीरितम् ॥ ११ ॥
चरमायां सदा सेव्यं कृष्णपादाऽम्बुजं नरैः ॥
व्यतिरेकमुखेनोक्तं निन्दया विमुखस्य वै ॥ १२ ॥
एवं सूचनिका ज्ञेया शाखानां च विवेकतः ॥
विशेषस्तत्र तत्रैव द्रष्टव्यस्तद्यथेरित इति ॥ १३ ॥

इति सूचनिका ॥

आद्याचार्यपदाऽम्भोजस्मरणोद्बुद्धबुद्धिना ॥
तत्प्रसादैककामेन कृतोऽयं शास्त्रसङ्ग्रहः ॥ १ ॥
श्रीनिवासप्रसादार्थं तुष्ट्यर्थं च विवेकिनाम् ॥
मन्दानामुपकारार्थं सफलः स्यादयं श्रमः ॥ २ ॥
गुरुवक्त्रसरोजस्य श्रुतिसाराऽम्बुजस्य च ॥
मकरन्दमिदं पुण्यं सदा सेव्यं मुमुक्षुभिः ॥ ३ ॥
यः सेवते सारमिदं श्रुतीनां परं रहस्यं गुरुवक्त्रगम्यम् ॥
विधूतकर्माशयपङ्कलेपः परात् परं तन्महिमानमेति ॥ ४ ॥
नियमेन यतः सर्वमानन्देनाततं जगत् ॥
तमहं नियमानन्दं परमात्मानमाश्रये ॥ ५ ॥
अस्पृष्टदोषमाहात्म्यं कल्याणगुणसागरम् ॥
नमामि श्रीहयग्रीवं परविद्याप्रदं शुभम् ॥ ६ ॥
श्रीकृष्णं रुक्मिणीकान्तं गोपिकाकण्ठभूषणम् ॥
मुकुन्दं ब्रह्मरुद्रादिवंद्यं वन्दे व्रजोत्सवम् ॥ ७ ॥
श्रीहयग्रीव ज्ञानाब्धे वात्सल्यादिगुणाकर ! ॥
प्रपन्नजनसन्त्राणबद्धकक्षाऽव मां गुरो ॥ ८ ॥

श्रीश्रीनिवासपादाऽब्जं मङ्गलं मङ्गलायनम् ॥
स्वाश्रितार्त्तिहरं पुण्यं प्रजामि शरणं गुरुम् ॥ ९ ॥

इति श्रीहयग्रीवानुग्रहैकसेवकेन श्रीनियमानन्दाऽनुयायिना
श्रीपुरुषोत्तमप्रसादाख्येन वैष्णवेन विरचिते
सविशेषनिर्विशेषश्रीकृष्णस्तव-
व्याख्याने श्रुत्यन्तसुरद्रुमे
चरमा शाखा ॥ २० ॥
समाप्तोऽयं ग्रन्थः ॥